

# अर्हम् ॥ ओं नमः श्रीसरस्वत्यै ॥

सकलार्थशास्त्रसारं । जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिर् एतच् । चकार सुमनोहरं शास्त्रम् ॥ १ ॥ ār

तद् यथानुश्रूयते । अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र सकलार्थशास्त्रविशारदः प्रवरनृपमुकुटमणिमरीचिचयचर्चितचरणः सकलकलापारं गतो ऽमरशक्तिर् नाम राजा बभूव । तस्य च त्रयः पुत्राः परमदुर्मेधसः । वसुशक्तिः । उग्रशक्तिः । अनन्तशक्तिश् चेति बभूवुः । अथ तान् शास्त्रविमुखान् समालोक्य स राजा सचिवान् आहूय प्रोवाच । भोः । ज्ञातम् एतद् भवद्भिः । यन् ममैते पुत्राः शास्त्रविमुखा विवेकरहिताः । तद् एतान् पश्यतो मे हतकण्टकम् अपि राज्यं न सौख्यम् आवहति । अथवा साध्व् इदम् उच्यते ।

अजातमृतमूर्खेभ्यो । मृताजातौ सुतौ वरम् ।
यतस् तौ स्वल्पदुःखाय । यावज्जीवं जडो दहेत् ॥ २ ॥

तथा च । किं तया क्रियते धेन्वा । या न सूते न दुग्धदा ।
को ऽर्थः पुत्रेण जातेन । यो न विद्वान् न भक्तिमान् ॥ ३ ॥

तद् एषां बुद्धिप्रबोधनं यथा भवति । तथा केनाप्य् उपायेनानुष्ठेयम् । इति । अत्रैकैकशः प्रोचुः । देव । द्वादशभिर् वर्षैस् तावद् व्याकरणं श्रूयते । तद् यदि कथम् अपि ज्ञायते । ततो धर्मार्थशास्त्राणि ज्ञायन्ते । ततो बुद्धिप्रबोधनं भवति । अथ तन्मध्यतः सुमतिनामामात्यः प्राह । देव । अशाश्वतो ऽयं जीवविषयः । प्रभूतकालज्ञेयानि शब्दशास्त्राणि । तत् संक्षेपमात्रं किंचिद् एतेषां प्रबोधनार्थं चिन्त्यताम् । इति । उक्तं च । यतः ।

अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर् बहवश् च विघ्नाः ।
यत् सारभूतं तद् उपासनीयं
हंसैर् यथा क्षीरम् इवाम्बुमध्यात् ॥ ४ ॥ upa

तद् अत्रास्ति विष्णुशर्मा नाम ब्राह्मणो ऽनेकशास्त्रसंसिद्धिलब्धकीर्तिः । तस्मै समर्पयैतान् ।

स नूनं द्राक् प्रबुद्धान् करिष्यति । सो ऽपि राजा तद् आकर्ण्य विष्णुशर्माणम् आहूय प्रोवाच । भो भगवन् । मदनुग्रहार्थम् एतान् कुमारान् अर्थशास्त्रं प्रति यथानन्यसदृशान् विदधासि । तथा कार्यम् । अहं त्वां शासनशतेन नियोजयिष्यामि । अथ विष्णुशर्मोत्तरं राजानम् ऊचे । देव । श्रूयतां मे तथ्यवचनम् । नाहं विद्याविक्रयं करोमि शासनशतेन । एतान् पुनर् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि । ततः स्वनामपरित्यागं करोमि । किं बहुना । श्रूयतां ममैष सिंहनादः । नाहम् अर्थलिप्सुर् ब्रवीमि । न च मे ऽशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य किंचिद् अर्थेन प्रयोजनम् । किं तु त्वत्प्रार्थनासिद्ध्यर्थं सरस्वतीविनोदं करिष्यामि । तल् लिख्यताम् अद्यतनो दिवसः । यद्य् अहं षण्मासाभ्यन्तरे तव पुत्रान् नीतिशास्त्रं प्रत्य् अनन्यसदृशान् न करोमि । ततो ऽर्हति मे देवो देवमार्गं संदर्शयितुम् । इति ।

एतां ब्राह्मणस्यासंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवो राजा विस्मयान्वितस् तस्मै कुमारान् समर्प्य परां निर्वृतिं जगाम । विष्णुशर्मापि तान् आदाय स्वगृहं गत्वा तदर्थं मित्रभेदः । मित्रसंप्राप्तिः । काकोलूकीयम् । लब्धप्रणाशम् । अपरीक्षितकारिता । इति पञ्च तन्त्राणि रचयित्वा पाठितास् ते राजपुत्राः । ते ऽपि तान्य् अधीत्य मासषट्केन यथोक्ताः संजाताः । ततः प्रभृत्य् एतत् पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम् । किं बहुना ।

यो ऽत्रैतत् पठति प्रायो । नीतिशास्त्रं शृणोति वा ।
न पराभवम् आप्नोति । स शक्राद् अपि कर्हिचित् ॥ ५ ॥

॥ कथामुखम् एतत् ॥



अथा॒तः प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् । यस्या॒यम् आद्यः श्लोकः ।

वर्धमानो महान् स्नेहः । सिंहगोवृषयोर् वने ।
जम्बुकेना॒तिलुब्धेन । पिशुनेन विनाशितः ॥ १ ॥

ाद् यथा श्रूयते । दाक्षिणात्येषु जनपदेषु पुरंदरपुरस्पर्धि सर्वगुणसंपन्नं पृथिव्याश् चूडाम-णिरत्नभूतं कैलासशिखराकृति विविधयन्त्रप्रहरणाचरणपरिपूर्णगोपुराट्टालकं विसंकटो-कटदृढपरिघकपाटतोरणार्गलोपगतेन्द्रकीलविपुलद्वारं सुविहितशृङ्गाटकचतुष्पथप्रतिष्ठि-तानेकदेवतायतनं परिखा*परिकरितोच्छ्रितहिमगिरिसदृशाकारप्राकारवलयपरिवेष्टितं महिलारोप्यं नाम नगरम् । तत्रा॒नेकगुणसमूहो जन्मान्तरधर्मोपार्जनावाप्तधनसमूहो वर्धमाननामा सार्थवाहः प्रतिवसति स्म । अथ कदाचिच् चिन्तयतो ऽर्धरात्रवेलायाम् ईदृशं तस्य चित्तम् अभूत् । यथा । प्रभूतो ऽपि संचितो ऽर्थः प्रविच्यमानो ऽञ्जनम् इव क्षीयते । स्वल्पो ऽपि संचीयमानो वल्मीकवद् वर्धते । अतः प्रभूतेना॒पि द्रव्येण तस्यै॒व वृद्धिः करणीया । अलब्धा अर्था लभ्याः । लब्धाः परिरक्षणीयाः । रक्षिता विवर्धनीयाः पात्रे संपादनीयाश् च । इति । लोकमार्गेणा॒पि रक्ष्यमाणो ऽर्थो बहूपद्रवतया सद्यो विनश्येत् । अप्रयुज्यमानः प्रयोजनोत्पत्तौ तुल्यो ऽप्राप्तस्य । इति । ततः प्राप्तस्य सतो रक्षणविवर्धनोपयोगादि कार्यम् । उक्तं च ।

उपार्जितानाम् अर्थानां । त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां । परीवाह इवा॒म्भसाम् ॥ २ ॥
अर्थैर् अर्था निबध्यन्ते । गजैर् इव महागजाः ।
न ह्य् अनर्थवता शक्यं । वाणिज्यं कर्तुम् ईहया ॥ ३ ॥
दैववशाद् उपपन्ने । सति विभवे यस्य ना॒स्ति भोगेच्छा ।
न च परलोकसमीहा । स भवति धनपालको मूर्खः ॥ ४ ॥

एवं संप्रधार्य मथुरागामीनि सारभाण्डानि समाहृत्य सपरिजनः शुभे नक्षत्रे शुभायां तिथौ गुरुजनानुज्ञातः स्वजनैर् अनुव्रज्यमानः शङ्खतूर्यनिर्घोषेणा॒ग्रतः क्रियमाणेन नगरान् निःसृतः । उदकान्तात् सुहृज्जनं निवर्त्य तस्माद् अभिप्रस्थितः ।

तस्य च द्वौ मङ्गलवृषभौ धूर्वोढारौ नन्दकसंजीवकनामानौ पाण्डुराभ्रसंनिकाशौ सुवर्णकिङ्किणीपरिवृतोरस्कौ तिष्ठतः । अथ धवखदिरपलाशशालैर् मनोहराम् अन्यैश् चेष्टदर्शनैः शाखिभिर् निरन्तरोपचिताम् अनेकगजगवयमहिषरुरुचमरीवराहशार्दूल-

चित्रकर्कभयोद्भटाम् अचलनितम्बनिर्गतोदकपरिपूरितां विविधदरीगहनाम् अटवीम् आसाद्य दूरापातिनिर्झरोदकोत्पादितकर्दममग्नैकचरणविकल्याच् छकटस्य चातिभाराद् अभिहतः कस्मिंश्चित् प्रदेशे कथम् अपि तयोर् वृषभयोः संजीवको युगभङ्गं कृत्वा निषसाद। ततस् तं निपतितं दृष्ट्वा शाकटिकः ससंभ्रमः शकटाद् उत्तीर्य त्वरितगतिर् अनतिदूरे सोपचारम् अञ्जलिं कृत्वा सार्थवाहम् उवाच। आर्यपुत्र। अध्वपरिश्रान्तः संजीवकः पङ्के निषसाद। तच् छ्रुत्वा वर्धमानसार्थवाहः परं विषादम् अगमत्। पञ्चरात्रिकम् अप्रयाणकं कृत्वा यदासौ न कल्यतां लभते। तदा तस्य यवससमेतान् रक्षापुरुषान् दत्त्वाभिहितवान्। यथा। अयं संजीवको यदि जीवति। तद् एनं गृहीत्वा। यदि म्रियते। तदामुं संस्कृत्य युष्माभिर् आगन्तव्यम्। एवम् आदिश्य यथाभिलषितं देशान्तरं प्रस्थितः। अन्येद्युश् च। बह्वपायं वनम्। इति भयात् तैर् अपि गत्वा स्वामिने मृषा निवेदितम्। यथा। मृतो ऽसौ संजीवको ऽस्माभिश् चाग्न्यादिना संस्कारेण संस्कृतः। इति। तच् च श्रुत्वा सार्थवाहः क्षणमात्रं दुःखं कृत्वा कृतज्ञतया च प्रेतकृत्यादिक्रियां कृत्वा मथुराम् अविघ्नेन संप्राप्तः।

अथ संजीवकः स्वभाग्यानां वशाद् आयुःशेषतया च निर्झरोदककणप्रकारैर् आश्वासितशरीरः शनैः शनैर् यमुनाकच्छम् अवतीर्णः। तस्मिंश् च मरकतसदृशानि शष्पपल्लवाग्राणि भक्षयन् कतिपयैर् अहोभिर् हरवृषभ इव पीनः ककुद्मान् बलवांश् च संवृत्तः। प्रत्यहं वल्मीकशिखराणि शृङ्गाग्रघट्टनैर् उल्लिखन् दन्तिवत् तिष्ठति।

अथ कदाचित् सर्वमृगपरिवृतः पिङ्गलको नाम सिंह उदकग्रहणार्थं यमुनाकच्छम् अवतीर्णः। स च संजीवकस्य महान्तं गर्जितशब्दम् अशृणोत्। तं च श्रुत्वातीव क्षुभितहृदयः स्वकीयम् आकारं प्रच्छाद्य मण्डलवटस्याधस्ताच् चतुर्मण्डलावस्थानेनावस्थितः।

आह च चतुर्मण्डलावस्थाननामानि। सिंहः सिंहानुयायी काकरवर्गः किंवृत्तश् चेति मण्डलानि। तत्र सर्वेष्व् एव नगरपत्तनाधिष्ठानखेटकर्बटद्रङ्गप्रत्यन्ताग्रहारविहारजनस्थानेष्व् एक एव सिंहस्थानीयो भवति। कतिपयाः सिंहानुयायिनस् तत्र चराः। काकरवर्गो मध्यमवर्गः। किंवृत्ता वनान्तस्थानवासिनः। उत्तममध्यमाधमास् त्रय इति।

अथ पिङ्गलकः सामात्यः ससुहृज्जनश् छत्रचामरव्यजनवाहनविलासविस्तारविरहितम् अकृत्रिमसाहसरसैकान्तदर्पोद्धतम् अभग्नमानमदोत्सेकम् असहमानतया स्वयंग्राहनिरङ्कुशदर्शितैश्वर्यम् अनभिज्ञम् इतरजनसेवितानां कृपणवचसाम् अमर्षरोषसंरम्भगर्वप्रस्थानम् अकातरत्वपुरुषार्थम् अनुच्छिप्ताञ्जलिपुटम् अदीनम् अभीतम् अकृतचाटुकर्मोपायं व्यवसायपौरुषाभिमानावष्टम्भभासुरम् अनन्यसेवि निःसङ्गम् अनात्मंभरि परोपकारसुखव्यक्त*पुरुषकारफलम् अपरिभूतम् अकृशम् अतुच्छम् अपगतदुर्गप्रतिसंस्कारचिन्तम् अगणितायव्ययम् अविलोमम् अनायत्तम् उद्धतोपार्जितप्रतापविषमम् अषाड्गुण्यसंप्रधारणम् अप्रहरणाभरणम् असाधारणविभवग्रासम् अपरोक्षवृत्तम् अनाशङ्कनीयम् अनपेक्षितकलत्रपार्ष्णिग्राहासाराक्रन्दम् अनिन्द्यम् अघटिताशिक्षितास्त्रप्रयोगम् अनिच्छावि-

घाति परिजननिरपेक्षलब्धग्रासनिवाससौहित्यं वनान्तरे निःशङ्कं निःसाध्वसम् उच्चैःशिरो राजत्वम् अनुबभूव । उक्तं च ।

एकाकिनि वनवासिन्य् । अराजलक्ष्मण्य् अनीतिशास्त्रज्ञे ।
सत्त्वोत्कटे मृगपतौ । राजेति गिरः परिणमन्ति ॥ ५ ॥ ār

किं च ।

नाभिषेको न संस्कारः । सिंहस्य क्रियते मृगैः ।
विक्रमार्जितवित्तस्य । स्वयम् एव मृगेन्द्रता ॥ ६ ॥

सदामन्दमदस्यन्दिमातङ्गपिशिताशनः ।
असंपन्नेप्सिताहारस् । तृणान्य् अत्ति न केसरी ॥ ७ ॥

तस्य च करटकदमनकनामानौ द्वौ शृगालौ भ्रष्टाधिकारौ मन्त्रिपुत्राव् आस्ताम् । तौ च परस्परं मन्त्रयितुम् आरब्धौ । तत्र दमनको ऽब्रवीत् । भद्र करटक । अयं तावद् अस्मत्स्वामी पिङ्गलक उदकग्रहणार्थम् इतः प्रवृत्तः । किंनिमित्तम् इह दौर्मनस्येनावस्थितः । सो ऽब्रवीत् । भद्र । किम् अनेन व्यापारेण । उक्तं च ।

अव्यापारेषु व्यापारं । यो नरः कर्तुम् इच्छति ।
स एव निधनं याति । कीलोत्पाटीव वानरः ॥ ८ ॥

दमनक आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा १ ॥

अस्ति कस्मिंश्चित् प्रदेशे नगरम् । तस्यासन्नतरु*खण्डमध्ये केनापि वणिजा देवतायतनं कार्यते स्म । तत्र ये कर्मकराः स्थपत्यादयः । ते मध्याह्नवेलायाम् आहारार्थं प्रतिदिनं नगरं प्रविशन्ति । अथैकस्मिन् दिने वानरयूथं तद् अर्धकृत*देवतायतनम् आयातम् । अथैकस्य शिल्पिनो ऽर्धस्फाटितो महाप्रमाणो ऽञ्जनस्तम्भः शिरसि निखातखादिरकीलको ऽवतिष्ठते । वानराश् च स्वेच्छया तरुशिखरप्रासादशृङ्गदारुनिचयेषु यथेष्टं क्रीडितुम् आरब्धाः । तत्रैकश् चासन्नविनाशश् चापलाद् उपविश्य स्तम्भे । केनायम् अस्थाने कीलको निखातः । इति पाणिभ्यां संगृह्योत्पाटयितुम् आरब्धः । अर्धस्फाटितान्तरप्रविष्टवृषणस्थानाच् चलितकीलके यद् वृत्तम् । तद् भवतानाख्यातम् अपि विदितम् । इति ॥

अतो ऽहं ब्रवीमि । अव्यापारः प्राज्ञैः परिहर्तव्यः । इति । पुनश् चाब्रवीत् । आवयोस् तावद् भक्षितशेषाहारमात्रवर्तनम् अस्त्य् एव । दमनक आह । कथम् आहारमात्रार्थी केवलं भवान् प्रधानसेवां कुरुते । न विशेषार्थितया । साधु चेदम् उच्यते ।

सुहृदाम् उपकारकारणाद्
द्विषतां चाप्य् अपकारकारणात् ।
नृपसंश्रय इष्यते बुधैर्
जठरं को न बिभर्ति केवलम् ॥ ९ ॥ viyo

अपि च । यस्मिन् जीवति जीवन्ति । बहवः स तु जीवति ।
वयांसि किं न कुर्वन्ति । चञ्च्वा स्वोदरपूरणम् ॥ १० ॥

यो ऽत्मने न गुरवे न च बन्धुवर्गे
दीने दयां न कुरुते न च भृत्यवर्गे ।
किं तस्य जीवितफलं हि मनुष्यलोके
काको ऽपि जीवति चिरं च बलिं च भुङ्क्ते ॥ ११ ॥ vasa

स्वल्पस्नायुवसावशेषमलिनं निर्मांसम् अप्य् अस्थिकं
श्वा लब्ध्वा परितोषम् एति न च तत् तस्य क्षुधाशान्तये ।
सिंहो जम्बुकम् अङ्कम् आगतम् अपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतो ऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ १२ ॥ śārdū

लाङ्गूलचालनम् अधश् चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुंगवस् तु
धीरं विलोकयति चाटुशतैश् च भुङ्क्ते ॥ १३ ॥ vasa

सुपूरा वै कुनदिका । सुपूरो मूषकाञ्जलिः ।
सुसंतोषः कापुरुषः । स्वल्पकेनापि तुष्यति ॥ १४ ॥

अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर् बहुभिर् बहिष्कृतस्य ।
उदरभरणमात्रम् एव लिप्सोः
पुरुषपशोश् च पशोश् च को विशेषः ॥ १५ ॥ puṣpi

अथवा । गुरुशकटधुरंधरस् तृणाशी
समविषमेषु च लाङ्गलापकर्षी ।
जगदुपकरणं पवित्रयोनिर्
नरपशुना *किम् उ मीयते गवेन्द्रः ॥ १६ ॥ puṣpi

करटक आह । आवां तावद् अप्रधानौ । किम् अनेन व्यापारेण । सो ऽब्रवीत् । भद्र । *कियतापि कालेन प्रधानो ऽप्रधानो ऽपि भवति । उक्तं च ।

अप्रधानः प्रधानः स्यात् । पार्थिवं यदि सेवते ।
प्रधानो ऽप्य् अप्रधानः स्याद् । यदि सेवाविवर्जितः ॥ १७ ॥

न कस्यचित् कश्चिद् इह प्रभावाद्
भवत्य् उदारो ऽभिमतः खलो वा ।
लोके गुरुत्वं विपरीततां वा
स्वचेष्टितान्य् एव नरं नयन्ति ॥ १८ ॥ upa

तथा च । आरोप्यते ऽश्मा शैलाग्रं । यथा यत्नेन भूयसा ।
पात्यते सुखम् एवाधस् । तथात्मा गुणदोषयोः ॥ १९ ॥

करटक आह । अथ भवान् किं वक्तुमनाः । सो ऽब्रवीत् । अयं तावद् अस्मत्स्वामी भीतो भीतपरिवारश् च मूढमनाः संतिष्ठते । सो ऽब्रवीत् । कथं भवाञ् जानाति । दमनक आह । किम् अत्र ज्ञातव्यम् ।

उदीरितो ऽर्थः पशुनापि गृह्यते
हयाश् च नागाश् च वहन्ति नोदिताः ।
अनुक्तम् अप्य् ऊहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ॥ २० ॥ vaṃśa

तथा च । आकारैर् *इङ्गितैर् गत्या । चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारैश् । च गृह्यते ऽन्तर्गतं मनः ॥ २१ ॥

तद् एनम् अद्यैवात्मप्रज्ञाप्रभावेण वशीकरिष्यामि । करटक आह । अनभिज्ञो भवान् किल सेवाधर्मस्य । तत् कथय । कथम् आत्मीकरिष्यसि । सो ऽब्रवीत् । भद्र । कथम् अहं न सेवाभिज्ञः । ननु पाण्डवानां मयैव विराटनगरप्रवेशे व्यासमहर्षेः कथयतः सकलो ऽप्य् अनुजीविधर्मो विज्ञातः । इति । उक्तं च ।

को ऽतिभारः समर्थानां । किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां । कः परः प्रियवादिनाम् ॥ २२ ॥

करटक आह । कदाचिद् अयम् अनुचितस्थानप्रवेशाद् भवन्तम् अवमन्येत । सो ऽब्रवीत् । अस्त्य् एवम् । परम् अहं देशकालविद् अपि । उक्तं च ।

अप्राप्तकालं वचनं । बृहस्पतिर् अपि ब्रुवन् ।
न केवलम् असंमानं । विप्रियत्वं च गच्छति ॥ २३ ॥

तथा च । अभ्यक्तं रहसि गतं । विचिन्तम् अन्येन मन्त्रयन्तं वा ।
उचितप्रणयम् अपि नृपं । सहसार्या नोपसर्पन्ति ॥ २४ ॥ ār

अपि च । द्वंद्वालापसभेषजभोजननारीसनाथसमयेषु ।
अनिवारितो ऽपि न विशेन् । नापितसमये च नागरिकः ॥ २५ ॥ ār

नित्यं नरेन्द्रभवने परिशङ्कनीयं
विद्यार्थिना गुरुगृहे निभृतेन भाव्यम् ।

क्षिप्रं विनाशम् उपयान्ति हि दुर्विनीताः
प्रादोषिका इव दरिद्रगृहेषु दीपाः ॥ २६ ॥ vasa
किं च । काले यथावदधिगतनरपतिकोपाद्यशेषवृत्तान्तः ।
नृपभवने नतमूर्तिः । संयतवस्त्रः शनैः प्रविशेत् ॥ २७ ॥ ā
अन्यच् च । आसन्नम् एव नृपतिर् भजते मनुष्यं
विद्याविहीनम् अकुलीनम् असंस्तुतं वा ।
प्रायेण भूमिपतयः प्रमदा लताश् च
यत् पार्श्वतो भवति तत् परिवेष्टयन्ति ॥ २८ ॥ vasa
अपि च । कोपप्रसादवस्तूनि । विचिन्वन्तः समीपगाः ।
आरोहन्ति शनैर् भृत्या । धुन्वन्तम् अपि पार्थिवम् ॥ २९ ॥
किं च । सुवर्णपुष्पां पृथिवीं । चिन्वन्ति पुरुषास् त्रयः ।
शूरश् च कृतविद्यश् च । यश् च जानाति सेवितुम् ॥ ३० ॥
सा च सेवा यथा क्रियते । तथा श्रूयताम् ।
प्रिया हिताश् च ये राज्ञां । ग्राह्यवाक्या विशेषतः ।
आश्रयेत् पार्थिवं विद्वांस् । *तद्द्वारेणैव नान्यथा ॥ ३१ ॥
यो न वेत्ति गुणान् यस्य । न तं सेवन्ति पण्डिताः ।
न हि तस्मात् फलं किंचित् । सुकृष्टाद् ऊषराद् इव ॥ ३२ ॥
द्रव्यप्रकृतिहीनो ऽपि । सेव्यः सेव्यगुणान्वितः ।
भवत्य् आजीवनं तस्मात् । फलं कालान्तराद् अपि ॥ ३३ ॥
सेवकः स्वामिनं द्वेष्टि । सेवकाधम इत्य् असौ ।
आत्मानं स न किं द्वेष्टि । सेव्यासेव्यं न वेत्ति यः ॥ ३४ ॥
राजमातरि देव्यां च । कुमारे मुख्यमन्त्रिणि ।
पुरोहिते प्रतीहारे । कर्तव्यं राजवत् सदा ॥ ३५ ॥
युद्धकाले ऽग्रगो यः स्यात् । सदा पृष्ठानुगः पुरे ।
प्रभुद्वाराश्रितो हर्म्ये । स भवेद् राजवल्लभः ॥ ३६ ॥
जीवेति प्रब्रुवन् प्रोक्तः । कृत्याकृत्यविचक्षणः ।
करोति निर्विकल्पं यः । स भवेद् राजवल्लभः ॥ ३७ ॥
प्रभुप्रसादजं वित्तं । सत्पात्रे यो नियोजयेत् ।
वस्त्राद्यं च दधात्य् अङ्गे । स भवेद् राजवल्लभः ॥ ३८ ॥
प्रोक्तः प्रत्युत्तरं नाह । विरुद्धं प्रभुणा च यत् ।
न समीपे हसत्य् उच्चैः । स भवेद् राजवल्लभः ॥ ३९ ॥
अन्तःपुरचरैः सार्धं । यो न मन्त्रं समाचरेत् ।
न कलत्रैर् नरेन्द्रस्य । स भवेद् राजवल्लभः ॥ ४० ॥

संमतो ऽहं विभोर् नित्यम् । इति मत्वा व्यतिव्रजेत् ।
न कृच्छ्रेष्व् अपि मर्यादां । स भवेद् राजवल्लभः ॥ ४१ ॥
*द्विषद्द्वेषपरो नित्यम् । इष्टानाम् इष्टकर्मकृत् ।
यो नरो नरनाथस्य । स भवेद् राजवल्लभः ॥ ४२ ॥
न कुर्यान् नरनाथस्य । यो ऽरिभिः सह संगतिम् ।
न निन्दां न विवादं च । स भवेद् राजवल्लभः ॥ ४३ ॥
यो रणं शरणं यद्वन् । मन्यते भयवर्जितः ।
प्रवासं स्वपुरावासं । स भवेद् राजवल्लभः ॥ ४४ ॥
द्यूतं यो यमदूताभं । मद्यं हालाहलोपमम् ।
पश्येद् दारान् यथाकारान् । स भवेद् राजवल्लभः ॥ ४५ ॥

करटक आह । अथ भवांस् तत्र गत्वा प्रथमम् एव किं वक्ष्यति । तत् तावद् उच्यताम् ।
सो ऽब्रवीत् ।

उत्तराद् उत्तरं वाक्यम् । उत्तराद् एव जायते ।
सुवृष्टिगुणसंपन्नाद् । बीजाद् बीजम् इवापरम् ॥ ४६ ॥

अपि च । अपायसंदर्शनजां विपत्तिम्
उपायसंदर्शनजां च सिद्धिम् ।
मेधाविनो नीतिगुणप्रयुक्तां
पुरः स्फुरन्तीम् इव दर्शयन्ति ॥ ४७ ॥ upa
कल्पयति येन वृत्तिं । सदसि च सद्भिः प्रशस्यते येन ।
स गुणस् तेन गुणवता । विवर्धनीयश् च रक्ष्यश् च ॥ ४८ ॥ ar

उक्तं च । अपृष्टस् तस्य तद् ब्रूयाद् । यस्य नेच्छेत् पराभवम् ।
एष एव सतां धर्मो । विपरीतस् ततो ऽन्यथा ॥ ४९ ॥

करटक आह । दुराराध्या हि राजानः । उक्तं च ।

भोगिनः कञ्चुकासक्ताः । क्रूराः कुटिलगामिनः ।
सुरौद्रा मन्त्रसाध्याश् च । राजानः पन्नगा इव ॥ ५० ॥
विषमाः कठिनात्मानो । *ऽनीचा *नीचजनाश्रयाः ।
हिंस्रैर् अनुगता नित्यं । राजानः पर्वता इव ॥ ५१ ॥
नखिनां च नदीनां च । शृङ्गिणां शस्त्रधारिणाम् ।
विश्वासो नोपगन्तव्यः । स्त्रीषु राजकुलेषु च ॥ ५२ ॥

सो ऽब्रवीत् । सत्यम् एतत् । किं तु ।

यस्य यस्य हि यो भावस् । तस्य तस्य हि तं नरः ।
अनुप्रविश्य मेधावी । क्षिप्रम् आत्मवशं नयेत् ॥ ५३ ॥

सत्स्व् अपि नतिस्तुतिवचनं । तदभिमते प्रेम *तद्द्विषि द्वेषः ।
*दान उपकारकीर्तनम् । अमन्त्रमूलं वशीकरणम् ॥ ५४ ॥ ār

किं तु । क्रियाधिकं वा वचनाधिकं वा
ज्ञानाधिकं वापि नरं विदित्वा ।
तं तास्व् अवस्थास्व् अनुसंदधीत
ज्ञात्वाबलं तं परिवर्जयेच् च ॥ ५५ ॥ upa

वचस् तत्र प्रयोक्तव्यं । यत्रोक्तं लभते फलम् ।
स्थायीभवति चात्यन्तं । रागः शुक्लपटे यथा ॥ ५६ ॥

नाज्ञातबलवीर्येषु । पुमान् किंचित् प्रयोजयेत् ।
न भ्राजते प्रयुक्तापि । ज्योत्स्ना हिमगिरौ यथा ॥ ५७ ॥

करटक आह । यद्य् एवम् अभिमतम् । तद् गच्छ राजपादान्तिकम् । शिवास् ते पन्थानः सन्तु । यथाभिप्रेतम् अनुष्ठीयताम् ।

अप्रमादश् च कर्तव्यस् । त्वया राज्ञः समाश्रये ।
त्वदीयस्य शरीरस्य । वयं भाग्योपजीविनः ॥ ५८ ॥

सो ऽपि तं प्रणम्य पिङ्गलकाभिमुखं प्रस्थितः ।

अथागच्छन्तं दमनकम् अवलोक्य पिङ्गलको द्वाःस्थम् अब्रवीत् । अपसार्यतां वेत्रलता । अयम् अस्माकं चिरंतनो मन्त्रिपुत्रो दमनको ऽव्याहतप्रवेशः । तत् प्रविशत्व् एष । द्वितीयमण्डलभागीति । अथ प्रविश्य दमनको निर्दिष्टे चासने पिङ्गलकं प्रणम्योपविष्टः । स तु तस्य नखकुलिशालंकृतं दक्षिणपाणिम् उपरि दत्त्वा मानपुरःसरम् उवाच । अपि भवतः शिवम् । कस्माच् चिराद् दृष्टो ऽसि । दमनक आह । यद्य् अपि न किंचित् प्रयोजनं देवपादानाम् अस्माभिः । तद् अपि प्राप्तकालं च वक्तव्यम् । यतो न खलु राज्ञाम् उपयोगकारणं किंचिन् न भवति । उक्तं च ।

दन्तस्य निष्कोषणकेन राजन्
कर्णस्य कण्डूयनकेन चापि ।
तृणेन कार्यं भवतीश्वराणां
किं नाम वाक्याङ्गवता नरेण ॥ ५९ ॥ upa

तथा च । यतो वयं देवपादानाम् अन्वयागता भृत्या आपत्स्व् अप्य् अनुगामिनः । नास्माकम् अन्या गतिर् अस्ति । उक्तं च ।

स्थानेष्व् एव नियोज्यानि । भृत्याश् चाभरणानि च ।
न हि चूडामणिः पादे । प्रभवामीति बध्यते ॥ ६० ॥

अनभिज्ञो गुणानां यो । न भृत्यैः सो ऽनुगम्यते ।
धनाढ्यो ऽपि कुलीनो ऽपि । क्रमायातो ऽपि भूपतिः ॥ ६१ ॥

असमैः समीयमानः । समैश् च परिहीयमाणसत्कारः ।
धुरि *चानियुज्यमानस् । त्रिभिर् अर्थपतिं त्यजति भृत्यः ॥ ६२ ॥ ār
अपि च । कनकभूषणसंग्रहणोचितो
यदि मणिस् त्रपुणि प्रतिबध्यते ।
न स विरौति न चापि न शोभते
भवति योजयितुर् वचनीयता ॥ ६३ ॥ druta
बुद्धिमान् अनुरक्तो ऽयम् । अभक्तो ऽयम् अयं जडः ।
इति भृत्यविचारज्ञो । भृत्यैर् आपूर्यते नृपः ॥ ६४ ॥
यद् अपि स्वाम्य् एवं वदति । चिराद् दृश्यसे । तत्रापि श्रूयतां कारणम् ।
सव्यदक्षिणयोर् यत्र । विशेषो नोपलभ्यते ।
न तत्र क्षणम् अप्य् आर्यो । विद्यमानगतिर् वसेत् ॥ ६५ ॥
निर्विशेषं यदा स्वामी । समं भृत्येषु वर्तते ।
तत्रोद्यमसमर्थानाम् । उत्साहः परिहीयते ॥ ६६ ॥
*लोहिताक्षस्य च मणेः । पद्मरागस्य चान्तरम् ।
यत्र नास्ति कथं तत्र । क्रियते रत्नविक्रयः ॥ ६७ ॥
न विना पार्थिवो भृत्यैर् । न भृत्याः पार्थिवं विना ।
तेषां च व्यवहारो ऽयं । परस्परनिबन्धनः ॥ ६८ ॥
तद् अपि स्वामिगुणाद् एव भृत्यविशेषः । उक्तं च ।
अश्वः शस्त्रं शास्त्रं । वीणा वाणी नरश् च नारी च ।
पुरुषविशेषं प्राप्ता । भवन्त्य् अयोग्याश् च योग्याश् च ॥ ६९ ॥ ār
यच् च । शृगालो ऽयम् । इति ममोपर्य् अवज्ञा क्रियते । तद् अप्य् अयुक्तम् । यतः ।
कौशेयं कृमिजं सुवर्णम् उपलाद् दूर्वापि गोलोमतः
पङ्कात् तामरसं *शशाङ्क उदधेर् इन्दीवरं गोमयात् ।
काष्ठाद् अग्निर् अहेः फणाद् अपि मणिर् गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥ ७० ॥ śārdu
तथा च । मूषिका गृहजातापि । हन्तव्या सापकारिणी ।
उपप्रदानैर् मार्जारो । हितकृत् प्रार्थ्यते ऽन्यतः ॥ ७१ ॥
अन्यच् च । किं भक्तेनासमर्थेन । किं शक्तेनापकारिणा ।
शक्तं भक्तं च मां राजन् । नावज्ञातुं त्वम् अर्हसि ॥ ७२ ॥
अधिगतपरमार्थान् पण्डितान् मावमंस्थास्
तृणम् इव लघु लक्ष्मीर् नैव तान् सा रुणद्धि ।
अभिनवमदशोभाश्यामगण्डस्थलानां
न भवति बिसतन्तुर् वारणं वारणानाम् ॥ ७३ ॥ māli

पिङ्गलक आह । मा मैवम् उच्यताम् । चिरंतनस् त्वम् अस्माकं मन्त्रिपुत्रः । दमनक आह । देव । किम् अपि वक्तव्यम् अस्ति । सो ऽब्रवीत् । भद्र । यत् ते हृदयस्थम् । तद् ब्रूहि । सो ऽब्रवीत् । उदकग्रहणाय प्रवृत्तस्य स्वामिनः किम् इह निवृत्यावस्थानम् । पिङ्गलक आकारं प्रच्छादयन्न् आह । दमनक । किंचिन् न । सो ऽब्रवीत् । देव । यदि नाख्येयम् । तदा तिष्ठतु ।

दारेषु किंचित् पुरुषस्य वाच्यं
किंचिद् वयस्येषु सुतेषु किंचित् ।
सर्वे ऽपि ते प्रत्ययिनो भवन्ति
सर्वं न सर्वस्य च संप्रकाश्यम् ॥ ७४ ॥ indra

एवम् उक्ते पिङ्गलकश् चिन्तयाम् आस । योग्यो ऽयं दृश्यते । तत् कथयाम्य् एतस्यात्मनो ऽभिप्रायम् । उक्तं च ।

सुहृदि निरन्तरचित्ते । गुणवति भृत्ये ऽनुवर्तिनि कलत्रे । ār
स्वामिनि शक्तिसमेते । निवेद्य दुःखं सुखी भवति ॥ ७५ ॥

भो दमनक । शृणोषि महाशब्दं दूरात् । सो ऽब्रवीत् । स्वामिन् । शृणोमि । तत् किम् । पिङ्गलक आह । भद्र । अस्माद् वनाद् गन्तुम् इच्छामि । दमनक आह । कस्मात् । पिङ्गलक आह । यतो ऽस्मद्वने ऽपूर्वं सत्त्वं किंचित् प्रविष्टम् । यस्यायं महाञ् शब्दः श्रूयते । तद् अस्य शब्दस्यानुरूपेण सत्त्वेन भाव्यम् । सत्त्वानुरूपेण च पराक्रमेण । इति । दमनक आह । किं शब्दमात्राद् एव स्वामी भयम् उपैति । उक्तं च ।

अम्भसा भिद्यते सेतुस् । तथा मन्त्रो ऽप्य् अरक्षितः ।
पैशुन्याद् भिद्यते स्नेहो । वाग्भिर् भिद्येत कातरः ॥ ७६ ॥

तन् न युक्तं स्वामिनः पूर्वपुरुषोपात्तं कुलक्रमागतं वनम् एकपद एव परित्यक्तुम् । यतः ।

चलत्य् एकेन पादेन । तिष्ठत्य् एकेन पण्डितः ।
नासमीक्ष्य परं स्थानं । पूर्वम् आयतनं त्यजेत् ॥ ७७ ॥

अन्यच् च । इह शब्दा अनेकप्रकाराः श्रूयन्ते । ते तु शब्दमात्राण्य् एव । न तु भयकारणम् । तद् यथा । मेघस्तनितवेणुवीणापणवमृदङ्गशङ्खघण्टाशकटकपाटयन्त्रादीनां शब्दाः श्रूयन्ते । न च तेभ्यो भेतव्यम् । उक्तं च ।

अत्य् उत्कटे च रौद्रे च । शत्रौ यस्य न हीयते ।
धैर्यं प्राप्ते महीपस्य । न स याति पराभवम् ॥ ७८ ॥

तथा च । दर्शितभये ऽपि धातरि । धीरत्वं नैव चलति धीराणाम् ।
शोषितसरसि निदाघे । नितराम् एवोन्नतः सिन्धुः ॥ ७९ ॥ ār

तथा च । यस्य न विपदि विषादः । संपदि हर्षो रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं । जनयति जननी सुतं विरलम् ॥ ८० ॥ ār

तथा च । शक्तिवैकल्यनम्रस्य, निःसारत्वाल् लघीयसः ।
जन्मिनो मानहीनस्य, तृणस्य च समा गतिः ॥ ८१ ॥

तद् एवं ज्ञात्वा स्वामिना धैर्यावष्टम्भः कार्यः । न शब्दमात्राद् भेतव्यम् । उक्तं च ।

पूर्वम् एव मया ज्ञातं, पूर्णम् एतद् धि मेदसा ।
अनुप्रविश्य विज्ञातं, यावच् चर्म च दारु च ॥ ८२ ॥

पिङ्गलको ऽब्रवीत् । कथम् एतत् । दमनक आह ।

## ॥ कथा २ ॥

अस्ति, कस्मिंश्चित् प्रदेशे गोमायुः क्षुत्क्षामकण्ठ आहारक्रियार्थं परिभ्रमन् अरण्यमध्ये नृपस्यायोधनभूमिम् अपश्यत् । अथ मुहूर्तं यावत् तिष्ठति, तावन् महान्तं शब्दम् अशृणोत् । तच् छ्रुत्वातीव क्षुभितहृदयः परं विषादम् अगमत्, आह च । अहो, कष्टम् आपतितम् । इदानीं विनष्टो ऽस्मि । कस्यायं शब्दः । कीदृशं सत्त्वम्, इति । यावद् अन्वेषयति, तावद् गिरिशिखराकारां भेरीं दृष्ट्वाचिन्तयत् । किम् अयं शब्दः स्यात् स्वभावजः, उत परप्रणीतः, इति । अथ यदा भेरी वायुना प्रेरितैस् तृणाग्रैः स्पृश्यते, तदा शब्दं करोति, अन्यथा तूष्णीम् आस्ते । स च तस्याः *असारतां ज्ञात्वा समीपम् उपस्थितः, स्वयं च कौतुकाद् उभयमुखयोर् अताडयत् । हर्षाद् इत्य् अचिन्तयत् । अहो, चिराद् एवास्माकम् अपि भोजनम् आपतितम् । तन् नूनम् एतन् मांसमेदोभिः पूरितं भविष्यति, इति । एवम् अवधार्य कस्मिंश्चित् प्रदेशे विदार्यान्तः प्रविष्टः । तच् च परुषचर्मावगुण्ठितम् । ततः कथम् अपि न दंष्ट्राभङ्गः संजातः । अतो निराशीभूतस् तद् दारुचर्मावशेषम् अवलोक्य श्लोकम् अपठत् ।

श्रुत्वैवं भैरवं शब्दं। मन्ये ऽहं मेदसां निधिम्।
अनुप्रविश्य विज्ञातं। यावच् चर्म च दारु च ॥८३॥

प्रतिनिर्गत्यान्तर्लीनम् अवहस्याब्रवीत्। पूर्वम् एव मया ज्ञातम्। इति ॥

अतो ऽहं ब्रवीमि। न शब्दमात्राद् एव क्षोभः कार्यः। पिङ्गलक आह। भोः। ममायं परिग्रहो भयव्याकुलितमनाः पलायितुम् एव वाञ्छति। तत् कथम् अहं धैर्यावष्टम्भं करोमि। सो ऽब्रवीत्। स्वामिन्। नैतेषां दोषः। यतः स्वामिसदृशा भृत्या भवन्ति। उक्तं च।

अश्वः शस्त्रं शास्त्रं। वीणा वाणी नरश् च नारी च।
पुरुषविशेषं प्राप्ता। भवन्त्य् अयोग्याश् च योग्याश् च ॥८४॥

पौरुषावष्टम्भं कृत्वा तत् तावद् अत्रैव परिपालय। यावद् अहम् एतत्स्वरूपं विज्ञायागच्छामि। ततश् च यथोचितं कर्तव्यम्। इति। पिङ्गलक आह। किं तत्र गन्तुम् उत्सहते भवान्। दमनक आह। किं स्वाम्यादेशात् सुभृत्यस्य कृत्याकृत्यम् अस्ति किंचित्। उक्तं च। यतः।

स्वाम्यादेशात् सुभृत्यस्य। न भीः संजायते क्वचित्।
प्रविशेद् धव्यवाहे ऽपि। दुस्तरे च महार्णवे ॥८५॥
स्वाम्यादिष्टस् तु यो भृत्यः। समं विषमम् एव वा।
मन्यते *सचिवो धार्यो। न स भूपैः कथंचन ॥८६॥

पिङ्गलक आह। भद्र। यद्य् एवम्। तद् गच्छ। शिवास् ते सन्तु पन्थानः।

दमनको ऽपि तं प्रणम्य संजीवकशब्दानुसारी प्रतस्थे। अथ दमनके गते भयव्याकुलितहृदयः पिङ्गलकश् चिन्तयाम् आस। अहो। न शोभनं कृतं मया। यत् तस्य विश्वासं गत्वात्माभिप्रायो निवेदितः। कदाचिद् दमनको ऽयम् उभयवेतनत्वान् ममोपरि दुष्टः स्यात्। भ्रष्टाधिकारत्वाद् वा। उक्तं च।

ये भवन्ति महीपस्य। संमानितविमानिताः।
भवन्ति तस्य नाशाय। कुलोत्था अपि सर्वदा ॥८७॥

तद् यावद् अस्य चिकीर्षितं वेत्तुं स्थानान्तरं गत्वा प्रतिपालयामि। कदाचिद् दमनको ऽपि तम् आदाय मां व्यापादयितुम् आगच्छेत्। उक्तं च।

न बध्यन्ते ह्य् अविश्वस्ता। बलिष्ठैर् अपि दुर्बलाः।
विश्वस्तास् तु प्रबध्यन्ते। दुर्बलैर् बलिनो ऽपि हि ॥८८॥

इत्य् अवधार्य स्थानान्तरं गत्वा दमनकमार्गम् अवलोकयन्न् एकाक्य् एवावतस्थे। दमनको ऽपि संजीवकसकाशं गत्वा। वृषभो ऽयम्। इति परिज्ञाय हृष्टमना व्यचिन्तयत्। अहो। शोभनम् आपतितम्। अनेनास्य संधिविग्रहद्वारेण मम पिङ्गलको वशी भविष्यति। उक्तं च।

सद्वैवापन्नतो राजा । भोग्यो भवति मन्त्रिणाम् ।
अत एव हि वाञ्छन्ति । मन्त्रिणः सापदं नृपम् ॥ ८९ ॥

यथा वाञ्छति नीरोगः । कदाचिन् न चिकित्सकम् ।
तथापद्रहितो राजा । सचिवं नाभिकाङ्क्षति ॥ ९० ॥

एवं चिन्तयन् पिङ्गलकाभिमुखः प्रतस्थे । पिङ्गलको ऽपि तम् आयान्तम् अवलोक्याकारसंवरणार्थं यथापूर्वम् अवतस्थे । दमनको ऽपि पिङ्गलकसकाशम् आगत्य प्रणम्योपविष्टः । पिङ्गलकः प्राह । भद्र । किं दृष्टं भवता तत् सत्त्वम् । दमनक आह । दृष्टं स्वामिप्रसादात् । पिङ्गलक आह । अपि सत्यम् । दमनक आह । किं स्वामिपादानाम् अन्यथा विज्ञप्यते ।

उक्तं च । अपि स्वल्पम् असत्यं यः । पुरो वदति भूभुजाम् ।
देवानां च विनाशः स्याद् । ध्रुवं तस्य गुरोर् अपि ॥ ९१ ॥

तथा च । सर्वदेवमयो राजा । मुनिभिः परिगीयते ।
तस्मात् तं देववत् पश्येन् । न व्यलीकेन कर्हिचित् ॥ ९२ ॥

तथा च । सर्वदेवमयस्यास्य । विशेषो भूपतेर् अयम् ।
शुभाशुभफलं दत्ते । सद्यो देवा भवान्तरे ॥ ९३ ॥

पिङ्गलक आह । अथवा सत्यं दृष्टं भविष्यति भवता । न दीनोपरि महान्तः प्रकुप्यन्ति ।

उक्तं च । तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
*समुच्छ्रितान् एव तरून् विबाधते
महान् महत्स्व् एव करोति विक्रमम् ॥ ९४ ॥ vaṃśa

दमनक आह । मया पूर्वम् एवैतद् विज्ञातम् । यथैवं स्वामी वक्ष्यति । तत् किं बहुना । तम् एवाहं देवपादानां सकाशम् आनयामि । तच् च श्रुत्वा पिङ्गलको हृष्टवदनकमलः परां मनसस् तुष्टिम् उपागतः ।

दमनको ऽपि पुनर् गत्वा संजीवकं साक्षेपम् आहूतवान् । एह्य् एहि । दुष्टवृषभ । स्वामी पिङ्गलकस् त्वां व्याहरति । किं निर्भीको भूत्वा मुहुर् मुहुर् व्यर्थं नर्दसि । इति । तच् छ्रुत्वा संजीवको ऽब्रवीत् । भद्र । क एष पिङ्गलको नाम । तच छ्रुत्वा सविस्मयं दमनको ऽब्रवीत् । कथं स्वामिनं पिङ्गलकम् अपि न जानासि । पुनश् च सामर्षम् उक्तवान् । फलेन ज्ञास्यति भवान् । नन्व् अयं सर्वमृगपरिवृतो मण्डलवटाभ्याशे मानोन्नतचित्तः सत्त्वधनस्वामी पिङ्गलकाभिधानो महासिंहस् तिष्ठति । तच् छ्रुत्वा गतासुम् इवात्मानं मन्यमानः संजीवकः परं विषादम् अगमत् । आह च । भद्र । भवान् साधुसमाचारो वचनपटुश् च दृश्यते । तद् यदि माम् अवश्यं तत्र नयसि । ततो ऽभयप्रसादः स्वामिनः सकाशाद् दापयितव्यः । दमनक आह । भोः । सत्यम् अभिहितं भवता । नीतिर् एषा । यतः ।

पर्यन्तो लभ्यते भूमेः । समुद्रस्य गिरेर् अपि ।
न कथंचिन् महीपस्य । चित्तान्तः केनचित् क्वचित् ॥ ९५ ॥

तत् त्वम् अत्र तिष्ठ । यावद् अहं तं समये धृत्वा तत्र पश्चान् नयामि त्वाम् ।

ततो दमनकः पिङ्गलकसकाशं गत्वेदम् आह । स्वामिन् । न तत् प्राकृतं सत्त्वम् । स हि भगवतो महेश्वरस्य वाहनभूतः । मया पृष्ट इदम् आह । महेश्वरेण तुष्टेन कालिन्दीपरिसरे शष्पाग्राणि भक्षयितुं समादिष्टो ऽस्मि । किं बहुना । मम प्रदत्तं भगवता क्रीडार्थं वनम् इदम् । पिङ्गलक आह सभयम् । ज्ञातम् अधुना मया । न देवताप्रसादं विना शष्पभोजना निःशङ्का निर्जने वन एवं नदन्तो भ्रमन्ति । ततस् त्वया किम् अभिहितम् । दमनक आह । स्वामिन् । मयैतद् अभिहितम् । एतद् वनं चण्डिकावाहनस्य पिङ्गलकस्य विषयीभूतम् । तद् भवान् अभ्यागतः । ततस् तस्य सकाशं गत्वासौ भ्रातृस्नेहेनैकत्र खादनपानक्रियाविहारैकस्थानाश्रयेण कालं नयतु । इति । तेनापि सर्वम् एतत् प्रतिपन्नम् । उक्तं च । स्वामिनः सकाशाद् अभयदक्षिणा दापनीया । तद् अत्र स्वामी प्रमाणम् ।

तच् छ्रुत्वा पिङ्गलकः सहर्षम् इदम् आह । साधु । सुमते । साधु । मम हृदयेन सह मन्त्रयित्वेवाभिहितम् । तद् दत्ता मया तस्याभयदक्षिणा । परं सो ऽपि ममार्थे शपथपुरःसरं द्रुततरम् आनेतव्यः । तथा साधु चेदम् उच्यते ।

अन्तःसारैर् अकुटिलैः । सुस्निग्धैः सुपरीक्षितैः ।
मन्त्रिभिर् धार्यते राज्यं । सुस्तम्भैर् इव मन्दिरम् ॥ ९६ ॥

तथा । मन्त्रिणां भिन्नसंधाने । भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा । स्वस्थे को वा न पण्डितः ॥ ९७ ॥

दमनको ऽपि संजीवकम् उद्दिश्य प्रस्थितो ऽचिन्तयत् । अहो । प्रसादसमुखो नः स्वामी वचनवशगश् च संवृत्तः । तन् नास्ति धन्यतरो मया समः । यतः ।

अमृतं शिशिरे वह्निर् । अमृतं प्रियदर्शनम् ।
अमृतं राजसंमानम् । अमृतं क्षीरभोजनम् ॥ ९८ ॥

अथ संजीवकम् आसाद्य सप्रश्रयम् उवाच । भो मित्र । प्रसादितो ऽसौ मया भवदर्थे स्वाम्य् अभयप्रदानं च दापितः । तद् विश्रब्धं गम्यताम् । इति । परं राजप्रसादम् आसाद्य मया सह समयधर्मेण वर्तितव्यम् । न प्रभुत्वम् आसाद्य सगर्वतया । अहम् अपि तव संकेतेन सर्वां राज्यधुरम् अमात्यपदवीम् आश्रित्योद्वहिष्यामि । ततो द्वयोर् अपि राज्यलक्ष्मीर् भोग्या भविष्यति । इति । यतः ।

पापर्द्धिवद् अधर्मेण । विभवाः स्युर् वशे नृणाम् ।
नृपजान् प्रेरयत्य् एको । हन्त्य् अन्यो ऽत्र मृगान् इव ॥ ९९ ॥

तथा च । न पूजयति यो गर्वाद् । यथोचित्यं नृपाश्रितान् ।
स प्राप्नोति पदभ्रंशं । भूपतेर् दन्तिलो यथा ॥ १०० ॥

संजीवक आह । कथम् एतत् । सो ऽब्रवीत् ।

॥ कथा ३ ॥

अस्त्य् अत्र धरातले वर्धमानं नाम नगरम् । तत्र दन्तिलो नाम भाण्डपतिः सकलपुरनायकः प्रतिवसति स्म । तेन पुरकार्यं नृपकार्यं च कुर्वता तुष्टिं नीताः सर्वे तत्पुरवासिनो लोकाः । किं बहुना । न को ऽपि तादृक् केनापि दृष्टः श्रुतो वा चतुरः । अथवा साध्व् इदम् उच्यते ।

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥१०१॥ māh

अथैवं वर्तमानस्य तस्य कदाचित् कन्याविवाहः संजातः । तत्र तेन समस्तास् तत्पुरनिवासिनो राजसंनिधिलोकाश् च संमानपूर्वम् आमन्त्र्य भोजिता वस्त्रादिभिश् च सत्कृताः । ततो विवाहानन्तरं सान्तःपुरो राजा गृहम् आनीयाभ्यर्चितः ।

अथ तस्य नरपतेर् गृहमार्जनकर्ता गोरभनामा । स तेन गृहम् आयातो ऽपि राजगुरुपुरतो ऽनुचितस्थाने समुपविष्टो दृष्ट्वार्धचन्द्रं दत्त्वा निःसारितः । सो ऽपि तत्प्रभृत्य् अपमानकलुषितान्तःकरणो रात्राव् अपि न शेते । कथं मया तस्य भाण्डपते राजप्रसादहानिः कर्तव्या । इति । अचिन्तयच् च । अथवा किं ममैतेन वृथा शरीरशोषेण । यतो न किंचिन् मया तस्यापकर्तुं शक्यते । अथवा साध्व् इदम् उच्यते ।

यो ह्य् अपकर्तुम् अशक्तः । कुप्यति किम् असौ स तस्य निर्लज्जः ।
उत्पतितो ऽपि हि चणकः । शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ॥१०२॥ ār

D

अथ कदाचित् प्रत्यूषे योगनिद्रां गतस्य राज्ञः शय्यान्ते संमार्जनं कुर्वन् इदम् आह । अहो दन्तिलस्य धृष्टत्वम् । यद् राजमहिषीम् आलिङ्गति । तच् छ्रुत्वा राजाससंभ्रमम् उत्थाय तम् उवाच । भो भो गोरभ । सत्यम् एतत् । यत् त्वया जल्पितम् । किं देवी दन्तिलेन समालिङ्गिता । गोरभ आह । देव । रात्रिजागरणेन द्यूतासक्ततया *मार्जनकर्मरतस्यापि मे बलान् निद्रा समायाता । तन् न वेद्मि । यद् अभिहितं मया । राजा सेर्ष्यम् । एष तावन् मम गृहे ऽप्रतिहतगतिः । तथा दन्तिलो ऽपि । तत् कदाचिद् अनेन देवी तेन समालिङ्ग्यमाना दृष्टा भविष्यति । उक्तं च । यतः ।

वाञ्छति यद् *दिवा मर्त्यो । वीक्षते वा करोति वा ।
तत् स्वप्ने ऽपि तदभ्यासात् । तथा ब्रूते करोति च ॥१०३॥

तथा च ।

शुभं वा यदि वा पापं । यन् नृणां हृदि संस्थितम् ।
सुगूढम् अपि तज् ज्ञेयं । सुप्तवाक्यात् तथा मदात् ॥१०४॥

अथवा स्त्रीणां विषये को ऽत्र संदेहः ।

जल्पन्ति सार्धम् अन्येन । पश्यन्त्य् अन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्य् अन्यं । प्रियः को नाम योषिताम् ॥१०५॥

तथा च ।

नाग्निस् तृप्यति काष्ठानां । नापगानां महोदधिः ।
नान्तकः सर्वभूतानां । न पुंसां वामलोचनाः ॥१०६॥

रहो नास्ति क्षणो नास्ति । नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां । सतीत्वम् उपजायते ॥१०७॥

तथा च ।

यश् चैतन् मन्यते मूढो ' रक्तेयं मम कामिनी ।
स तस्या वशगो नित्यं ' भवेत् क्रीडाशकुन्तवत् ॥१०८॥

एवं स बहुविधं विलप्य तत्प्रभृति दन्तिलस्य प्रसादपराङ्मुखो बभूव । किं बहुना । राजद्वारे प्रवेशो निवारितः ।

दन्तिलो ऽप्य् अथाकस्माद् एव प्रसादपराङ्मुखम् अवनिपतिम् अवलोक्य चिन्तयाम् आस । अहो ' साधु चेदम् उच्यते ।

को ऽर्थान् प्राप्य न गर्वितो विषयिणः कस्यापदो ऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।
कः कालस्य न गोचरान्तरगतः को ऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥१०९॥ Śārdu

तथा च ।

काके शौचं द्यूतकारेषु सत्यं
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता
राजा मित्रं केन दृष्टं श्रुतं वा ॥११०॥ Śāli

अपरम् ' मयास्य भूपतेर् अन्यस्य वा कस्यचित् स्वप्ने ऽपि वाङ्मात्रेणापि न कृतम् अहितम् । तत् किम् इति पराङ्मुखो मां प्रति भूपतिः ' इति ।

एकदा च कदाचिद् दन्तिलकं राजद्वारे विष्कम्भितम् अवलोक्य संमार्जनकर्ता गोरभको द्वारपालान् विहस्येदम् उवाच । भो भो द्वारपालाः ' राजप्रसाददुर्ललितो ऽयं दन्तिलकः स्वयं निग्रहानुग्रहकर्ता च । तद् अनेन निवारितेन यथाहम् ' तथा यूयम्

अप्य् अर्धचन्द्रभागिनो भविष्यथ ' इति । तच् छ्रुत्वा दन्तिलकश् चिन्तयाम् आस । नूनम् अस्य गोरभकस्य चेष्टितम् । अथवा साध्व् इदम् उच्यते ।

अकुलीनो ऽपि मूर्खो ऽपि ' भूपालं यो ऽत्र सेवते ।
अपि संमानहीनो ऽपि ' स सर्वत्र प्रपूज्यते ॥१११॥
अपि कापुरुषो भीतः ' स्याच् चेन् नृपतिसेवकः ।
तथापि न पराभूतिं ' जनाद् आप्नोति मानवः ॥११२॥

एवं विलप्य स विलक्षमनाः सोद्वेगः स्वगृहं गत्वा गोरभम् आहूय निशामुखे वस्त्रयुगलेन संमान्येदम् उवाच । भद्र ' मया त्वं रागवशान् न निःसारितः । यतस् त्वं पुरोहितस्य पुरो ऽनुचितस्थाने समुपविष्टो दृष्टो ऽसि ' इत्य् अपमानितः । सो ऽपि स्वर्गराज्यम् इव तद् वस्त्रयुगलम् आसाद्य परं परितोषं गत्वा तम् उवाच । भोः श्रेष्ठिन् ' क्षान्तं मया तत् । अस्य संमानस्याचिराद् एव द्रक्ष्यसि राजप्रसादादि फलम् । एवम् उक्त्वा सपरितोषं विनिर्गतः । साधु चेदम् उच्यते ।

स्तोकेनोन्नतिम् आयाति ' स्तोकेनायात्य् अधोगतिम् ।
अहो सुसदृशी चेष्टा ' तुलायष्टेः खलस्य च ॥११३॥

ततश् चान्येद्युः स गोरभो राजकुले गत्वा योगनिद्रां गतस्य भूपतेः संमार्जनक्रियां कुर्वन्न् इदम् आह । अहो विवेको ऽस्मद्भूपतेः ' यः पुरीषोत्सर्गम् आचरंश् चिर्भिटीभक्षणं कुरुते । तच् छ्रुत्वा सविस्मयम् उत्थाय तम् उवाच । रे रे गोरभ ' किम् अप्रस्तुतं वदसि । गृहकर्मकरं मत्वा न त्वां व्यापादयामि । किं त्वया कदाचिद् अहम् एवंविधं कर्म समाचरन् दृष्टः । सो ऽब्रवीत् । देव ' द्यूतासक्ततया रात्रिजागरणेन मम संमार्जनं कुर्वतो ऽपि बलान्

निद्रा समुपागता । तद् यज् जल्पितम् । तन् न वेद्मि । तत् प्रसादं करोतु स्वामी मम निद्रापरवशस्य ।

राजा । मया तावद् आ जन्मतो ऽप्य् एवंविधं कर्म कुर्वता चिर्भिटिका न भक्षिता । तद् यथा ममायं व्यतिकरो ऽनेन मूढेनासंभाव्यो व्याहृतः । तथा दन्तिलस्यापि । इति निश्चयः । तन् मया न युक्तम् आचरितम् । यत् स वराको संमानेन वियोजितः । न तादृक्पुरुषाणाम् एवंविधं संभाव्यते । तदभावेन राजकृत्यानि पौरकृत्यानि च सर्वाणि शिथिलतां व्रजन्ति ।

एवम् अनेकधा विनिश्चित्य दन्तिलं समाहूय निजाङ्गाभरणानि वस्त्राणि च संयोज्य स्वाधिकारे नियोजयाम् आस ॥

अतो ऽहं ब्रवीमि । न पूजयति यो गर्वात् । इति । संजीवक आह । भद्र । सत्यम एतद् भवताभिहितम् । तद् एतत् कर्तव्यम् । इति ।

एवम् अभिहिते दमनकस् तं समादाय पिङ्गलकसकाशम् आगच्छत् । आह च । देव । स मया समानीतः संजीवकः । अधुना देवः प्रमाणम् । संजीवको ऽपि तं सादरं प्रणम्याग्रतः सविनयं स्थितः । पिङ्गलको ऽपि तस्य पीनवृत्तायतं नखकुलिशालंकृतं दक्षिणपाणिम उपरि दत्त्वा संमानपुरःसरम् अब्रवीत् । अपि भवतः शिवम् । कुतस् त्वम अस्मिन् विजने वने निवससि । इति । एवं पृष्टे संजीवको यथावृत्तम् एवात्मनः सार्थवाहवर्धमानादिवियोगं समाख्यातवान् । एतच् च श्रुत्वा पिङ्गलकेनाभिहितः । वयस्य । न भेतव्यम् । मद्भुजपरिरक्षिते ऽस्मिन् वने यथेप्सितम् उष्यताम् । अन्यच् च । भवता मत्समीपविहारिणाजस्रं भवितव्यम् । यत्कारणम् । बह्वपायम् इदं वनम् अनेकरौद्रसत्त्वसंकुलत्वात् । इति । संजीवकेनाभिहितम् । यथा देव आज्ञापयति ।

एवम् उक्त्वा स मृगाधिपो यमुनाकच्छम् अवतीर्य प्रकामम् उदकपानावगाहनं कृत्वा स्वैरप्रचारं पुनर् वनं प्रविष्टः ।

एवं तयोः प्रतिदिनं परस्परप्रीतिपरयोः कालो ऽतिवर्तते । संजीवकेनाप्य् अनेकशास्त्राधिगतबुद्धिप्रागल्भ्येन स्तोकैर् एवाहोभिर् मूढमतिर् अपि पिङ्गलको धीमान् कृतः । अरण्यधर्माद् वियोज्य ग्रामधर्मेषु नियोजितः । किं बहुना । प्रत्यहं संजीवकपिङ्गलकौ केवलं रहस्यं मिथो मन्त्रयेते ।

शेषः सर्वो ऽपि मृगपरिजनो दूरीभूतस तिष्ठति । तौ च शृगालौ प्रवेशम अपि न

लभेते। अन्यच् च। सिंहपराक्रमाभावात् सर्वो ऽपि मृगजनस् तौ च शृगालौ क्षुधाव्याधिबाधिता एकां दिशम् आश्रित्य स्थिताः। उक्तं च। यतः।

फलहीनं नृपं भृत्याः। कुलीनम् अथवोन्नतम्।
संत्यज्यान्यत्र गच्छन्ति। शुष्कं वृक्षम् इवाण्डजाः॥ ११४॥

तथा च। अपि संमानसंयुक्ताः। कुलीना भक्तितत्पराः।
वृत्तिभङ्गान् महीपालं। त्यजन्त्य् एव हि सेवकाः॥ ११५॥

अन्य च। कालातिक्रमणं वृत्तेर्। यो न कुर्वीत भूपतिः।
कदाचित् तं न मुञ्चन्ति। भर्त्सिता अपि सेवकाः॥ ११६॥

यावत् समस्तम् अप्य् एतत् परस्परं भक्षणार्थं सामादिभिर् उपायैस् तिष्ठति। तद् यथा।

देशानाम् उपरि क्ष्मापा। आतुराणां चिकित्सकाः।
वणिजो ग्राहकाणां च। मूढानाम् अपि पण्डिताः॥ ११७॥
प्रमादिनां तथा चौरा। भिक्षुका गृहमेधिनाम्।
*गणिकाः कामिनां चैव। सर्वलोकस्य शिल्पिनः॥ ११८॥
सामाद्यैः सज्जितैः पाशैः। प्रतीक्षन्ते दिवानिशम्।
उपजीवन्ति शक्त्या हि। जलजा जलजान् इव॥ ११९॥

तौ च करटकदमनकौ स्वामिप्रसादरहितौ क्षुत्क्षामकण्ठौ परस्परं मन्त्रयेते। तत्र दमनको ऽब्रवीत्। आर्य करटक। आवां तावद् अप्रधानतां गतौ। एष पिङ्गलकः संजीवकवचनानुरक्तः स्वव्यापारपराङ्मुखः संजातः। सर्वो ऽपि परिजनः को ऽपि कुत्रापि गतः। तस्मात् किं क्रियते। करटक आह। यद्य् अपि त्वदीयवचनं न करोति स्वामी। तद् अपि स्वदोषनाशाय वाच्य एषः। उक्तं च। यतः।

अशृण्वन्न् अपि बोद्धव्यो। मन्त्रिभिः पृथिवीपतिः।
यथा स्वदोषनाशाय। विदुरेणाम्बिकासुतः॥ १२०॥

तथा च। मदोन्मत्तस्य भूपस्य। कुञ्जरस्य च गच्छतः।
उन्मार्गवाच्यतां यान्ति। महामात्राः समीपगाः॥ १२१॥

यत् तु त्वयैष शष्पभोजी स्वामिना सह संयोजितः। तत् स्वहस्तेनाङ्गाराः कर्षिताः। दमनक आह। सत्यम् एतत्। ममायं दोषः। न स्वामिनः। उक्तं च। यतः।

जम्बुको हुडयुद्धेन। वयं चाषाढभूतिना।
दूतिका परकार्येण। त्रयो दोषाः स्वयंकृताः॥ १२२॥

करटक आह। कथम् एतत्। सो ऽब्रवीत्।

॥ कथा ४ ॥

अस्ति कस्मिंश्चिद् देशे विविक्तप्रदेशे मठायतनम्। तत्र परिव्राजको a
देवशर्मा नाम प्रतिवसति स्म। तस्यानेकयजमानप्रदत्तसूक्ष्मवस्त्रविक्रयवशात् कालेन महती वित्तमात्रा संजाता। ततः स न कस्यचिद् विश्वसिति, नक्तं दिनं कक्षान्तरात् तां न मुञ्चति। अथवा साधु चेदम् उच्यते।

अर्थानाम् अर्जने दुःखम्, अर्जितानां च रक्षणे।
नाशे दुःखं व्यये दुःखं, धिग् अर्थाः कष्टसंश्रयाः ॥१२३॥

अथाषाढभूतिनामा परवित्तापहारी धूर्तो ऽर्थमात्रां तस्य कक्षान्तर्गतां लक्षयित्वा व्यचिन्तयत्। कथं मयास्यैषा मात्रा हर्तव्या, इति। तद् अत्र मठे तावद् दृढशिलासंचयवशाद् भित्तिभेदो नास्ति। उच्चैस्तरत्वाच् च द्वारे प्रवेशो नास्ति। तद् एनं वचनैर् विश्वास्याहं छात्रतां व्रजामीति, येन विश्वस्तो मम हस्तगतो भवति। उक्तं च, यतः।

निःस्पृहो नाधिकारी स्यान्, नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात्, स्फुटवक्ता न वञ्चकः ॥१२४॥

एवं विनिश्चित्य तस्यान्तिकम् उपगम्य, ओं नमः शिवाय, इति ब्रुवाणः साष्टाङ्गं प्रणम्य सप्रश्रयम् उवाच। भगवन्, असारो ऽयं संसारः। गिरिनदीवेगोपमं यौवनम्। तृणाग्निसमं जीवितव्यम्। अभ्रच्छायासदृशा भोगाः। स्वप्नसदृशः पुत्रमित्रभृत्यकलत्रवर्गसंबन्धः। एतन् मया ज्ञातं सम्यक्। तत् किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति। तच् छ्रुत्वा देवशर्मा सादरम् आह।

वत्स । धन्यो ऽसि त्वम् । यत् प्रथमे वयस्य् एवं विरक्तिभावः ।
उक्तं च । यतः ।

प्रथमे वयसि यः शान्तः । स शान्त इति मे मतिः ।
धातुषु क्षीयमाणेषु । शमः कस्य न जायते ॥१२५॥

तथा च ।

आदौ चित्ते ततः काये । सतां संजायते जरा ।
असतां च पुनः काये । नैव चित्ते कदाचन ॥१२६॥

यच् च त्वं संसारसागरोत्तरणायोपायं पृच्छसि । तच् छ्रूयताम् ।

शूद्रो वा यदि वान्यो ऽपि । चाण्डालो वा जटाधरः ।
दीक्षितः शिवमन्त्रेण । स भस्माङ्गी द्विजो भवेत् ॥१२७॥
षडक्षरेण मन्त्रेण । पुष्पम् एकम् अपि स्वयम् ।
लिङ्गस्य मूर्ध्नि यो दद्यात् । न स भूयो ऽपि जायते ॥१२८॥

तच् छ्रुत्वाषाढभूतिस् तत्पादौ गृहीत्वा सप्रश्रयम् इदम् आह । भगवन् । व्रतदानेन । तर्हि । मम प्रसादः क्रियताम् । इति । देवशर्मा प्राह । वत्स । अनुग्रहं ते करिष्यामि। परं रात्रौ मठमध्ये न प्रवेष्टव्यम् । इति । यत्कारणम् । निःसङ्गता यतीनां प्रशस्यते । तव ममापि च । उक्तं च । यतः ।

दुर्मन्त्रान् नृपतिर् विनश्यति यतिः सङ्गात् सुतो लालनाद्
विप्रो ऽनध्ययनात् कुलं कुतनयाच् छीलं खलोपासनात् ।
मैत्री चाप्रणयात् समृद्धिर् अनयात् स्नेहः प्रवासाश्रयात्
स्त्री मद्याद् अनवेक्षणाद् अपि कृषिस् त्यागात् प्रमादाद्
धनम् ॥१२९॥ śārdū

तत् त्वया व्रतग्रहणाद् ऊर्ध्वं मठद्वारे तृणकुटीरके शयितव्यम् । इति । स आह । भगवन् । आदेशः प्रमाणम् । परत्र हि तेन मे

प्रयोजनम् । अथ तं शयनसमये देवशर्मा दीक्षानुग्रहं दत्त्वा शिष्यताम् अनयत् । सो ऽपि हस्तपादावमर्दनेन पवित्रकानयनादिक्रियया च परिचर्यया तं परं परितोषम् अनयत् । तथापि कक्षान्तरान् मात्रां न मुञ्चति ।

अथैवं गच्छति काल आषाढभूतिश् चिन्तयाम् आस । अहो, कथंचिद् अप्य् एष मे विश्वासं न गच्छति । तत् किं दिवापि शस्त्रेण मारयामि, किं वा विषं प्रयच्छामि, किं वा पशुधर्मेण व्यापादयामि, इति ।

एवं चिन्तयतस् तस्य देवशर्मशिष्यपुत्रः कश्चिद् ग्रामाद् आमन्त्रणार्थं समायातः प्राह च । भगवन्, पवित्रारोहणविषये मम गृहम् आगम्यताम्, इति । तच् छ्रुत्वा देवशर्माषाढभूतिना सह प्रस्थितः । अथैवं तस्य गच्छतो ऽग्रे काचिन् नदी समायाता । तां दृष्ट्वा मात्रां कक्षान्तराद् अवतार्य कन्थामध्ये गुप्तां निधाय देवतार्चनानन्तरम् आषाढभूतिम् इदम् आह । आषाढभूते, यावद् अहं पुरीषोत्सर्गं कृत्वा समागच्छामि, तावद् एषा कन्था योगेश्वरश् च सावधानेन रक्षणीयः । इत्य् उक्त्वा गतः । आषाढभूतिर् अपि तस्मिन्न् अदर्शनीभूते मात्राम् आदाय सत्वरं प्रस्थितः ।

b देवशर्मापि छात्त्रगुणगणानुरञ्जितमनाः सुविश्वस्त उपविष्टो यावत् तिष्ठति, तावद् धुडयूथमध्ये *हुडयुगलयुद्धम् अपश्यत् । अथ रोषवशाद् धुडयुगलस्यापसरणं कृत्वा भूयो ऽपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो भूरि रुधिरं पतति । तच् च दृष्ट्वाशाप्रतिबद्धचित्तः पिशितलोलुपतया गोमायुस् तयोर् अन्तरं स्थित्वा रुधिरम् आस्वादयति । देवशर्मापि तद् आलोक्य व्यचिन्तयत् ।

अहो ' मन्दमतिर् अयं जम्बुकः । यदि कथम् अप्य् अनयोः संघट्टे पतिष्यति ' तन् नूनं मृत्युम् आप्स्यति ' इति वितर्कयामि । अथान्यस्मिन् प्रस्तावे तथैव रक्तास्वादनलौल्यान् नापसृतस् तयोः शिरःसंपाते पतितो मृतश् च । ततो देवशर्मा प्राह । जम्बुको हुडयुद्धेन ' इति । देवशर्मापि तं *शोचमानो मात्राम् उद्दिश्य प्रस्थितः ।

शनैः शनैर् यावद् आगच्छति ' तावद् आषाढभूतिं न पश्यति । ततश् चौत्सुक्याच् छौचं विधाय यावत् कन्थाम् आलोकयति ' तावन् मात्रां न पश्यति । ततश् च ' हा हा मुषितो ऽस्मि ' इति जल्पन् भूतले मूर्छया निपपात । ततश् च क्षणाच् चेतनां लब्ध्वा भूयो ऽपि समुत्थाय फूत्कर्तुम् आरब्धः । भो भो आषाढभूते ' क्व मां वञ्चयित्वा गतो ऽसि । देहि मे प्रतिवचनम् । एवं बहुविधं विलप्य तस्य पदपद्धतिम् अन्वेषयन् ' वयं चाषाढभूतिना ' इति प्रजल्पञ् शनैः शनैः प्रस्थितः ।

अथ गच्छन् देवशर्मा सभार्यं कौलिकम् एकं मद्यपानकृते समीपवर्तिनि नगरे प्रचलितम् अवलोक्य प्रोवाच । भो भद्र ' वयं सूर्योढा अतिथयस् तवान्तिकं प्राप्ताः । अत्र ग्रामे कम् अपि न जानीमः । तद् गृह्यताम् अतिथिधर्मः । उक्तं च ' यतः ।

अप्रणाद्यो ऽतिथिः सायं ' सूर्योढो गृहमेधिनाम् ।
पूजया तस्य देवत्वं ' प्रयान्ति गृहमेधिनः ॥१३०॥

तथा च ।

तृणानि भूमिर् उदकं ' वाक् चतुर्थी च सूनृता ।
सताम् एतानि हर्म्येषु ' नोच्छिद्यन्ते कदाचन ॥१३१॥

तथा च ।

स्वागतेनाग्नयः प्रीता । आसनेन शतक्रतुः ।
पादशौचेन गोविन्दो । अन्नाद्येन प्रजापतिः ॥१३२॥

कौलिको ऽपि तच् छ्रुत्वा भार्याम् आह । प्रिये । गच्छ त्वम् एनम् अतिथिम् आदाय गृहं प्रति । चरणशौचभोजनशयनादिभिः सत्कृत्य तत्रैव तिष्ठ । अहं तव कृते प्रभूतं मद्यमांसम् आनेष्यामि । इति । एवम् उक्त्वा प्रस्थितः ।

सापि भार्या पुंश्चली तम् आदाय प्रहसितवदना देवदत्तं मनसि चिन्तयन्ती गृहं प्रति प्रतस्थे । अथवा साध्व् इदम् उच्यते ।

दुर्दिवसे ऽसितपक्षे । दुःसंचारासु नगरवीथीषु ।
पत्युर् विदेशगमने । परमसुखं जघनचपलायाः ॥१३३॥ ar
पर्यङ्केष्व् आस्तरणं । पतिम् अनुकूलं मनोहरं शयनम् ।
तृणम् इव लघु मन्यन्ते । कामिन्यश् चौर्यरतलुब्धाः ॥१३४॥ ar

तथा च ।

कुलपतनं जनगर्हां । बन्धनम् अपि जीवितव्यसंदेहम् ।
अङ्गीकरोति कुलटा । सततं परपुरुषसंसक्ता ॥१३५॥ ai

अथ गृहं गत्वा देवशर्मणे भग्नखट्वां समर्प्येदम् आह । भो भो भगवन् । यावद् अहं स्वसखीं ग्रामाद् अभ्यागतां संभाष्य द्रुतम् आगच्छामि । तावत् त्वयास्मद्गृहे ऽप्रमत्तेन भाव्यम् । एवम् उक्त्वा शृङ्गारं विधाय यावद् देवदत्तम् उद्दिश्य व्रजति । तावत् तद्भर्ता संमुखो मदविह्वलाङ्गो मुक्तकेशः पदे पदे प्रस्खलन् गृहीतमद्यभाण्डः समभ्येति । तं च दृष्ट्वा सा द्रुततरं व्याघुट्य स्वगृहं प्रविश्य मुक्तशृङ्गारा यथापूर्वम् अभवत् । कौलिकस् तां पलायमानां कृतशृङ्गाराम् अवलोक्य प्राग् एव कर्णपरंपरया तस्याः परवाद-

श्रवणात् क्षुभितहृदयः क्रोधवशतो गृहे प्रविश्य ताम् उवाच। आः पापे ' पुंश्चलि ' क्व प्रस्थितासि। सा प्रोवाच। अहं त्वत्सकाशाद् आगता न कुत्रचिद् अपि निर्गता। तत् कथं मद्यपानवशाद् अप्रस्तुतं वदसि। अथवा साध्व् इदम् उच्यते।

वैकल्यं धरणीपातं ' नित्यानुचितजल्पनम्।
संनिपातस्य चिह्नानि ' मद्यं सर्वाणि दर्शयेत् ॥१३६॥

तथा च। करस्पादो ऽम्बरत्यागस् ' तेजोहानिः सरागता।
वारुणीसङ्गजावस्था ' भानुनाप्य् अनुभूयते ॥१३७॥

सो ऽपि तच् छ्रुत्वा प्रतिकूलवचनं वेषविपर्ययम् अवलोक्य ताम् आह। पुंश्चलि ' चिरकालं मे शृण्वतस् *तवापवादः। तद् अद्य स्वयं संजातप्रत्ययः। तवापि यथोचितं निग्रहं करोमि। एवम् अभिधाय लगुडप्रहारैस् तां जर्जरितदेहां विधाय स्थूणया सह दृढबन्धनेन बद्ध्वा मदविह्वलाङ्गो निद्रावशम् अगमत्।

एतस्मिन्न् अन्तरे तस्याः सखी नापिती कौलिकं निद्रावशं विज्ञायागत्य चेदम् आह। सखि ' स देवदत्तस् तस्मिन् स्थाने प्रतीक्षते। तच् छीघ्रं गम्यताम्। सा प्राह। पश्य ममावस्थाम्। तत् कथं गच्छामि। ब्रूहि गत्वा तं कामिनम् ' यद् अद्यास्मिन्न् अवसरे त्वया सह कथं समागमः ' इति। नापिती प्राह। सखि ' मा मैवं वद। नायं कुलटाधर्मः। उक्तं च ' यतः।

विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम्।
उष्ट्राणाम् इव तेषां ' तन् मन्ये शंसितं जन्म ॥१३८॥ ār

तथा च।

संदिग्धे परलोके ' जनापवादे च जगति बहुचित्रे।
स्वाधीने पररमणे ' धन्यास् तारुण्यफलभाजः ॥१३९॥ ār

अनु च ।

यद्य् अपि न भवति दैवात्' पुमान् विरूपो ऽपि बन्धुकी रहसि ।
भव्यम् अपि तद् अपि कष्टान्' निजकान्तं सा भजत्य् एव ॥१४०॥

साब्रवीत् । यद्य् एवम्' तत् कथय' कथं गच्छामि दृढबन्धनबद्धा सती । संनिहितश् चायं पापात्मा पतिः । नापिती प्रोवाच । सखि' मदविह्वलो ऽयं सूर्यकरस्पृष्टः प्रबोधं यास्यति । तद् अहम् आत्मानं तव स्थाने निधाय त्वां मुञ्चामि । ततस् त्वं देवदत्तं संभाव्य द्रुततरम् आगच्छ' इति । तथैव *तयानुष्ठिते कौलिकः कस्मिंश्चित् क्षणे किंचिन्नतकोपः समुत्थाय मदवशात् ताम् आह । हे परुषवादिनि' यद्य् अद्यप्रभृति गृहान् निष्क्रमणं न करोषि परुषं च न वदसि' तत् त्वां मुञ्चामि । ततो नापिती स्वरभेदभयान् न किंचिद् ऊचे । सो ऽपि भूयस् तां तद् एवाह । अथ सा प्रत्युत्तरं यावन् न प्रयच्छति' तावत् स प्रकुपितस् तीक्ष्णशस्त्रम् आदाय तस्या नासिकाम् अच्छिनत्' आह च । पुंश्चलि' तिष्ठेदानीम् । न त्वां भूयस् तोषयिष्यामि । इति जल्पन् पुनर् निद्रावशम् उपगतः । देवशर्मापि वित्तनाशात् क्षुत्क्षामकण्ठो नष्टनिद्रस् तत् सर्वं स्त्रीचरित्रम् अपश्यत् ।

सापि कौलिकभार्या यथेच्छं देवदत्तेन सह सुरतसौख्यम् अनुभूय कस्मिंश्चित् क्षणे स्वगृहम् अभ्येत्य तां नापितीम् इदम् आह । अयि' शिवं भवत्याः । नायं पापात्मा मम गताया उत्थित आसीत् । नापिती प्राह । शिवं नासिकां विना शेषशरीरस्य । तद् द्रुतं मुञ्च मां बन्धनात्' यावन् नायं प्रतिबुध्यते' येन स्वगृहं गच्छामि । अन्यथा भूयो ऽप्य् एष दुष्टतरं कर्णच्छेदादिनिग्रहं करिष्यति ।

अथ बन्धुकी नापितीं बन्धनान् मुक्त्वा यथापूर्वं भूत्वा साक्षेपम् इदम् आह । धिग् धिग् महामूढ । को मां महासतीं पतिव्रतां धर्षयितुं व्यङ्गयितुं वा समर्थः । ततः शृण्वन्तु लोकपालाः ।

आदित्यचन्द्राव् अनिलो ऽनलश् च
द्यौर् भूमिर् आपो हृदयं यमश् च ।
अहश् च रात्रिश् च उभे च संध्ये
धर्मो विजानाति नरस्य वृत्तम् ॥१४१॥

तद् यदि मम सतीत्वम् अस्ति । तद् एते देवा भूयो ऽपि तादृग्रूपां नासिकां कुर्वन्तु । अथवा मनसापि यदि परपुरुषो ऽभिलषितः । तन् मां भस्मसान् नयन्तु । इति । एवम् उक्त्वा भूयो ऽपि तम् आह । भो दुरात्मन् । पश्य । मे सतीत्वप्रभावेण तादृग् एव नासिका संजाता । अथोल्मुकम् आदाय यावत् पश्यति । तावत् तादृग् एव नासिका रक्तप्रवाहश् च भूतले महान् दृष्टः । ततः स विस्मयमनास् ताम् उन्मुच्य बन्धनाच् चाटुशतैः परितोषितवान् ।

देवशर्मापि तत् सर्वम् अवलोक्य विस्मितमना इदम् आह ।

उशना वेद यच् छास्त्रं । यच् च वेद बृहस्पतिः ।
स्त्रीबुद्ध्या न विशिष्येत । तस्माद् रक्ष्याः कथं हि ताः ॥१४२॥

अनृतं साहसं माया । मूर्खत्वम् अतिलोभता ।
अशौचं निर्दयत्वं च । स्त्रीणां दोषाः स्वभावजाः ॥१४३॥

नातिप्रसङ्गः प्रमदासु कार्यो
नेच्छेद् बलं स्त्रीषु विवर्धमानम् ।
अतिप्रसक्तैः पुरुषैर् यतस् ताः
क्रीडन्ति काकैर् इव लूनपक्षैः ॥१४४॥

मधु तिष्ठति वाचि योषितां
हृदये हालहलं महद् विषम् ।
अत एव निपीयते ऽधरो
हृदयं मुष्टिभिर् एव ताड्यते ॥१४५॥ viyo

आवर्तः संशयानाम् अविनयभवनं पत्तनं साहसानां
दोषाणां संनिधानं कपटशतगृहं क्षेत्रम् अप्रत्ययानाम् ।
दुर्ग्राह्यं यन् महद्भिर् नरवरवृषभैः सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषम् अमृतयुतं धर्मनाशाय सृष्टम् ॥१४६॥ srag

कार्कश्यं स्तनयोर् दृशोस् तरलतालीकं मुखे श्लाघ्यते
कौटिल्यं कचसंचये च वचने मान्द्यं त्रिके स्थूलता ।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणो मृगदृशां ताः स्युः पशूनां प्रियाः ॥१४७॥ śārdū

एता हसन्ति च रुदन्ति च कार्यहेतोर्
विश्वासयन्ति च परं न च विश्वसन्ति ।
तस्मान् नरेण कुलशीलसमन्वितेन
नार्यः श्मशानघटिका इव वर्जनीयाः ॥१४८॥ vasa

व्याकीर्णकेसरकरालमुखा मृगेन्द्रा
नागाश् च भूरिमदराजिविराजमानाः ।
मेधाविनश् च पुरुषाः समरेषु शूराः
स्त्रीसंनिधौ परमकापुरुषा भवन्ति ॥१४९॥ vasa

तथा च ।

अन्तर् विषमया ह्य् एता ! बहिश् चैव मनोरमाः ।
गुञ्जाफलसमाकारा ! योषितः केन निर्मिताः ॥१५०॥

एवं तस्य परिव्राजकस्य चिन्तयतो निशा महता कृच्छ्रेणातिच-

क्राम । सा च दूतिका छिन्ननासिका स्वगृहं गत्वा चिन्तयाम् आस । किम् इदानीं कर्तव्यम् । कथम् एतन् महच् छिद्रम् आवरणीयम् ।

अथैवं चिन्तयन्त्यास् तस्या भर्ता राजकुले कार्यवशात् पर्युषितः । प्रत्यूषे च गृहम् अभ्येत्य द्वारि स्थितो ऽपि विविधपौरकृत्योत्सुकतया ताम् आह । भद्रे ' शीघ्रम् आनीयतां क्षुरभाण्डम् ' येन पौरकर्मकरणाय गच्छामि । सापि छिन्ननासिका प्रत्युत्पन्नमतिर् गृहाभ्यन्तरस्थितैव तदभिमुखं क्षुरम् एकं प्रेषयाम् आस । नापितो ऽपि समस्तक्षुरभाण्डासमर्पणात् क्रोधाविष्टस् तस्याः संमुखम् एव क्षुरं प्रक्षिप्तवान् । अथास्मिन् व्यतिकरे सा दुष्टोर्ध्वौ बाहू विधाय *फूत्कर्तुमना गृहान् निश्चक्राम । अहो ' पापेनानेन मम सदाचारवर्तिन्याः ' पश्यत ' नासिकाछेदो विहितः । तत् परित्रायध्वम् ।

एतस्मिन् अन्तरे राजपुरुषाः समभ्येत्य तं नापितं दृढप्रहारैर् जर्जरीकृत्य दृढबन्धनेन बद्ध्वा तया छिन्ननासिकया सह धर्माधिकरणस्थानं नीतवन्तः । ततः स पृष्टश् चाधिकरणिकैः । किम् इदं वैशसं स्वदारेषु कृतम् । अथासौ विस्मयमूढमतिर् यदा नोत्तरं प्रयच्छति ' तदा ते सभासदः शास्त्रानुगतम् ऊचुः ।

भिन्नस्वरमुखवर्णः ' शङ्कितदृष्टिः समुत्पतिततेजाः ।
भवति हि पापं कृत्वा ' स्वकर्मसंत्रासितः पुरुषः ॥१५१॥

तथा च । आयाति स्खलितैः पादैर् ' मुखवैवर्ण्यसंयुतः ।
ललाटस्वेदभाग् भूरिगद्गदं भाषते वचः ॥१५२॥
*कम्पमानम् अधो ऽवेक्षी ' पापं प्राप्तः सदा नरः ।
तस्माद् यत्नात् परिज्ञेयश् ' चिह्नैर् एतैर् विचक्षणैः ॥१५३॥

अनु च ।

प्रसन्नवदनो हृष्टः ' स्पष्टो वाचा सरोषदृक् ।
सभायां वक्ति सामर्षः ' सावष्टम्भो नरः शुचिः ॥१५४॥

तद् एष दुष्टचारित्रो दृश्यते । स्त्रीधर्षणाद् वध्य इति शूलायाम् आरोप्यताम् ' इति ।

अथ तं वध्यस्थानं नीयमानम् आलोक्य देवशर्मा तान् धर्माधिकृतान् गत्वा प्रोवाच । भोः ' अन्यायेनैष वराको नापितो वध्यते साधुसमाचारः । तच् छ्रूयतां मम वाक्यम् ।

जम्बुको हुडयुद्धेन ' वयं चाषाढभूतिना ।
दूतिका परकार्येण ' त्रयो दोषाः स्वयंकृताः ॥१५५॥

अथ ते सभ्यास् तम् ऊचुः । भो भगवन् ' कथम् एतत् । ततश् च देवशर्मा तेषां *वृत्तान्तत्रयम् अपि सविस्तरं न्यवेदयत् । अथ तच् छ्रुत्वा ते सर्वे विस्मितमनसो नापितं विमुच्यैवं प्रोचुः ।

अवध्यो ब्राह्मणो बालः ' स्त्री तपस्वी *च रोगभाक् ।
*विहिता व्यङ्गिता तेषाम् ' अपराधे गरीयसि ॥१५६॥

तद् अस्याः स्वकर्मवशाद् एव नासिकाछेदः संवृत्तः । ततो राजनिग्रहः कर्णच्छेदः कार्यः । तथानुष्ठिते देवशर्मापि दृष्टान्तद्वयेन स्वहृदयं संस्थाप्य स्वकीयमठायतनम् अगमत् ॥

अतो ऽहं ब्रवीमि । जम्बुको हुडयुद्धेन । इत्यादि । करटक आह । अथैवंविधे व्यतिकरे किं कर्तव्यम् आवयोः । दमनको ऽब्रवीत् । एवंविधे ऽपि समये मम बुद्धिस्फुरणं भविष्यति । येन संजीवकं प्रभोर् विश्लेषयिष्यामि । अपरं च । अस्मत्स्वामी महति व्यसने वर्तते *पिङ्गलकः । यतः ।

व्यसनं हि महाराज्ञो । मोहात् संप्रतिपद्यते ।
विधिना शास्त्रदृष्टेन ' भृत्यैर् वार्यः प्रयत्नतः ॥१५७॥

करटक आह । कस्मिन् व्यसने वर्तते स्वामी पिङ्गलकः । दमनक आह । इह हि सप्त व्यसनानि भवन्ति । तथा हि ।

स्त्रियो ऽक्षा मृगया पानं । वाक्पारुष्यं च पञ्चमम् ।
महच् च दण्डपारुष्यम् । अर्थदूषणम् एव च ॥ १५८ ॥

एकम् एवेदं व्यसनं प्रसङ्गाख्यं सप्ताङ्गम् । इति । करटकः पृच्छति । किम् एकम् एवेदं व्यसनम् । आहो *स्विद् अन्यान्य् अपि भवन्ति ।

दमनकः कथयति । नन्व् इह पञ्च मूलव्यसनानि । करटक आह । कस् तेषां विशेषः । सो ऽब्रवीत् । अभावः प्रदोषः प्रसङ्गः पीडनं गुणप्रतिलोमकं चेति । तत्र प्रथमं तावत् स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणाम् एकतमस्याप्य् अभावे ऽभावाख्यम् अवगन्तव्यम् । यदा तु बाह्यप्रकृतयो ऽन्तःप्रकृतयो वा प्रत्येकशो युगपद् वा प्रकुप्यन्ति । तद् व्यसनं प्रदोष इति । प्रसङ्गः पूर्वम् उक्त एव । स्त्रियो ऽक्षा मृगया पानम् । इत्यादि । तत्र । स्त्रियो ऽक्षा मृगया पानम् । इति कामजो वर्गः । वाक्पारुष्यादिः कोपजो वर्गः । तत्र कामजैर् व्यवहितः कोपजेषु प्रवर्तते । सुबोध एव कामजो वर्गः । कोपजस् तु त्रिविधो ऽपि विशेषवचनेनोच्यते । पराभिद्रोहबुद्धेर् असमीक्षितम् असद्दोषश्रावणं वाक्पारुष्यम् । निर्दयो *वधबन्धच्छेदविधिर् अनुचितो दण्डपारुष्यम् । निरनुक्रोशतो वित्तलोभो ऽर्थपारुष्यम् । एवं सप्तधा प्रसङ्गव्यसनं भवति । पीडनं पुनर् अष्टधा दैवाग्न्युदकव्याधिमरकविद्रवदुर्भिक्षासुरीवृष्टिभिर् भवति । अतिवृष्टिर् एवासुरीवृष्टिर् उच्यते । तद् एतद् व्यसनं पीडनं नाम मन्तव्यम् । अथ गुणप्रतिलोमकम् उच्यते । यदा संधिविग्रहयानासनसंश्रयद्वैधीभावानां षण्णां गुणानां प्रातिलोम्येन वर्तते । संधौ प्राप्ते विग्रहम् । विग्रहे च संधिं करोति । एवं शेषेष्व् अपि गुणेषु प्रातिलोम्येन यदा वर्तते । तद् व्यसनं प्रतिलोमकम् इति ।

तद् अयम् अस्मत्स्वामी पिङ्गलको मुख्यतमे ऽभावव्यसने वर्तते । यतः संजीवकेन वशीकृतः सन्न् अमात्यादिषु षट्सु गुणेषु चैकतमस्यापि चिन्तां न करोति । शष्पभोजिधर्मकर्मस्व् एव प्रायेण वर्तते । तत् किं बहुना प्रलपितेन । सर्वथा पिङ्गलकः संजीवकाद् वियोज्य एव । इति । यतः प्रदीपाभावात् प्रकाशाभावः ।

करटक आह । असमर्थो भवान् । तत् कथं वियोजयिष्यति । सो ऽब्रवीत् । भद्र । युक्तम् इदम् ।

उपायेन हि तत् कुर्याद् । यन् न शक्यं पराक्रमैः ।
काक्या कनकसूत्रेण । कृष्णसर्पो निपातितः ॥ १५९ ॥

करटक आह । कथम् एतत् । सो ऽब्रवीत् ।

॥ कथा ५ ॥

अस्ति कस्मिंश्चित् प्रदेशे महान् न्यग्रोधपादपः । तत्र वायसदंपती कृताश्रयौ प्रतिवसतः । तदपत्यानि च जातानि तद्वृक्षविवरानुसारी कृष्णसर्पो ऽसंजातक्रियाण्य् एव भक्षयति । अथासौ वायसो ऽपि तेनापकार*निर्वेदेनापि चिरपरिचितं न्यग्रोधतरुं परित्यज्य वृक्षान्तरं गन्तुं न शक्नोति । कुतः ।

त्रयः स्थानं न मुञ्चन्ति ' काकाः कापुरुषा मृगाः ।
अपमाने त्रयो यान्ति ' सिंहाः सत्पुरुषा गजाः ॥१६०॥

अथान्यदा सा काकी भर्तुः पादयोर् निपत्याब्रवीत् । स्वामिन् ' बहून्य् अपत्यानि ममानेन दुष्टसर्पेण भक्षितानि । तद् इदानीम् अपत्यदुःखेन पीडिता जानाम्य् एव ' क्वापि गच्छामि । तद् अन्यवृक्षान्तरम् आश्रयावः । कुतः ।

नास्त्य् आरोग्यसमं मित्रं ' नास्ति व्याधिसमो रिपुः ।
न चापत्यसमः स्नेहो ' न च दुःखं क्षुधासमम् ॥१६१॥

अन्यच् च ।

यस्य क्षेत्रं नदीतीरे ' भार्या च परसंगता ।
गृहे सर्पाश्रयस् तस्य ' कथं स्याच् चित्तनिर्वृतिः ॥१६२॥

तद् आवां प्राणसंशये वर्तावहे । अथ काको भृशं *दुःखपरीताङ्गो ऽवदत् । भद्रे ' चिरोषिता वयम् अस्मिन् वृक्षे । तन् न शक्नुमः परित्यक्तुम् । यतः ।

क्व गतो मृगो न जीवति ' पाथश्चुलुकेन घासमुष्ट्या वा ।
मुञ्चति चिरोषितत्वाज् ' जन्मवनं नापमाने ऽपि ॥१६३॥ ār

किं पुनर् अस्य दुरात्मनो महाशत्रोर् उपायेन वधं करिष्यामि ।

काक्याभिहितम् । महाविषोऽयं सर्पः । तत् कथम् अस्यापकरिष्यसि । सो ऽब्रवीत् । भद्रे, यद्य् अप्य् अहम् असमर्थो ऽस्यापकारकरणे, तथापि मम सुहृदो विद्वांसो नीतिशास्त्रकुशला विद्यन्ते । तेषां सकाशं गत्वोपायम् उपलभ्य तथा करिष्ये, यथाचिराद् एव दुष्टबुद्धिर् असौ विनश्यति । इति सामर्षम् अभिधाय ततो वृक्षान्तरं गतः । तदधो निवासिनं प्रियसुहृदं गोमायुं सविनयम् आहूय सर्वं तद् आत्मदुःखं न्यवेदयत्, उक्तवांश् च । भद्र, किम् एवं सति प्राप्तकालं मन्यसे । अपत्यघाताद् आवयोर् दंपत्योर् विघात एव । शृगाल आह । भद्र, परिभावितं मया । अत्र नासुखं त्वया कार्यम् । आसन्नमृत्युर् दुरात्मा नृशंसत्वात् स खलु कृष्णसर्पः । यतः ।

अपकारिषु मा पापं, चिन्तय त्वं कदाचन ।
स्वयम् एव पतिष्यन्ति, कूलजाता इव द्रुमाः ॥१६४॥

श्रूयते च ।

भक्षयित्वा बहून् मत्स्यान्, उत्तमाधममध्यमान् ।
अतिलौल्याद् बकः कश्चिन्, मृतः कर्कटकग्रहात् ॥१६५॥

वायसः पृच्छति । कथम् एतत् । शृगालः कथयति ।

॥ कथा ६ ॥

अस्ति कस्मिंश्चित् सरस्तीरैकदेशे बकः । स वृद्धभावात् सुखोपायं मत्स्यभक्षणवृत्तिम् आकाङ्क्षंस् तस्यैव *सरसस् तीरे ऽधृतिपरीतम् आत्मानं दर्शयन् समीपतरान् अपि मत्स्यान् अभक्षयन्न् अवस्थितः । तत्र च मत्स्यानां मध्य एकः कुलीरकः प्रतिवसति । स आसन्नो भूत्वाब्रवीत् । माम, किम् अद्याहारविहारक्रिया न क्रियते, यथा

प्रथमम् ' इति । सो ऽब्रवीत् । यावद् अहं मत्स्यादनेन पुष्टः सुहितश् च ' इयान् कालो मया युष्मान् आस्वादयता सुखेन नीतः । अतः परं युष्माकम् अत्याहितम् एष्यति ' इति कारणान् मम वृद्धभावे सुखजीवनवृत्तेर् अस्याश् छेदो भविष्यति । इत्य् अहं विमनाः । सो ऽब्रवीत् । माम ' कीदृशम् *अत्याहितं तत् ' इति । बक आह । अद्य मया बहूनां मत्स्यबन्धानां सरःसमीपेनातिक्रमतां व्याहारः श्रुतः ' यथा । बहुमत्स्यम् इदं महासरः । तत्र श्वः परश्वो वा जालं प्रक्षिप्यते । अद्य पुनर् नगरसमीपे *यो ह्रदः ' तस्मिन् एव गच्छामः । एवम् अवस्थिते युष्मासु विनष्टेषु वृत्तिच्छेदाद् अहम् अपि विनष्ट एवेति शोकेनाद्याहारनिवृत्तो ऽस्मि । तच् च दुष्टभाषितं श्रुत्वा सर्वैस् तैर् जलचरैः प्राणभीतैर् विज्ञप्तो बकः ' यथा । माम ' तात ' भ्रातः ' सखे ' परिणतबुद्धे ' यत एवापायः श्रूयते ' तत एवोपायो ऽपि लभ्यते । तद् अर्हस्य् अस्मान् अस्मान् मृत्युमुखात् त्रातुम् । बक आह । अण्डजो ऽहम् असमर्थो मानुषैः सह विरोधं कर्तुम् । किं पुनर् मम शक्तिर् अस्त्य् अस्माज् जलाशयाद् अन्यम् अगाधं जलाशयं संक्रमयितुम् । ततस् तैः कृतकवचनव्यामोहितचित्तैर् अभिहितः । माम ' सखे ' निष्कारणबन्धो ' माम् ' मां प्रथमतरं नय ' इति । किम् इह न श्रुतं भवता ।

स्थिरहृदयनिहितरागाः ' सुजनतया संस्मरन्त इह सुकृतम् ।
स्वं जीवितम् अपि सन्तो ' न गतं गणयन्ति मित्रार्थे ॥ १६६ ॥ ār

अथासौ *दुष्टमतिर् अन्तर्लीनम् अवहस्य स्वचित्तेन सह समर्थितवान् एवम् ' यद् एते मया मत्स्या बुद्धिपूर्वकं वश्याः कृताः सुखेनैव भक्षणीयाः । इति विचिन्त्य मत्स्यगणविज्ञप्तं प्रतिज्ञाय

चञ्च्वा समुद्धृत्यान्यत्र प्रदेशे शिलातलस्यैकदेशोपरि नीत्वाभक्षयत् । प्रत्यहं परमहर्षसौहित्यं च गच्छति । समेत्य च तान् भूयो ऽपि मिथ्यासंदेशैर् विश्वासयति । एकदा कुलीरको मृत्युभयेनोद्विग्नमना मुहुर् मुहुस् तम् अभ्यर्थितवान् । माम ' माम् अपि मृत्युमुखात् त्रातुम् अर्हसि । ततो बकश् चिन्तयाम् आस । निर्विण्णो ऽस्म्य् अनेनैकेन मत्स्यपिशितेन । एतदीयपिशितविशेषम् अपूर्वम् आस्वादयामि । इति विचिन्त्य कुलीरम् उत्क्षिप्य वियति गतः । सर्वाण्य् अम्भःस्थानानि परिहृत्य यावत् तस्यां तप्तशिलायाम् अवतारयितुकामः ' तावत् कुलीरेण पृष्टः । माम ' क्व तत् सरो ऽगाधम् । ततस् तेन विहस्योक्तम् । पश्येमां विस्तीर्णां तप्तशिलाम् । अस्यां सर्वे जलचराः स्वस्थाः संजाताः । तत् त्वम् अपि सांप्रतं स्वस्थो भव । ततः कुलीरेणाधो ऽवलोकयता यावद् दृष्टा मत्स्यास्थिकूटकराला महती वध्यशिला ' अथाचिन्तयत् । अहो ।

शत्रुरूपाणि मित्राणि ' मित्ररूपाश् च शत्रवः ।
जायन्ते कार्यसिद्ध्यर्थं ' केचिल् लोके विचक्षणाः ॥१६७॥

तथा । वरं विहारः सह पन्नगैः कृतः
शठात्मभिर् वा रिपुभिः सहोषितम् ।
अधर्मयुक्तैश् चपलैर् अपण्डितैर्
न पापमित्रैः सह वर्तितुं क्षमम् ॥१६८॥ vaṃśa

तद् भक्षिता अनेन पूर्वं खल्व् एते मत्स्याः ' येषाम् इमे परितो ऽस्थिकूटाः । तत् किं प्राप्तकालं मयाधुना कर्तव्यम् । अथवा किम् अत्र चिन्त्यते ।

गुरोर् अप्य् अवलिप्तस्य ' कार्याकार्यम् अजानतः ।
उत्पथप्रतिपन्नस्य ' दण्डो भवति शासनम् ॥१६९॥

तथा। तावद् भयस्य भेतव्यं ' यावद् भयम् अनागतम् ।
आगतं तु भयं दृष्ट्वा ' प्रहर्तव्यम् अशङ्कितैः ॥१७०॥

अतो यावद् एष माम् अत्र न क्षिपति ' तावद् एव चतुर्भिर् अपि विषाणाग्रैर् ग्रीवायां गृह्णामि । अथ तथापि कृते गन्तुम् आरब्धो बकः । तथापि मौर्ख्यात् कुलीरसंदंशग्रहणप्रतिविधानम् अजानञ् *शिरश्छेदम् अवाप्तवान् ।

कुलीरो ऽपि मृणालसदृशीं बकग्रीवां गृहीत्वा शनैः शनैर् मत्स्यान्तिकम् एव तत्रैव सरस्य् आगतः । तैश् चाभिहितः । भ्रातः ' कस्मात् समागतः ' इति । अथासौ तच्छिरश्चिह्नं दर्शयन् आह । सर्वतो ऽग्रे नीतजलचरास् तेन मिथ्यावादेन वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तन् मयायुःशेषतया ' विश्वस्तघातको ऽयम् ' इति ज्ञात्वा तस्य ग्रीवा समानीता । तद् अलं संभ्रमेण । सर्वजलचराणां क्षेमं भविष्यति ' इति ॥

अतो ऽहं ब्रवीमि । भक्षयित्वा बहून् मत्स्यान् ' इति । वायसः प्राह । भद्र ' कथय ' कथं स दुष्टसर्पो वधम् एष्यति ' इति । शृगाल आह । गच्छतु भवान् किंचित् स्थानं महेश्वराधिष्ठितम् । तस्मात् कस्यापि धनिनः कनकसूत्रं हारं वा प्रमादिनो गृहीत्वा तत्र प्रक्षिपतु ' यथा सर्पस् तद्ग्रहणेन वध्यते ।

अथ काकः काकी च तत्क्षणाद् आत्मेच्छयोत्पतितौ । ततश् च काकी किंचित् सरः प्राप्य यावत् पश्यति ' तन्मध्ये कस्यचिद् राज्ञो ऽन्तःपुरं जलासन्नन्यस्तकनकसूत्रमुक्ताहारवस्त्राभरणं जलक्रीडां करोति । अथ सा वायसी कनकसूत्रम् एकम् आदाय स्ववृक्षाभिमुखी प्रतस्थे । ततश् च कञ्चुकिनो वर्षधराश् च तं नीयमानम् अवलोक्य गृहीतलगुडाः सत्वरम् अनुययुः । काक्य् अपि सर्प-

कोटरे तत् कनकसूत्रं निक्षिप्य सुदूरतरम् अवस्थिता। अथ राजपुरुषा यावत् तं वृक्षम् आरोहन्ति ' तावत् कोटरगतः कृष्णसर्पः प्रसारितभोग आस्ते। अथ तं लगुडप्रहारैर् हत्वा कनकसूत्रम् आदाय यथाभिलषितं स्थानं गताः। वायसदंपती च ततः परं सुखेन वसतः॥

अतो ऽहं ब्रवीमि। उपायेन हि तत् कुर्यात्। इति। तथा च।

उपेक्षितः क्षीणबलो ऽपि शत्रुः
प्रमाददोषात् पुरुषैर् मदान्धैः।
साध्यो ऽपि भूत्वा प्रथमं ततो ऽसाव्
असाध्यतां व्याधिर् इव प्रयाति॥१७१॥

तन् न किंचिद् इह बुद्धिमताम् असाध्यम् अस्ति। इति। उक्तं च। यतः।

यस्य बुद्धिर् बलं तस्य। निर्बुद्धेस् तु कुतो बलम्।
वने सिंहो मदोन्मत्तः। शशकेन निपातितः॥१७२॥

करटक आह। कथम् एतत्। दमनकः कथयति।

॥ कथा ७ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे मदोन्मत्तो मन्दमतिनामा सिंहः। स चाजस्रम् एव *मृगोत्सादनं कुरुते। मृगस्य *दृष्टस्य न सहते। अथ तद्वनजाः सर्वे सारङ्गवराहमहिषगवयशशकादयो मिलित्वा दीनानना महीतलावसक्तजानवः प्रणतशिरसः सविनयास् तं मृगपतिं विज्ञपयितुम् आरब्धाः। अलम् ' देव ' परलोकविरुद्धेनातिनृशंसेन *निष्कारणसर्वसत्त्वोत्सादनकर्मणा कृतेन। श्रूयते च।

एकस्य जन्मनो ऽर्थे ' मूढाः कुर्वन्ति यानि पापानि।
जनयन्ति तानि दुःखं ' तेषां जन्मान्तरसहस्रम्॥१७३॥

तथा। अपवादो भवेद् येन ' येन विप्रत्ययो भवेत्।
नरके गम्यते येन ' तद् बुधः कथम् आचरेत्॥१७४॥

पुनश् च ।

सर्वाशुचिनिधानस्य ' कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते ' मूढाः पापानि कुर्वते ॥१७५॥

तद् एतज् ज्ञात्वा *मास्मत्कुलोत्सादनं कर्तुम् अर्हसि । यत्कारणम् ' वयम् एव स्वामिन एकैकं वनचरं वारकेण स्थानस्थितस्यैवाहारार्थं प्रत्यहं प्रेषयिष्यामः । एवं सति देवकीयवृत्तेर् अस्मज्जातेश् च विच्छेदो न भवति । तद् एष राजधर्मो ऽनुष्ठीयताम् । उक्तं च ।

शनैः शनैश् च यो राष्ट्रम् ' उपभुङ्क्ते यथाबलम् ।
रसायनम् इव क्ष्मापः ' स पुष्टिं परमां व्रजेत् ॥१७६॥
अजा इव प्रजा मोहाद् ' यो हन्यात् पृथिवीपतिः ।
तस्यैका जायते तृप्तिर् ' न द्वितीया कथंचन ॥१७७॥
फलार्थी नृपतिर् लोकान् ' पालयेद् यत्नम् आस्थितः ।
दानमानादितोयेन ' मालाकारो ऽङ्कुरान् इव ॥१७८॥
यथा गौर् दुह्यते काले ' पाल्यते च तथा प्रजाः ।
सिच्यते चीयते चैव ' लता पुष्पफलप्रदा ॥१७९॥
नृपदीपो धनस्नेहं ' प्रजाभ्यः संगृहन्न् अपि ।
अन्तरस्थैर् गुणैः शुभ्रैर् ' लक्ष्यते नैव केनचित् ॥१८०॥
यथा बीजाङ्कुरः सूक्ष्मः ' प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत् काले ' तद्वल् लोकः सुरक्षितः ॥१८१॥
हिरण्यं धान्यरत्नानि ' पानानि विविधानि च ।
तथान्यद् अपि यत् किंचित् ' प्रजाभ्यः स्यान् महीपतेः ॥१८२॥
लोकानुग्रहकर्तारः ' प्रवर्धन्ते महेश्वराः ।
लोकानां संक्षयाच् चैव ' क्षयं यान्ति न संशयः ॥१८३॥

अथ तद्वचः समाकर्ण्य मन्दमतिर् आह । अहो ' सत्यम् अभिहितं

भवद्भिः । परं यदि ममात्रोपविष्टस्य नैकैको मृगः समेष्यति ' तन् नूनं सर्वान् अपि भक्षयिष्यामि ' इति । अथ ' तथा '. इति प्रतिज्ञाय *निर्वृतिभाजस् तत्र वने निर्भयास् ते पर्यटन्ति ' एकश् च जातिक्रमेण वृद्धो वा वैराग्ययुक्तो वा शोकग्रस्तो वा पुत्रकलत्रनाशभीतो वा तस्याहारार्थं मध्याह्नसमये प्रतिदिनम् उपतिष्ठते । इति ।

अथ कदाचिज् जातिक्रमाच् छशकस्यावसरः संजातः । स च सर्वैर् मृगगणैर् *आज्ञापित इति चिन्तयाम् आस । कथम् एष दुष्टसिंहो वध्यो भविष्यति । अथवा ।

किम् अशक्यं बुद्धिमतां ' किम् असाध्यं निश्चयं दृढं दधताम् ।
किम् अवश्यं प्रियवचसां ' किम् अलभ्यम् *इहोद्यमस्यानाम् ॥१८४॥ ār

तत् सिंहम् एव व्यापादयामि । अथ मन्दं मन्दं गत्वा कालातिक्रमं विधाय व्याकुलहृदयस् तस्य वधोपायं चिन्तयन् दिनशेषे सिंहसमीपं प्रयातः । सिंहो ऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्किणी परिलिहन् अचिन्तयत् । अहो ' मया प्रातः समस्तमृगवधः कर्तव्यः । एवं तस्य चिन्तयतः शशको ऽपि मन्दं मन्दं गत्वा प्रणम्याग्रे स्थितः । अथ तं चिरायातम् अन्यच् च लघुतरम् अवलोक्य कोपज्वलितात्मा भर्त्सयमानः प्राह । रे अधम ' एकस् तावत् त्वं लघुः ' अपरं वेलातिक्रमेणेह प्राप्तः । तस्माद् एतस्माद् अपराधात् त्वां व्यापाद्य प्रातः सकलान्य् अपि मृगकुलान्य् उच्छेदयिष्यामि ' इति । अथ प्रणम्य सविनयं शशकः प्रोवाच । स्वामिन् ' अपराधो नास्माकं न चान्यमृगाणाम् । यत् कारणम् ' तच् छ्रूयताम् । सिंह आह । तत् सत्वरं निवेदय ' यावन् मम

दंष्ट्रागतो न भवसि । शशक आह । स्वामिन् ' अद्य समस्तमृगैर् जातिक्रमेण प्रस्तावं विज्ञाय लघुतरस्य मम ' ततः पञ्चशशकैः सहाहं प्रेषितः । ततश् चान्तराले महतः क्षितिविवरान् निर्गत्यैकेन सिंहेनाभिहितः । क्व प्रस्थिता यूयम् । अभीष्टदेवतां *स्मरत । ततो मयाभिहितम् । वयं स्वामिनो मन्दमतेः सिंहस्य भोजनार्थं समयधर्मेण गच्छामः । ततस् तेनाभिहितम् । यद्य् एवम् ' तन् मदीयम् एतद् वनम् । ततो मया सह समयधर्मेण समस्तैर् अपि मृगैर् वर्तितव्यम् । स चौररूपी मन्दमतिः । ततस् तम् आहूय द्रुतम् आगच्छ ' येन यः कश्चिद् आवयोर् मध्यात् पराक्रमेण राजा भविष्यति ' स सर्वान् एवैतान् मृगान् भक्षयिष्यति । ततो ऽहं तेनादिष्टः स्वामिसकाशम् अभ्यागतः । एतन् मम वेलातिक्रमकारणम् । तद् अत्र स्वामी प्रमाणम् ' इति । तच् छ्रुत्वा मन्दमतिः प्राह । भद्र ' यद्य् एवम् ' तर्हि सत्वरं दर्शय मम तं चौरसिंहम् ' *येनैतं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि । उक्तं च ।

भूमिर् मित्रं हिरण्यं वा ' विग्रहस्य फलत्रयम् ।
नास्त्य् एकम् अपि यद्य् एषां ' तन् न कुर्यात् कथंचन ॥१८५॥

यत्र न स्यात् फलं भूरि ' यत्र च स्यात् पराभवः ।
न तत्र मतिमान् युद्धं ' समुत्पाद्य समाचरेत् ॥१८६॥

शशक आह । स्वामिन् ' सत्यम् इदम् । स्वभूमिहेतोः परिभवाद् युध्यन्ते क्षत्रियाः । स परं दुर्गाश्रयः । ततो दुर्गान् निष्क्रम्य तेन वयं विष्कम्भिताः । तद् दुर्गस्थो दुःखसाध्यो रिपुर् भवति । उक्तं च ।

न गजानां सहस्रेण ' न च लक्षेण वाजिनाम् ।
तत् कृत्यं साध्यते राज्ञां ' दुर्गेणैकेन यद् भवेत् ॥१८७॥

शतम् एको ऽपि संधत्ते ' प्राकारस्थो धनुर्धरः ।
तस्माद् दुर्गं प्रशंसन्ति ' नीतिशास्त्रविचक्षणाः ॥१८८॥
पुरा गुरोः समादेशाद् ' *हिरण्यकशिपोर् भयात् ।
शक्रेण विहितं दुर्गं ' प्रभावाद् विश्वकर्मणः ॥१८९॥
तेनापि च वरो दत्तो ' यस्य दुर्गं स भूपतिः ।
विजयी स्यात् ततो *भूमौ ' दुर्गाणि सुबहून्य् अपि ॥१९०॥

तच् छ्रुत्वा मन्दमतिः प्राह । भद्र ' दुर्गस्थम् अपि दर्शय मे तं चौरम् ' येन व्यापादयामि । उक्तं च ।

जातमात्रं न यः शत्रुं ' रोगं च प्रशमं नयेत् ।
महाबलो ऽपि तेनैव ' वृद्धिं प्राप्य स हन्यते ॥१९१॥

तथा च ।

आत्मनः शक्तिम् उद्वीक्ष्य ' मानोत्साहौ तु यो व्रजेत् ।
शत्रून् एको ऽपि हन्याच् च ' क्षत्रियान् भार्गवो यथा ॥१९२॥

शशक आह । अस्त्य् एवम् । किं तु तथापि बलवान् असौ मया दृष्टः । तन् न युज्यते स्वामिनस् तत्सामर्थ्यम् अविदित्वैव गन्तुम् ' इति । उक्तं च ।

अविदित्वात्मनः शक्तिं ' परस्य च समुत्सुकः ।
गच्छन्न् अभिमुखो वह्नौ ' नाशं याति पतङ्गवत् ॥१९३॥

तथा च ।

यो ऽबलः प्रोन्नतं याति ' विहन्तुं सबलं रिपुम् ।
विमदः स निवर्तेत ' शीर्णदन्तो यथा गजः ॥१९४॥

मन्दमतिर् आह । किं तवानेन व्यापारेण । दर्शय मे तं दुर्गस्थम् अपि । शशक आह । यद्य् एवम् ' तद् आगच्छतु स्वामी । एवम् उक्त्वाग्रे व्यवस्थितः । ततः कंचित् कूपम् आसाद्य सिंहं प्रत्य् आह ।

स्वामिन् । कस् ते प्रतापं सोढुं समर्थः । येन त्वां दृष्ट्वा दूरतो ऽपि चौरो ऽयं तद् दुर्गम् अनुप्रविष्टः । तद् आगच्छ । येन दर्शयामि । इति । तच् छ्रुत्वा मन्दमतिर् आह । भद्र । सत्वरं दर्शय । सो ऽपि तस्य तं कूपम् अदर्शयत् । स च सिंहो ऽतिमूर्खतयात्मनः प्रतिबिम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच । ततस् तत्प्रतिशब्देन द्विगुणतरो नादः कूपात् समुत्थितः । अथासौ तं नादम् आकर्ण्य । शक्ततरो ऽयम् । इति मत्वात्मानं तस्योपरि क्षिप्त्वा प्राणान् मुमोच । शशको ऽपि हृष्टमनाः सर्वान् मृगान् आनन्द्य तैः प्रशस्यमानो यथासुखं तत्र वने वसति स्म ॥

अतो ऽहं ब्रवीमि । यस्य बुद्धिर् बलं तस्य । इति । करटक आह । काकतालीयम् इदम् । यद्य् अपि शशकस्य सिद्धिः संजाता । तद् अपि शक्तिहीनेन पुरुषेण महता सह च्छद्मना न व्यवहर्तव्यम् । दमनक आह । शक्तिमताशक्तिमता चोद्यमे निश्चयः कर्तव्यः । उक्तं च ।

नित्योद्यतस्य पुरुषस्य भवेद् धि लक्ष्मीर्
दैवं हि दैवम् इति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषम् आत्मशक्त्या
यत्ने कृते यदि न सिध्यति को ऽत्र दोषः ॥१९५॥ vasa

अपरं च । सदोद्यतानां देवा अपि सहायिनो भवन्ति । उक्तं च ।

कृते विनिश्चये पुंसां । देवा यान्ति सहायताम् ।
विष्णुश् चक्रं गरुत्मांश् च । कौलिकस्य यथाहवे ॥१९६॥

अन्यच् च । सुप्रयुक्तस्य दम्भस्य । ब्रह्माप्य् अन्तं न गच्छति ।
कौलिको विष्णुरूपेण । राजकन्यां निषेवते ॥१९७॥

करटक आह । कथम् एतत् । दम्भेनापि निश्चयपूर्वं सुप्रयुक्तेन कार्यसिद्धिः । इति । सो ऽब्रवीत् ।

॥ कथा ८ ॥

अस्ति गौडेषु जनपदेषु पुण्ड्रवर्धनं नाम नगरम् । तत्र कौलिको रथकारश् च द्वौ सुहृदौ स्वस्वशिल्पे परं *पारम् आगतौ स्वकर्म- बलोपार्जितवित्तत्वाद् अगणितव्ययक्रियौ मृदुविचित्रबहुमूल्यनि- वसनौ पुष्पताम्बूलालंकृतौ कर्पूरागरुमृगनाभिपरिमलसुगन्धी प्रतिवसतः । तौ च प्रहरत्रयं कर्म कृत्वा पाश्चात्यप्रहरे दिवसस्य *शरीरशुश्रूषां च प्रत्यहं चत्वरायतनादिस्थानेषु मिलितौ विचरतः प्रेक्षणकगोष्ठीवर्धापनकोत्सवादिलोकमेलकेषु पर्यटनं कृत्वा संध्या- यां स्वगृहे गच्छतः । एवं च तयोः कालो ऽतिवर्तते । अथ कदाचित् कस्मिंश्चित् संजातमहोत्सवे सर्व एव पौरजनो यथावि- भवभृतालंकारो देवतायतनादिषु स्थानेषु परिभ्रमितुं प्रवृत्तः । ताव् अपि कौलिकरथकारौ कृतालंकारौ स्थानस्थानकेषु मिलितशृ- ङ्गारजनमुखान्य् अवलोकयन्तौ महति धवलगृहवातायने समुप- विष्टां प्रथमयौवनोद्भिन्नकर्कशस्तनयुगलतिलकितहृदयदेशाम् उप- चीयमाननितम्बबिम्बां क्षामीभवन्मध्यां सजलजलदनीलमृदुस्नि- ग्धतरङ्गितशिरसिजां स्मरविलासदोलासंवादिश्रवणनिवेशिततत- रलकनकपत्त्रां नवविकसितकोमलकमलकान्तमुखीं निद्राम् इव सकललोकलोचनग्राहिणी सखीजनपरिवृतां राजदुहितरं दृष्ट- वन्तौ ।

तां चाप्रतिरूपरूपां निरूपयन् कौलिकः पञ्चभिर् बाणैर् मनसि मनसिजेन *समन्तात् ताडितः कथं कथम् अपि धैर्यावष्ट- म्भाद् आकारसंवरणं कृत्वा गृहं संप्राप्तः सर्वा दिशो राजदुहि-

मयीर् अपश्यत् । दीर्घान् उष्णांश् च निःश्वासान् मुञ्चमानो नास्तीर्णायाम् एव खट्वायां निपत्य स्थितः । ताम् एव यथा-दृष्टां निरूपयंश् चिन्तयंश् चावतिष्ठते स्म । श्लोकं चापठत् ।

यत्राकृतिस् तत्र गुणा वसन्ति
नैतद् धि सम्यक् कविभिः प्रणीतम् ।
येनातिचार्वङ्ग्य् अपि मे हृदिस्था
दुनोति गात्रं विरहे प्रियासौ ॥१९८॥ upa

अथवा ।

एकम् उत्कण्ठया व्याप्तम् ' अन्यद् दयितया हृतम् ।
चैतन्यम् अपरं धत्ते ' कियन्ति हृदयानि मे ॥१९९॥

अथवा ।

यदि सर्वस्य लोकस्य ' गुणाः कल्याणकारिणः ।
तत् कथं मृगशावाक्ष्या ' गुणयोगो दुनोति माम् ॥२००॥
यो यत्र नाम निवसति ' करोति परिरक्षणं स किल तस्य ।
मुग्धे निवससि हृदये ' दहसि च सततं नृशंसासि ॥२०१॥ ār
रागी बिम्बाधरो ऽसौ स्तनकलशयुगं यौवनारूढगर्वं
नीचा नाभिः प्रकृत्या कुटिलकम् अलकं स्वल्पकश् चापि मध्यः ।
कुर्वन्त्व् एतानि नाम प्रसभम् इह मनश्चिन्तितान्य् आशु खेदं
यन् मां तस्याः कपोलौ दहत इति मुहुः स्वच्छकौ तन् न युक्तम् ॥२०२॥ srag

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
तस्याः पयोधरयुगे रतखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
स्वप्स्यामि किं क्षणम् अहं क्षणलब्धनिद्रः ॥२०३॥ vasa

हन्तव्यपक्षे निर्दिष्टा । यदि नाम विधेर् वयम् ।
किम् उपाया न सन्त्य् अन्ये । दर्शिता यन् मृगेक्षणा ॥२०४॥
दूरस्थाम् अपि येन पश्यसि मनः कान्तां पुरःस्थायिनीं
तं योगं मम चक्षुषोऽप्य् उपदिश भ्रान्तं यदि प्रेक्षणे ।
संतापाय च संगमोऽपि नितराम् एकाकिनस् ते ध्रुवं
न ह्य् आत्मंभरयो भवन्ति सुखिनो भद्रं परार्थैषिणाम् ॥२०५॥ śā
एकं नाम जडात्मकस्य मुषितं लावण्यम् इन्दोस् तया
नेत्राभ्याम् असितोत्पलस्य च रुचिः प्रायेण तन् नो मृषा ।
नो जानाति हृताम् असौ पदगतिं मत्तो वराकः करी
तन्वङ्ग्या विदतोऽपि यन् मम हृतं चेतस् तद् अत्यद्भुतम् ॥२०६॥ śā
दिक्षु भूमौ तथाकाशे । सर्वत्र च विभाव्यते ।
स्मर्यते प्राणसंदेहे । तन्वी नारायणायते ॥२०७॥
क्षणिकाः सर्वसंस्कारा । बुद्धेनोक्तं मृषा वचः ।
चिन्तयन्तो यतः कान्तां । नित्यम् अक्षणिका वयम् ॥२०८॥

एवं तस्य विलपतो बहुप्रकारम् उद्भ्रान्तचित्तस्य कथम् अ
निशा जगाम । अन्येद्युश् च तथैवोचितवेलायां रथकारः कृतशृ
ङ्गारः कौलिकभवनम् अगमत् । पश्यति च कौलिकम् अना
स्तृतखट्वायां प्रसारितबाहुपादं दीर्घोष्णनिःश्वासम् आपाण्डुगल्ल
उद्गताश्रुजलम् । तं च तद्रूपं दृष्ट्वाब्रवीत् । *अयि सखे । कि
एवंविधाद्य ते शरीरावस्था । अथासौ पुनः पुनः पृच्छ्यमान
ऽपि व्रीडया यावन् न किंचित् कथयति । तावद् रथका
खेदपरवशः श्लोकम् अपठत् ।

नैतन् मित्रं यस्य कोपाद् बिभेति
यद् वा मित्रं शङ्कितेनोपचर्यम् ।

यस्मिन् मित्रे विश्वसेन् मातरीव
तद् वै मित्रं संगतानीतराणि ॥२०९॥ śāli

पुनश् च तेनेङ्गितज्ञेन हस्तेन हृदयादि परामृश्योक्तम् । वयस्य ' यथा तर्कयामि ' तथा न ते ज्वरकृता किं तु स्मरकृतेयम् अवस्था ' इति ।

यदा च तस्यानेन स्वयम् एव वाक्यावसरः कृतः ' तदासाव् उपविष्टो भूत्वा श्लोकम् अपठत् ।

स्वामिनि गुणान्तरज्ञे ' गुणवति भृत्ये ऽनुवर्तिनि कलत्रे ।
मित्रे चानुपचर्ये ' निवेद्य दुःखं सुखी भवति ॥२१०॥ ā

इत्य् उक्त्वा सर्वं राजपुत्रीदर्शनात् प्रभृति स्ववृत्तान्तम् आख्यातवान् । ततश् च रथकारेण संचिन्त्याभिहितम् । क्षत्रियो ऽसौ राजा ' त्वं च वैश्यः सन्न् अधर्माद् अपि न बिभेषि । ततो ऽसौ प्राह । क्षत्रियस्य तिस्रो भार्या धर्मतो भवन्त्य् एव । तद् एषा कदाचिद् *वैश्यासुता भविष्यति । तद् अनुरागो ममास्याम् । उक्तं च ।

असंशयं क्षत्रपरिग्रहक्षमा
यद् *आर्यम् अस्याम् अभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
प्रमाणम् अन्तःकरणप्रवृत्तयः ॥२११॥ vaṃśa

ततो रथकारस् तस्य निश्चयं विज्ञायावदत् । वयस्य ' किम् अधुना कर्तव्यम् । कौलिक आह । किम् अहं जानामि ' त्वयि मित्रे यद् अभिहितं मया । इत्य् उक्त्वा तूष्णीम् अभूत् । ततो रथकारस् तम् आह । उत्तिष्ठ । स्नात्वा भुङ्क्ष्व । त्यज नैराश्यम् । अहं ते तम् उपायं करिष्यामि ' येन तया *सहाहीनकालं त्वं संभोगसुखम् अनुभविष्यसि ' इति ।

अथ कौलिकः सुहृदङ्गीकारप्रत्युज्जीविताश उत्थाय सर्वं यथाकृत्यम् अनुष्ठितवान्। अन्येद्युश् च रथकारः काष्ठमयम् अनेकवर्णकचिचितं कीलिकाप्रयोगोत्पन्नं नवतरघटितं गरुडयन्त्रम् आदायोपस्थितः कौलिकम् आह । वयस्य ' एनम् आरुह्य कीलिकां दत्त्वा यत्रेष्यते ' तत्र गम्यते । यत्र च कीलिकापनीयते ' तत्र यन्त्रम् इदम् अवतरति । तस्माद् गृहाणैतत् । अद्यैव निशि सुप्ते जने कृतशरीरशुश्रूषो *मद्विज्ञानप्रयोगसंघटितनारायणरूपम् आस्थायैनं गरुडम् आरुह्य कन्यान्तःपुरहर्म्यतले ऽवतीर्य तया राजपुत्र्या सह यथासमीहितं निष्पादयस्व । मयैवं निश्चितम् ' असौ राजदुहिता हर्म्यतल एकाकिनी स्वपिति ' इति ।

एवम् अभिधाय गते रथकारे मनोरथशतैर् दिवसशेषम् अतिवाह्य प्रसन्नायां रजन्यां स्नानधूपचूर्णविलेपनताम्बूलमुखवासकुसुमादिभिर् अतिसुरभिविचित्रमाल्याम्बरो मुकुटाद्याभरणालंकृतः कौलिकस् तथैवानुष्ठितवान् ' यावद् असौ *राजकन्या सुधांशुकरावदाते हर्म्यतले शयनतलावस्थितैकाकिनी चन्द्रमसम् *अवलोकयन्ती मनाग् मदनेन *स्पृश्यमानमानसा सहसैव तं वैनतेयाधिरूढं नारायणाकारं कौलिकम् अवलोकितवती । दृष्ट्वा च शय्यायाः ससंभ्रमम् उत्थाय पादाभिवन्दनं कृत्वा व्यज्ञपयत् । देव ' किंनिमित्तम् इहागमनेनानुगृहीतास्मि । तस्मात् समादिश्यताम् ' किं कर्तव्यम् । एवं वादिन्यां राजदुहितरि कौलिको गम्भीरश्लक्ष्णया गिरा शनैर् इदम् उवाच । भद्रे ' त्वदर्थम् एवेदम् इहागमनम् । साब्रवीत् । मानुषी कन्या *वाहम् । तेनाभिहितम् । शापभ्रष्टा त्वं ममैव पूर्वपत्नी । मया चैतावन्तं कालं मानुषसंपर्काद् रक्षिता । तस्मात् त्वाम् अहं गान्धर्वेण विवाहेन

विवाहयामि । ततस् तया ' मनोरथानाम् अप्य् अगम्यम् ' इति मत्वा ' तथा ' इति प्रतिपन्नम् । तेनासौ गान्धर्वेण विवाहेन परिणीता ।

ततस् तयोः प्रतिदिवसं वर्धमानानुरागयोः सुरतसुखान्य् अनुभवतोर् गच्छन्ति दिवसाः । कौलिको ऽपि रात्रिशेषसमये यन्त्रगरुडम् आरुह्य ' *वैकुण्ठस्वर्गं यास्यामि ' इति *ताम् उत्कलापयित्वा स्वगृहम् अलक्षितो नित्यम् एवागच्छति ।

अथ कदाचिच् चान्तःपुररक्षिभिः पुरुषोपभोगचिह्नान्य् आलक्ष्य राजदुहितुः प्राणविनाशभयभीतैः स्वामिने निवेदितम् । देव ' अभयेन प्रसादः क्रियताम् । किंचिद् विज्ञप्यम् अस्ति । राज्ञा ' तथा ' इति प्रतिपन्ने ऽन्तःपुरपालैर् विज्ञप्तम् । देव ' प्रयत्नेनापि रक्ष्यमाणे पुरुषप्रवेशे राजदुहितुः सुदर्शनायाः पुरुषेणोपभुज्यमानाया इवाकारः संलक्ष्यते । नात्रास्माकं गतिविषयः । देव एवात्र प्रमाणम् ।

एवम् आवेदितो राजा समाकुलेन मनसा व्यचिन्तयत् ।

जातेति कन्या महतीह चिन्ता
कस्मै प्रदेयेति महान् वितर्कः ।
दत्वा सुखं प्राप्स्यति वा न वेति
कन्यापितृत्वं खलु नाम कष्टम् ॥२१२॥ indra

तथा ।

जननीमनो हरति जातवती
परिवर्धते सह शुचा सुहृदाम् ।
परसात् कृतापि कुरुते मलिनं
दुरतिक्रमा दुहितरो विपदः ॥२१३॥ prami

तथा ।

यास्यति सज्जनहस्तं ' रमयिष्यति तं भवेच् च निर्दोषा ।
उत्पादितयापि कविस् ' ताम्यति कथया दुहित्रेव ॥२१४॥

एवं बहुविधं विचिन्त्य देवीपार्श्वे गत्वा प्रोवाच । देवि ' विज्ञायतां सम्यक् ' यद् एते कञ्चुकिनो वदन्ति । कस्याद्य कुपितः कृतान्तः ' येनैतद्द्रोहः कृतः ' इति । अथ तैर् यथास्थिते कथिते देवी व्याकुलितमनाः सत्वरं कन्यान्तःपुरे गत्वा खण्डिताधरां नखविलिखितशरीरावयवां दुहितरम् अपश्यत् ' प्रोवाच *च । आः पापे ' कुलकलङ्ककारिणि । किम् एवं शीलखण्डनं कृतम् । को ऽयं कृतान्तावलोकितस् त्वत्सकाशम् अभ्येति । तत् कथ्यताम् एवं गते ऽपि सत्यम् ' इति । सापि त्रपाधोमुखी जगाद सकलं *विष्णुरूपकौलिकवृत्तान्तम् ' इति ।

तच् छ्रुत्वा सा प्रहसितवदना ' *पुलकितसर्वाङ्गी सत्वरं गत्वा राजानम् ऊचे । देव ' दिष्ट्या वर्धसे । निशीथे नित्यम् एव भगवान् नारायणः कन्यकापार्श्वे स्वयं समभ्येति । तेन गान्धर्वविवाहेन परिणीता सा । तद् अद्य रात्रौ मया त्वया च वातायनगताभ्यां स निशीथे द्रष्टव्यः ' यतो मानुषैः सह वचनालापं न करोति । इति श्रुत्वा राजा प्रहृष्टहृदयस् तद् दिनं वर्षशतम् इव कथंचिद् अतिचक्राम । ततस् तु रात्रौ निभृतो भूत्वा राजा सकलत्रो वातायनस्थो गगननिवेशितदृष्टिर् यावत् तिष्ठति ' तावद् गरुडारूढं शङ्खचक्रगदाहस्तं यथोचितचिह्नम् आकाशाद् अवतरन्तम् अपश्यत् । ततः सुधाप्लावितम् इवात्मानं मन्यमानो देवीम् उवाच । नास्त्य् अन्यो *धन्यतरो लोके मया त्वया च समः ' ययोः प्रसूतिं भगवान् नारायणः स्वयम् एत्य भजते । तत् सिद्धा अस्माकं सर्वे

हृदयस्था मनोरथाः । अधुना *जामातृप्रभावेण सकलाम् अपि वसुमतीं वशे करिष्यामि ।

अत्रान्तरे नवनवतिग्रामलक्षाणाम् अधिपतेर् दाक्षिणात्यस्य श्रीविक्रमसेनस्य दूताः प्रतिवर्षदीयमानकरहेतोः संप्राप्ताः । तेषां नारायण*जामातृगर्वाद् यथापूर्वम् आदरं नासौ भूपतिः कृतवान् । ततस् तैर् जातमन्युभिर् अभिहितम् । भो राजन् , दातव्यदिनान्य् अतिक्रान्तानि । तत् किं भवता यथादीयमानकरो न प्रहृतः । अथ सांप्रतं भवतो ऽलौकिकं किंचिद् अकस्मात् कस्माद् अपि सकाशाद् बलं संपन्नम् , येनाग्निमारुताशीविषकृतान्तोपमं श्रीविक्रमसेनं कोपयसि । एवम् उक्ते तेषां राज्ञा देवमार्गो दर्शितः । तैश् च स्वविषयम् अनुप्राप्तैः शतसहस्रगुणं तत् कथयित्वा कोपितः स्वस्वामी । अथासौ सबलपरिवारश् चतुरङ्गसेनासनाथस् तदुपरि प्रचलितः , सक्रोधम् उक्तवांश् च ।

यदि विशति तोयराशिं , रोहति वा शक्ररक्षितं मेरुम् ।
स तथापि नृपः पापो , हन्तव्यो मे प्रतिज्ञैषा ॥२१५॥ ār

ततो ऽनवरतप्रयाणकैर् विक्रमसेनस् तद्देशम् अनुप्राप्य विध्वंसयाम् आस । अथ हतशेषा जनपदाः पुण्ड्रवर्धनराज्ञो द्वारदेशम् आस्थायाक्रोष्टुम् आरब्धाः । तच् छ्रुत्वापि न तस्य स्वल्पो ऽपि क्षोभः समभवत् ।

तथान्येद्युर् विक्रमसेनबलैर् आगत्योपरुद्धे पुण्ड्रवर्धनपुरे स राजा मन्त्रिपुरोहितमहाजनैर् विज्ञप्तः । देव , समर्थेन शत्रुणा समागत्य पुररोधः कृतः । देवश् च कथं निराकुलस् तिष्ठति , इति । ततो राजाब्रवीत् । तिष्ठत यूयं यथासुखम् । चिन्तितो ऽस्ति मयास्य रिपोर् वधोपायः । यद् एतदीयबलस्याहं करिष्यामि ,

तत् प्रातर् भवन्तो ऽपि ज्ञास्यन्ति । इति भणित्वा प्राकारद्वाराणि सुरक्षितानि कारयां चक्रे । ततः सुदर्शनाम् आहूय मधुराक्षरैः सबहुमानम् अब्रवीत् । वत्से ' त्वदीयभर्तुर् बलाद् अस्माभिः शत्रुणा सह विग्रहः प्रारब्धः । तद् उच्यताम् अद्य निशायाम् आगतो भगवान् नारायणः ' यथा प्रातर् एनम् अस्मच्छत्रुं व्यापादयति ।

सुदर्शनापि पितुर् वाक्यं सर्वं सविशेषं रात्रौ तस्मै निवेदितवती । तच् छ्रुत्वा विहस्य कौलिको ऽब्रवीत् । भद्रे ' कियन्मात्रम् एतन् मानुषविग्रहप्रयोजनम् । मया हि पूर्वं हिरण्यकशिपुकंसमधुकैटभप्रभृतयो मायाविनो लीलयैव महादानवाः सहस्रशो निहताः । तद् गत्वा ब्रूहि राजानम् ' यथा । निराकुलस् तिष्ठ । प्रातः स्वचक्रेण नारायणो भवच्छत्रुसैन्यं व्यापादयिष्यति । अथ तया गत्वा सर्वं सगर्वया राज्ञे निवेदितम् । तेनाप्य् अतितोषात् प्रतीहारम् आदिश्य नगरे पटहो दापितः ' यथा । प्रातः संग्रामे निहतविक्रमसेनावासस्थितधनधान्यहिरण्यहस्तितुरङ्गायुधादिकं यो यद् गृह्णाति ' तत् तस्यैव ' इति । पटहघोषणां श्रुत्वा तुष्टाः पौरजनाः परस्परं मन्त्रयमाणा ऊचुः ' यथा । अतिमहासत्त्वो ऽयम् अस्मत्स्वामी ' यो रिपुबले ऽधिष्ठिते ऽपि न क्षुभितः । अवश्यं प्रातर् व्यापादयिष्यति प्रतिपक्षम् ।

इतश् च कौलिको मुक्तसुरतारम्भो ऽत्याकुलः स्वमनसा पर्यालोचितवान् । किम् अधुना मया विधेयम् । यदि तावद् यन्त्रम् आरुह्यान्यत्र गच्छामि ' तदानेन स्त्रीरत्नेन सह भूयः समागमो न भवति । विक्रमसेन एव व्यापाद्यास्मच्छ्वशुरकम् अन्तःपुरमध्याद् एनां गृह्णाति । अथ युद्धम् अङ्गीकरोमि ' तदा संहता-

खिलमनोरथो मे मृत्युः । ताम् अपि विना मे मृत्युः । किं बहुना ' उभयथापि मृत्युर् एव ' इति । तद् वरं सत्त्वम् आलम्बितम् ' इति । किं च ' युद्धम् अङ्गीकृतवन्तं कदाचिद् गरुडारूढं मां पश्यन्तो वासुदेवं मत्वा शत्रवः प्रपलायन्ते ' उक्तं च ।

धैर्यं हि कार्यं सततं महद्भिः
कृच्छ्रे ऽपि कष्टे ऽप्य् अतिसंकटे ऽपि ।
कृच्छ्राणि कृच्छ्रेण समुत्तरन्ति
धैर्योच्छ्रिता ये प्रतिपत्तिदक्षाः ॥२१६॥ इति ।

एवं कृतयुद्धनिश्चये कौलिके विष्णुं *वैकुण्ठस्वर्गं वैनतेयो व्यज्ञपयत् ' यथा । देव ' पृथिव्यां *पुण्ड्रवर्धनाभिधाने नगरे देवाकारम् उपधारी कौलिको राजदुहितरम् उपभुङ्क्ते । ततः पुण्ड्रवर्धनाधिपतेर् नृपतेर् *दाक्षिणात्यः समर्थतरो नृपतिर् मूलोच्छेदं कर्तुम् आयातः । कौलिकश् च श्वशुरसाहाय्ये कृतनिश्चयो ऽद्य वर्तते । तद् विज्ञाप्यम् इदम् । यदि तस्य संग्रामे मृत्युर् भविष्यति ' तदा ' दाक्षिणात्येन राज्ञा भगवान् नारायणो व्यापादितः ' इति मर्त्यलोके संजातप्रवादे यज्ञादिक्रियाणाम् अत ऊर्ध्वं लोपो भविष्यति । यानि च भट्टारकायतनानि ' तानि नास्तिका विनाशयिष्यन्ति । *भगवद्भक्ताश् च त्रिदण्डिनः प्रव्रज्यां त्यक्ष्यन्ति । इति समुपस्थिते देवः प्रमाणम् । ततो भगवता वासुदेवेन सम्यग् विभाव्य तं प्रत्य् अभिहितम् । पतंगराज ' युक्तम् एवेदम् । देवांशकः कौलिको ऽयम् । अनेन तस्य राज्ञो घातकेन भवितव्यम् । ततो ऽयम् एवाभ्युपायः ' यद् अस्य मया त्वया च साहाय्यं कार्यम् ' तद् अहं तस्य शरीरम् अनुप्रविशामि ' त्वं च गरुडम् अनुप्रविश ' चक्रं च चक्रे प्रविशतु । एवम् अस्तु ' इति प्रतिपन्नं गरुडेन ।

अत्रान्तरे कौलिको नारायणाधिष्ठितः सुदर्शनाम् आदिदेश । भद्रे ' मम युद्धायोत्थितस्य सर्वं मङ्गलादि सज्जं क्रियताम् । इत्य् उक्ते कृतमङ्गल*विधिः सांग्रामिकालंकरणविभूषितो गोरोचना-सितसिद्धार्थककुसुमादिकृत*वन्दनो ऽभ्युदिते भगवति कमलाकर-बान्धवे प्राचीदिग्वधूमुखतिलके सहस्रकिरणे वैजयिकेषु संग्राम-तूर्येष्व् आहतेषु नगरान् निर्गत्य संग्रामभूमिं प्राप्ते राजनि यथा-स्थानम् उभयबलेषु व्यूहितेषु वृत्ते च पादातसंप्रहारे कौलिको गरुडम् आरुह्य वितीर्णसुवर्णरत्नादिदानविधिर् धवलगृहाद् उत्पत्य विहायस्तलं कुतूहलाविष्टैर् नगरजनैर् निरीक्ष्यमाणो ऽभिवन्द्यमानश् च नगराद् बहिः स्वसैन्यस्योपरि प्रौढनादं पाञ्चजन्यं शङ्खम् अपूरयत् ।

श्रुत्वा च शङ्खशब्दं गजतुरगरथपदातयः क्षुभिताः सकृन्मू-त्रम् असकृत् कुर्वाणाः केचिद् विरसम् आरसन्तः प्रपलायिताः ' केचिन् मूर्छाविह्वलतनवो भूमौ लुठिताः ' केचिच् च भीता गगनतलनिहितस्तब्धदृष्टयः स्थिताः ।

ततश् च कुतूहलाद् युद्धदर्शनाय समुपागतेषु सकलदेवेषु देवराजेन ब्रह्माभिहितः । ब्रह्मन् ' किम् अत्र कश्चिद् दैत्यो दानवो वा हन्तव्यः ' येन स्वयं भगवान् नारायणो नागारिम् आरुह्य युद्धायोपस्थितः । एवं चाभिहिते ब्रह्मणा चिन्तितम् ।

सुरारिसंघातनिपीतशोणितं
न चक्रम् उन्मुञ्चति मानुषे हरिः ।
करेण येन प्रपिनष्टि कुञ्जरान्
न तेन सिंहो मशकान् प्रबाधते ॥२१७॥ vaṃśa

तत् किम् इदम् आश्चर्यम् । इति सविस्मयो ब्रह्मापि बभूव । अतो ऽहं ब्रवीमि ।

सुप्रयुक्तस्य दम्भस्य ब्रह्माप्य् अन्तं न गच्छति ।
कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥२१८॥ इति ।

एवं देवानां जातकौतुकानां विचिन्तयताम् एव कौलिकश् चक्रं विक्रमसेने प्राहिणोत् । तच् च तं राजानं द्विधा विधाय पुनस् तस्यैव हस्तम् अनुप्राप्तम् । तच् च दृष्ट्वा सर्वे ऽपि राजानः स्वस्ववाहनेभ्यो ऽवतीर्य प्रणिपातबन्धुरपाणिपादशिरसस् तं नारायणरूपं व्यज्ञपयन् । देव

हतं सैन्यम् अनायकम्

इत्य् अवधार्य परिरक्षास्मदीयप्राणान् । समादिश्यताम् किम् अस्माभिः कर्तव्यम् इति । एवं वादिनि सकलनरपाललोके स नारायणरूपो ऽब्रवीत् । अभयं भवताम् अतः परम् । यद् अयं सुप्रतिवर्मा समादिशति तद् अविचारं सर्ववारं भवद्भिर् अनुष्ठेयम् । ततः यथाज्ञापयति स्वामी इत्य् एवम् उक्त्वा सर्वे राजानस् तदाज्ञाम् अङ्गीचक्रुः । ततो ऽपि नरकरिरथतुरगभाण्डागारादि सर्वं प्रतिपक्षधनं सुप्रतिवर्मणो वशीकृत्य स्वयं कौलिको लब्धविजयमाहात्म्यो राजदुहित्रा सह सकलसुखान्य् अनुबभूव ॥

अतो ऽहं ब्रवीमि । कृते विनिश्चये पुंसाम् । इति । एतद् आकर्ण्य करटक आह । यद्य् एवं भवान् अपि कृतनिश्चयः । ततो गच्छतु भवान् अभिमतसिद्धये । शिवास् ते सन्तु पन्थानः ।

इत्य् उक्ते ऽसाव् अपि सिंहसकाशं गतः । प्रणम्योपविष्टश् च सिंहेनाभिहितः । कुतो भवांश् चिराद् दृष्टः । सो ऽब्रवीत् । देव । आत्ययिकम् अद्य किम् अपि स्वामिनः । तेनाप्रियम् अपि भद्राय निवेदितुम् आगतः । न चायं मनोरथः संश्रितानाम् । किं तु समनन्तरक्रियाकालातिपातभीतैर् हि निवेद्यते । उक्तं च ।

अनुयुक्ता हि साचिव्ये । यद् वदन्ति हितैषिणः ।
अनुरागद्रवस्यैताः । प्रणयस्यातिभूमयः ॥ २१९ ॥

तथा च । सुलभाः पुरुषा राजन् । सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य । वक्ता श्रोता च दुर्लभः ॥ २२० ॥

अथ पिङ्गलकः श्रद्धेयवाक्यत्वात् तं सादरम् अपृच्छत् । किं भवान् विवक्षुः । इति । सो ऽब्रवीत् । देव । संजीवकस् तवोपरि दुष्टबुद्ध्या विश्वासम् उपगतो मत्संनिधौ रहसि विश्वासात् प्रस्तावेष्व् आह । दृष्टास्य मया त्वत्स्वामिनः शक्तित्रये ऽपि सारासारता । तद् एनं हत्वा स्वयम् एवाहं सुखेन राज्यं *ग्रहीष्यामि । अद्यैवायं संजीवक एनम् अर्थं चिकीर्षुर् अस्ति । अतो ऽहं कुलस्वामिनं त्वां ज्ञापयितुं समायातः ।

तच् च वज्रपातदुःसहतरं वचनम् उपश्रुत्यातीव क्षुभितहृदयः पिङ्गलको मोहम् उपगतो न किंचिद् उवाच । दमनकस् तु तदाकारं परिज्ञायाब्रवीत् । अयम् एव मन्त्रिप्राधान्ये महान् दोषः । साधु चेदम् उच्यते ।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे वा-
वष्टभ्य पादाव् अवतिष्ठते श्रीः ।
सा स्त्रीस्वभावाद् असहा *भरस्य
द्वयोस् तयोर् एकतरं जहाति ॥ २२१ ॥ upa

*तेन हि । कण्टकस्य च भग्नस्य । दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य । मूलाद् उद्धरणं सुखम् ॥ २२२ ॥

किं च । एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच् छ्रयते मदः स च मदाद् दास्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्व् अभिद्रुह्यति ॥ २२३ ॥ śārdū

सो ऽयम् अधुना संजीवको निरवग्रहः सर्वकार्येषु स्वेच्छया प्रवर्तते । तद् एतद् एवात्र युक्तम् । यद् उक्तम् ।

कार्याण्य् अर्थावमर्देन । स्वनुरक्तो ऽपि साधयन् ।
नापेक्ष्यः सचिवो राज्ञा । वाञ्छता भूतिम् आयतौ ॥ २२४ ॥

स्वभावश् चायं प्रभूणाम् । यथा ।

भावस्निग्धैर् उपकृतम् अपि द्वेष्यताम् एति किंचिच्
छाठ्याद् अन्यैर् अपकृतम् अपि प्रीतिम् एवोपयाति ।
दुर्ग्राह्यत्वान् नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनाम् अप्य् अगम्यः ॥ २२५ ॥ mandā

तच् छ्रुत्वा पिङ्गलको ऽब्रवीत् । अयं तावन् मम भृत्यः । कथं ममोपरि विपर्ययं करिष्यति । दमनक आह । भृत्यो न भृत्य इति । नैतद् एकान्तिकम् । उक्तं च ।

न सो ऽस्ति पुरुषो राज्ञां । यो न कामयते श्रियम् ।
न शक्तिर् यावद् अन्यापि । तावत् संसेवते परम् ॥ २२६ ॥

सिंह आह । भद्र । तथापि मम तस्योपरि चित्तं न *परिदुष्यति । यतः ।

अनेकदोषदुष्टो ऽपि । कायः कस्य न वल्लभः ।
कुर्वन्न् अपि व्यलीकानि । यः प्रियः प्रिय एव सः ॥ २२७ ॥

किं च । अप्रियाण्य् अपि कुर्वाणो । निष्ठुराण्य् अपि च ब्रुवन् ।
चेतः प्रह्लादयत्य् एव । सर्वावस्थासु वल्लभः ॥ २२८ ॥

दमनक आह । अत एवायं दोषो ऽभ्युदयस्य । यत् सर्वमृगजनं परिहृत्य स्वामिना यस्योपर्य् आस्था प्रतिबद्धा । सो ऽयम् अधुना स्वयं स्वामित्वम् अभिवाञ्छति । उक्तं च ।

यस्मिन्न् अप्य् अधिकं चक्षुर् । आरोपयति पार्थिवः ।
अश्नाति सकुलीने वा । स लक्ष्म्या हरते मनः ॥ २२९ ॥

तत् । अयम् अभीष्टो ऽपि दुष्टत्वाद् अनिष्टः । इति त्यक्तुं युक्तः । सुष्ठु खल्व् इदम् उच्यते ।

पूज्यो बन्धुर् अपि प्रियो ऽपि तनयो भ्राता वयस्यो ऽपि वा
यो मोहाद् अनवद्यकार्यविमुखो हेयः स कार्यार्थिना ।
लोके हि प्रथिता ननु श्रुतिर् इयं नार्यो ऽपि गायन्ति यां
किं कार्यं कनकेन तेन भवति च्छेदाय कर्णस्य यत् ॥ २३० ॥ śārdū

यच् च । महाकायो ऽयम् । इत्य् उपकाराय चिन्त्यते । तद् अपि विपरीतम् एव । यतः ।

किं गजेन प्रभिन्नेन । राजकर्माण्य् अकुर्वता ।
स्थूलो वा यदि वास्थूलः । श्रेयान् कृत्यकरः पुमान् ॥ २३१ ॥

अथवा देवपादानाम् अस्योपर्य् अनुकम्पा । तद् अप्य् अयुक्तम् । यतः ।

सतां मतिम् अतिक्रम्य । यो ऽसतां वर्तते मते ।
कालेन व्यसनं प्राप्य । पश्चात्तापं स गच्छति ॥ २३२ ॥

यो न निःश्रेयसं ज्ञानं । सुहृदां प्रतिपद्यते ।
अचिरात् स *च्युतः स्थानाद् । द्विषतां वर्तते वशे ॥ २३३ ॥

तथा च । कार्याकार्यम् अनार्यैर् । उन्मार्गनिरर्गलैर् गलन्मतिभिः ।
न्याकर्ण्यते विकर्णैर् । नयोक्तिभिर् युक्तम् उक्तम् अपि ॥ २३४ ॥ ār

अपि च । अप्रियस्यापि वचसः । *परिणामाविरोधिनः ।
वक्ता श्रोता च यत्रास्ति । रमन्ते तत्र संपदः ॥ २३५ ॥

तथा च । क्रियासु युक्तैर् नृप चारचक्षुषो
न वञ्चनीयाः प्रभवो ऽनुजीविभिः ।
अतो ऽर्हसि क्षन्तुम् असाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥ २३६ ॥ vaṃśa

मूलभृत्योपरोधेन । न ह्य् आगन्तुं प्रपूजयेत् ।
नातः परतरो ऽन्यो ऽस्ति । राज्यभेद्करो गदः ॥ २३७॥

सिंह आह । भद्र । मा मैवं वोचः । यतः ।

उक्तो भवति यः पूर्वं । गुणवान् इति संसदि ।
न तस्य वाच्यं नैर्गुण्यं । प्रतिज्ञाभङ्गभीरुणा ॥ २३८॥

तथा तस्य मया । शरणागतो ऽयम् । इति पूर्वम् अभयप्रदानं दत्तम् । तत् कथम् असौ कृतघ्नो भविष्यति । दमनक आह ।

न दुर्जनो वैरम् इति प्रकुप्यति
न साधुर् एवं सुकृतेन तुष्यति ।
स्वभावभावेन हि भाविताव् उभौ
यथेक्षुनिम्बौ स्वरसेन तौ तथा ॥ २३९॥ vaṃśa

अपि च । दुर्जनः प्रकृतिं याति । सेव्यमानो ऽपि यत्नतः ।
स्वेदनाभ्यञ्जनोपायैः । श्वपुच्छम् इव नामितम् ॥ २४०॥

तथा च । स्वल्पे ऽपि गुणाः स्फीतीभवन्ति गुणसमुदितेषु पुरुषेषु ।
शशिनः खलु तुहिनगिरेः । शिखरप्राप्ता इव मयूखाः ॥ २४१॥ ār

तथा । नश्यन्ति गुणा गुणिनां । पुरुषाणाम् अगुणवत्सु पुरुषेषु ।
अञ्जनगिरिशिखरेष्व् इव । निशासु चन्द्रांशवः पतिताः ॥ २४२॥ ār

कृतशतम् असत्सु नष्टं । सुभाषितशतं च नष्टम् अबुधेषु ।
वचनशतम् अवचनकरे । बुद्धिशतम् अचेतने नष्टम् ॥ २४३॥ ār

नष्टम् अपात्रे दानं । नष्टं हितम् अलसबुद्धिविज्ञाने ।
नष्टं कृतम् अकृतज्ञे । नष्टं दाक्षिण्यम् अनभिज्ञे ॥ २४४॥ ār

अपि च । अरण्यरुदितं कृतं शवशरीरम् उद्वर्तितं
स्थले कमलरोपणं सुचिरम् ऊषरे वर्षणम् ।
श्वपुच्छम् अवनामितं बधिरकर्णजापः कृतस्
तद् अन्धमुखमण्डनं यद् अबुधे जने भाषितम् ॥ २४५॥ pṛ

किं च । चिरं दुग्धो ऽनड्वान् स्तनभरनता गौर् इति वृथा
परिष्वक्तः षण्ढो युवतिर् इति लावण्यकलिता ।
कृता वैडूर्याशा विततकिरणे काचशकले
यद् अज्ञानासङ्गाद् अविबुधजने सेवनरतिः ॥ २४६॥ śikha

तत् सर्वथा स्वामिनास्मदीयं हितवचनं नोल्लङ्घनीयम् । किं *च । श्रूयताम् ।

व्याघ्रवानरसर्पाणां । यन् मया न कृतं वचः ।
तेनाहं दुर्विनीतेन । मानुषेण निपातितः ॥ २४७॥

पिङ्गलक आह । कथम् एतत् । दमनकः कथयति ।

॥ कथा ९ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः । तस्य ब्राह्मणी दारिद्र्याभिभूता प्रतिदिनम् एवं वदति । भो ब्राह्मण ' निरुत्साह ' कठोरहृदय । किं न पश्यसि क्षुधया पीड्यमानान्य् अपत्यानि ' येन निश्चिन्तस् तिष्ठसि । कियन्तम् अप्य् अध्वानं गत्वा यथाशक्ति कम् अप्य् अशनोपायं कृत्वा द्रुततरं पुनर् आगच्छ । अथ ब्राह्मणस् तद्वचननिर्वेदेन महाध्वानं गन्तुम् आरब्धः । कतिभिर् दिवसैर् महाटवीं प्रविष्टः । तस्यां चाटव्यां व्रजता तेन क्षुत्क्षामेणोदकम् अन्वेष्टुम् आरब्धम् । तावत् तस्याश् चैकप्रदेशे तृणैर् आवृतो महान् कूपो दृष्टः । यावद् विलोकयति ' तावद् व्याघ्रवानरसर्पमानुषास् तन्मध्ये दृष्टाः ' तैर् अप्य् असौ दृष्ट इति । ततः ' मानुषो ऽयम् ' इति मत्वोक्तवान् व्याघ्रः । भो भो महासत्त्व ' प्राणिरक्षणे महान् धर्मः ' इति मत्वा माम् उत्तारय ' येनाहं *प्रियमित्रकलत्रपुत्रस्वजनैः संगतस् तिष्ठामि । ब्राह्मण आह । भवतो नामग्रहणेनापि सर्वेषां प्राणिनां भयम् उत्पद्यते । नन्व् अहम् अतस् त्वत्तो बिभेमि । पुनर् अपि व्याघ्रेणाभिहितम् ।

ब्रह्मघ्ने च सुरापे च ' क्लीबे भग्नव्रते शठे ।
निष्कृतिर् विहिता सद्भिः ' कृतघ्ने नास्ति निष्कृतिः ॥२४८॥

पुनर् अप्य् आह । त्रिसत्येनाहम् आत्मानं शपामि ' न भयं तवास्मत्सकाशाद् विद्यते । अतो ऽनुकम्पयोत्तारय । ततो द्विजेन स्वचित्तेनावधारितम् । प्राणिनां प्राणरक्षणे यदि विपत्तिर् भवति ' तथापि श्रेयस्करी ' इति । एवं मत्वोत्तारितः । वानरो ऽप्य् एवं

*ब्रवीति । भोः साधो ' माम् अप्य् उत्तारय । एवं श्रुत्वा द्विजेन सो ऽप्य् उत्तारितः । सर्पो ऽब्रवीत् । भो द्विज ' माम् अप्य् उत्तारय । तच् छ्रुत्वा ब्राह्मणो ऽब्रवीत् । युष्मन्नामग्रहणेनापि त्रस्यते ' किं पुनः स्पर्शनेन । सर्प आह । अस्माकं स्वातन्त्र्यं नास्ति । अनादिष्टा न दशामः । त्रिसत्येनात्मानं शपामि । अस्मत्सकाशान् न भयं कर्तव्यम् । तेनैवम् आकर्ण्योत्तारितः सो ऽपि । अथ ते ब्रुवन्ति । सर्वेषां पापानाम् आयतनं कश्चिन् मनुष्यो भवति । एतन् मत्वा नोत्तारयितव्यो ऽयम् ' न चास्य विश्वासम् अनुगन्तव्यम् । पुनर् अपि व्याघ्रेणोक्तम् । य एष पर्वतो बहुशिखरो दृश्यते ' तस्योत्तरे पार्श्वे दरीगहने मदीयगुहा । तत्र त्वया ममानुग्रहणायैकवारम् आगन्तव्यम् ' येनाहं भवतः प्रत्युपकारं करोमि ' येनर्णसंबन्धो ऽन्यजन्मन्य् अपि न भवति । एवम् उक्त्वा गुहाभिमुखं प्रायात् । अथ वानरो ऽब्रवीत् । तत्रैव गुहासंनिधौ ममावासो निर्झरसमीपे । तस्मिंस् त्वया मत्सकाशम् आगन्तव्यम् ' इति । एवम् उक्त्वा प्रायात् । सर्पेणोक्तम् । यदा भवत आत्ययिकं भवति ' तदाहं स्मर्तव्यः ' इति । एवम् उक्त्वा यथागतम् एव प्रायात् ।

अथ स कूपस्थः पुरुषो मुहुर् मुहुः शब्दं करोति । भो ब्राह्मण । माम् अप्य् उत्तारय । अथ द्विजेन जातानुकम्पेन स्वपक्ष इति सो ऽप्य् उत्तारितः । तेन चाभिहितम् ' यथा । अहं सुवर्णकारः । भृगुकच्छे वसामि । यदि सुवर्णं किंचिद् घटनीयं भवति ' तदा त्वया मम सकाशम् आनेतव्यम् ' इति । एवम् उक्त्वा यथागतम् एव प्रायात् ।

अथ ब्राह्मणेन भ्रमतापि न किंचिद् आसादितम् । गृहम्

आगच्छता तेन स्मृतं वानरोक्तम्। आगतश् च तत्सकाशं दृष्टश् च वानरः। तेनामृतस्वादुफलानि निवेदितानि ' आश्वासितश् च स तैः। वानरः पुनर् अब्रवीत्। यदि फलैर् भवतः कार्यम् ' तन् नित्यम् एवागन्तव्यम्। द्विजेनाभिहितम्। भवता सर्वं कृतम् ' परं व्याघ्रं मे दर्शय। तेन च नीत्वा व्याघ्रो दर्शितः। व्याघ्रेण च ज्ञात्वा प्रत्युपकारार्थं घटितग्रैवेयादिकं निवेदितम् ' उक्तं च। कश्चिद् राजपुत्रो ऽश्वेनापहृत एकाकी मत्क्रमे पतितो व्यापादितश् च। तत्सक्तम् एतत् सर्वं मया सुप्रयुक्तं स्थापितं तव निमित्तम्। एतद् गृहीत्वा गच्छतु भवान् यथाभिप्रेतम् ' इति। ब्राह्मणश् च तद् गृहीत्वा सुवर्णकारं स्मृत्वा ' स ममोपकारी विक्रापयिष्यति ' एवं मत्वा तत्सकाशं गतः। सुवर्णकारेणापि सादरेण *पाद्यार्घासनखादनपानभोजनादिसत्क्रियां कृत्वोक्तम् ' यथा। भवान् आदिशतु ' किं करोमि। द्विजेनोक्तम्। मया सुवर्णम् आनीतम् अस्ति। तत् त्वया विक्रेतव्यम्। सुवर्णकारो ऽब्रवीत्। दर्शय सुवर्णम् ' इति। दर्शितम् अनेन। सुवर्णकारस् तद् दृष्ट्वा चिन्तितवान्। मयैवेदं घटितं राजपुत्रस्य निमित्ते। एवं च चित्तेनावधार्याब्रवीत्। तिष्ठतु भवान् अत्रैव ' यावद् अहं कस्यचिद् दर्शयामि। एवम् उक्त्वा राजकुले गत्वा दर्शितं राज्ञः। तद् दृष्ट्वा राजाब्रवीत्। कुत्र त्वयेदं प्राप्तम् ' इति। सो ऽब्रवीत्। मम वेश्मनि ब्राह्मणस् तिष्ठति। तेनेदम् आनीतम्। ततश् चिन्तितं राज्ञा। नूनं तेन दुरात्मनैव सुतो मे व्यापादितः ' इति दर्शयामि तस्य तत्फलम् ' इति। ततः समादिष्टा आरक्षकपुरुषाः ' तं ब्राह्मणापसदं बन्धयित्वा व्यतीतायां रजन्यां शूलाम् आरोपयत।

तैश् च बद्धेन ब्राह्मणेन भुजगः स्मृतः ' स्मृतमात्र एव च तदन्तिकम् आगतः ' अब्रवीच् च । किं तवोपकारं करोमि । द्विजेनोक्तम् । माम् *अस्माद् बन्धनान् मोचय । सो ऽब्रवीत् । अहं राजवल्लभां पत्नीं दंक्ष्यामि । ततः कस्यापि महामान्त्रिकस्याभिमन्त्रणाद् अन्यभिषजां च विषनाशनैर् अगदैः प्रलिप्ताम् अपि न निर्विषीकरिष्यामि । तवैव हस्तस्पर्शनान् निर्विषीभविष्यति । ततस् त्वं मुच्यसे । इति प्रतिज्ञाय सर्पेण राजमहिषी दष्टा । ततो राजकुले हाहाशब्दः समुत्थितः । सर्वतः पुरम् आकुलीभूतम् । अथ गारुडिकमान्त्रिकतान्त्रिकभैषजिकान्यदेशनिवासिनः समाहूताः । समस्तैर् अपि स्वशक्त्या समुपचरितम् । न कस्यचिद् उपचारेण निर्विषीभूता । ततो भ्रमितो डिण्डिमः । तम् आकर्ण्य द्विजेनाभिहितम् । अहम् एनां निर्विषीकरोमि । इति वचनसमम् एव बन्धनाद् उन्मोच्य समानीय ब्राह्मणो राज्ञे निवेदितः । ततो राजाब्रवीत् । भवान् एनां निर्विषीकरोतु । सो ऽपि गत्वा राज्ञीसकाशं हस्तस्पर्शमात्रात् तां निर्विषीकृतवान् ।

तां च प्रत्युज्जीवितां दृष्ट्वा राजा तस्य पूजां गौरवं च कृत्वा सबहुमानम् अमुं पृष्टवान् । सत्यं कथयतु भवान् ' केन प्रकारेणेदं सुवर्णं लब्धम् ' इति । द्विजेनादितः प्रभृति यथावृत्तम् अनुभूतं सर्वम् आख्यातम् । अवगतार्थेन च राज्ञा तं सुवर्णकारं निगृह्यास्मै ग्रामसहस्रं दत्त्वात्मनो मन्त्रित्वे नियोजितः । तेन च स्वकीयकुटुम्बम् आनीय *सुहृत्स्वजनसमेतेन भोजनादिक्रियापरितुष्टेनानेकमखकरणार्जितपुण्यप्राग्भारेण सकलराज्यचिन्तासंभृताधिपत्येन सुखम् अनुभूयते स्म ॥

अतो ऽहं ब्रवीमि । व्याघ्रवानरसर्पाणाम् । इति । दमनकः पुनर् अब्रवीत् ।

स्वजनो ऽथ सुहृद् गुरुर् नृपो वा
पुरुषेणोत्पथगो निवारणीयः ।
विनिवर्तयितुं स चेन् न शक्यः
परतस् तस्य मनोनुगं विधेयम् ॥ २४९ ॥ aupa

देव । स तावद् द्रोही । किं तु ।

हितकृद्भिर् अकार्यम् ईहमानाः
सुहृदः क्लेशपरिग्रहान् *निवार्याः ।
परिपूर्णम् इदं हि साधुवृत्तं
कथितं सद्भिर् असाधुवृत्तम् अन्यत् ॥ २५० ॥ aupa

तथा । स स्निग्धो व्यसनान् निवारयति यस् तत् कर्म यन् निर्मलं
सा स्त्री यानुविधायिनी स मतिमान् यः सद्भिर् अभ्यर्च्यते ।
सा श्रीर् या न मदं करोति स सुखी यस् तृष्णया नोह्यते
तन् मित्रं यद् अयन्त्रणं स पुरुषो यः खिद्यते नापदि ॥ २५१ ॥ Śārdū

किं च । सुप्तं वह्नौ शिरः कृत्वा । भुजंगस्रस्तरे ऽपि वा ।
अप्य् उपेक्षेत सन्मित्रं । न पुनर् व्यसनोन्मुखम् ॥ २५२ ॥

तद् यद् इदं संजीवकसंसर्गव्यसनम् । तद् देवपादानां त्रिवर्गहानिकरम् । अथ बहुप्रकारं विज्ञाप्यमाना देवपादा अस्मद्वचनम् अनादृत्य कामतः प्रवर्तन्ते । तद् आयतौ दुःखापाते भृत्यदोषो न ग्राह्यः । उक्तं च ।

नृपः कामासक्तो गणयति न कार्यं न च हितं
यथेष्टं स्वच्छन्दः प्रचरति हि मत्तो गज इव ।
ततो मानाध्मातः पतति स यदा शोकगहने
तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्य् अविनयम् ॥ २५३ ॥ Śikha

सिंह आह । भद्र । एवं स्थिते किम् असौ प्रत्यादेश्यः । दमनक आह । किम् इति प्रत्यादिश्यते । कतर एष नयः । यतः ।

प्रत्यादिष्टः पुरुषस् । त्वरति विकर्तुं भयात् प्रहर्तुं वा ।
तस्मात् प्रत्यादेष्टुं । न्याय्यो ऽरिः कर्मणा न गिरा ॥ २५४ ॥ Ā

पिङ्गलक आह । स तावच् छष्पभोक्ता । वयं तु पिशितभुजः । तत् कथम् असौ ममापकर्तुं समर्थः । दमनको ऽब्रवीत् । एवम् एतत् । स *शष्पभुक् । देवपादाः पिशितभुजः । सो ऽन्नभूतः । देवपादा *भोक्तृभूताः । तथाप्य् असौ यदि स्वयम् अनर्थं *न करिष्यति । ततो ऽन्यस्माद् उत्पादयिष्यति । उक्तं च ।

प्रेरयति परम् अनार्यः । शक्तिदरिद्रो ऽपि जगदभिद्रोहे ।
तेजयति खड्गधारां । स्वयम् असमर्था शिला छेत्तुम् ॥ २५५ ॥ Ār

सिंह आह। कथम्। सो ऽब्रवीत्। *त्वं तावद् अजस्रम् अनेकमत्तगजगवयमहिषवराहशार्दूलचित्रकयुद्धेषु नखदन्तसंनिपातक्षतव्रणशबलतनुः। अयं पुनः सदा त्वत्समीपवासी प्रकीर्णविण्मूत्रः। तदनुषङ्गाच् च क्रमयो भविष्यन्ति। ते युष्मच्छरीरसामीप्यात् क्षतविवरानुसारिणो ऽन्तः प्रवेक्ष्यन्ति। तथापि त्वं विनष्ट एव। इति। उक्तं च।

न ह्य् अविज्ञातशीलाय। प्रदातव्यः परिश्रयः।
डुण्डुकस्य हि दोषेण। हता मन्दविसर्पिणी ॥२५६॥

सो ऽब्रवीत्। कथम् एतत्। दमनकः कथयति।

## ॥ कथा १० ॥

अस्ति कस्यचिद् राज्ञो वासगृहे सर्वगुणोपेतम् अनन्यसदृशं शयनीयम्। तत्प्रच्छादनपटैकदेशे मन्दविसर्पिणी नाम यूका प्रतिवसति स्म। पुत्रपौत्रदुहितृदौहित्रादिमहाप्रसवसंततिपरिवृता राजानं सुप्तम् अन्तर् भक्षयति। तच्छोणितेन *पुष्टा दर्शनीया च सा संवृत्ता। एवं च तस्यास् तत्र वसन्त्या डुण्डुको नाम मत्कुणो वायुप्रेरितस् तस्मिञ् शयने पतितः। स तु तच् छयनम् अतिसूक्ष्मोत्तरप्रच्छादनपटम् *उभयोपधानं जाह्नवीविपुलपुलिनसदृशं परममृदु सुरभिगन्धि दृष्ट्वा परं परितोषम् अगमत्। तत्स्पर्शाकृष्टमना इतश् चेतश् च परिभ्रमन् कथम् अपि दैववशान् मन्दविसर्पिण्या मिलितः। तया चाभिहितः। कुतस् त्वम् अस्मिन् प्रभुयोग्ये ऽधिवासस्थाने समायातः। गम्यताम् अस्मात् त्वरितम्। इति। ततः सो ऽब्रवीत्। आर्ये। मा मैवं वद। कुतः।*

गुरुर् अग्निर् द्विजातीनां। वर्णानां ब्राह्मणो गुरुः।
पतिर् एको गुरुः स्त्रीणां। सर्वस्याभ्यागतो गुरुः ॥२५७॥

इति। अतिथिस् तवाहम्। मया तावद् अनेकप्रकाराणि ब्राह्मणक्षत्रियविट्शूद्राणां रुधिराण्य् आस्वादितानि। तानि च क्षाराणि पिच्छिलान्य् अपुष्टिकराणि च। यः पुनर् अस्य शयन-

स्याधिष्ठाता । तस्यासंशयं मनोरमम् अमृतोपमं चासृग् भविष्यति। अजस्रं भिषग्भिः क्रियमाणौषधाद्युपक्रमप्रयत्नवशाद् वातपित्तश्लेष्मणाम् अविरोधाद् अनामयतया स्निग्धद्रवपेशलैः सखण्डदाडिमत्रिकटुकपटुभिः स्थलजजलजखेचरप्रधानपिशितोपस्कृतैर् आहारैर् उपबृंहणाद् उपचरितं रुधिरं रसायनम् इव मन्ये। ततस् तत् सुरभि तुष्टिपुष्टिकरं स्वादु च तव प्रसादाद् आस्वादयितुम् इच्छामि। साब्रवीत्। असंभाव्यम् एतत् त्वद्विधानाम् अग्निमुखानां दंशवृत्तीनाम् । अतो ऽपगम्यताम् अस्माच् छयनात् ' इति । उक्तं च ।

देशं कालं कार्यं ' परम् आत्मानं च यो न जानाति ।
अविमृश्य यः करोति च ' न स फलम् आप्नोति वै मूर्खः ॥२५८॥

ततः सो ऽस्याः पादयोर् निपत्य पुनस् तद् एव प्रार्थितवान् । सा तु दाक्षिण्यपरतया तत् ' तथा ' इति प्रतिपन्नवती ' यतो राज्ञः कर्णीसुतकथानके कथ्यमाने प्रच्छादनैकदेशावस्थितया तया श्रुतम् ' यन् मूलदेवेन देवदत्तायाः पृच्छन्त्याः कथितम् । तथा हि ।

यः पादयोर् निपतितं ' कुपितो ऽपि न मन्यते ।
तेन ब्रह्मा हरिः शम्भुस् ' त्रयो ऽपि स्युर् विमानिताः ॥२५९॥

तच् च स्मृत्वा तद्वचनं प्रतिपद्याभिहितवती। परं नादेशे नाकाले त्वयास्य भक्षणायोपस्थातव्यम् । सो ऽब्रवीत् । को देशः ' को वा कालः । अनभिज्ञो ऽहं नवसमागमत्वात् । साब्रवीत् । मदश्रमनिद्रापरीतकायो यदा नृपतिर् भवति ' तदा निभृतं पादयोस् त्वया दंष्टव्यः ' एतौ देशकालौ । तथैव च तेन प्रतिपन्नम् । एवं वर्तमाने प्रदोष एव तेन कालानभिज्ञेन बुभुक्षया चार्तेन सुप्तमात्र एव पृष्ठप्रदेशे दष्टो राजा । असाव् अप्य् उल्कादग्ध इव ' वृश्चिक-

दष्ट इव ' उल्मुकस्पृष्ट इव त्वरिततरम् उत्थाय पृष्ठप्रदेशं संस्पृशन् परिवर्तकम् आह । अरे ' दष्टो ऽस्मि केनापि । अस्मिञ् शयने सुनिपुणं किंचित्स्वेदजजातिम् *अन्वेषयत । इति राजवचनं श्रुत्वा डुण्डुको भयात् प्रणश्य खट्वाविवरम् एकम् आश्रितः । अथ तैर् नृपादेशकारिभिर् आगत्य स्वाम्यादेशाद् दीपिकां गृहीत्वा सुनिपुणम् अन्वेषयद्भिर् वस्त्ररोमान्तर्लीना मन्दविसर्पिणी विधिनियोगाद् आसादिता सपरिजना व्यापादिता च ॥

अतो ऽहं ब्रवीमि । न ह्य् अविज्ञातशीलाय ' इति । अन्यच् च । देवपादैर् यत् क्रमागता भृत्यास् त्यक्ताः ' तद् अयुक्तम् । यतः ।

त्यक्ताश् चाभ्यन्तरा येन ' बाह्याश् चाभ्यन्तरीकृताः ।
स एव मृत्युम् आप्नोति ' मूर्खश् चण्डरवो यथा ॥ २६० ॥

पिङ्गलक आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा ११ ॥

अस्ति कश्चिन् नगरपरिसरसंनिकृष्टविवरान्तरशायी जम्बुकश् *चण्डरवो नाम । स कदाचिद् आहारम् अन्वेषयन् क्षपाम् आसाद्य क्षुत्क्षामकण्ठः परिभ्रमन् नगरम् अनुप्रविष्टः । ततो नगरावासिभिः सारमेयैस् तीक्ष्णदशनकोटिभिर् विलुप्यमानावयवो भयंकरारवत्रस्तहृदय इतस् ततः प्रस्खलन् पलायमानः किम् अपि शिल्पिगृहम् अनुप्रविष्टः । तत्र बृहन्नीलिकाभाण्डमध्ये पतितः ' श्वगणश् च यथागतं गतः । असाव् अपि कथम् अप्य् आयुःशेषतया तस्मान् नीलिकाभाण्डात् समुत्पत्य वनं प्रति गतः । अथ तस्य शरीरं नीलीरसरञ्जितं दृष्ट्वा समीपवर्तिनः सर्वे मृगगणाः ' किम् इदम् अपूर्ववर्णाढ्यं सत्त्वम् ' इति ब्रुवाणा भयतरलितदृशः पलायन्ते स्म ' कथयन्ति च । अहो ' अपूर्वम् एतत्

सत्त्वं कुतो ऽप्य् *आगतम् । तन् न विज्ञायते ' कीदृग् अस्य चेष्टितं पौरुषं च । तद् दूरतरं गच्छामः । उक्तं च ।

न यस्य चेष्टितं विद्यान् ' न कुलं न पराक्रमम् ।
न तस्य विश्वसेत् प्राज्ञो ' यदीच्छेच् *छ्रियम् आत्मनः ॥२६१॥

चण्डरवो ऽपि तान् भयव्याकुलान् विज्ञायेदम् आह । भो भोः श्वापदाः ' किं मां दृष्ट्वा यूयं त्रस्ता *व्रजथ । यतः ' श्वापदानां न को ऽपि स्वामी ' इत्य् अवगम्याखण्डलेनाहं चण्डरवो नाम प्रभुत्वे ऽभिषिक्त इति मञ्जुवज्रपञ्जरान्तरस्थाः सुखेन तिष्ठत ' इति । तद्वचनम् आकर्ण्य सिंहव्याघ्रचित्रकवानरशशकहरिणजम्बुकादयः श्वापदगणास् तं प्रणेमुः ' प्रोचुश् च । स्वामिन् ' समादिश ' यद् अस्माभिः कर्तव्यम् । अथ तेन सिंहस्यामात्यपदवी ' व्याघ्रस्य शय्यापालत्वम् ' द्वीपिनः स्थगिका ' करिणः प्रतीहारत्वम् ' वानरस्य छत्त्रधारत्वं दत्तम् । ये पुनर् आत्मीयाः शृगाला आसन् ' ते सर्वे ऽप्य् अर्धचन्द्रं दत्त्वा निःसारिताः । एवं च तस्य राज्ये श्रियम् अनुभवतस् ते सिंहादयो मृगान् व्यापाद्य तस्य पुरतः प्रक्षिपन्ति । सो ऽपि प्रभुधर्मेण सर्वेषां संविभज्य तान् प्रयच्छति ।

एवं गच्छति काले कदाचित् तेनास्थानगतेन तत्प्रदेशासन्नशब्दायमानशृगालवृन्दशब्दम् आकर्ण्य पुलकितवपुषानन्दाश्रुपूर्णनयनयुगलेनोत्थाय तारतरस्वरेण शब्दायितुम् आरब्धम् । अथ ते सिंहादयस् तद् आकर्ण्य ' शृगालो ऽयम् ' इति मत्वा सलज्जा अधोमुखाः क्षणम् एकं तस्थुर् उक्तवन्तश् च । भोः ' वाहिता वयम् अनेन शृगालेन । तद् वध्यताम् असौ । सो ऽपि तद् आकर्ण्य पलायितुम् ईहमानो व्याघ्रेण खण्डशः कृतो मृतश् च ॥

अतो ऽहं ब्रवीमि। त्यक्ताश् चाभ्यन्तरा येन। इति। पिङ्गलक आह। कथं ज्ञेयो ऽसौ मया दुष्टबुद्धिर् इति। कश् चास्य युद्धमार्गः। इति। सो ऽब्रवीत्। अन्यदासौ *स्तब्धाङ्गो देवपादान्तिकम् आगच्छति। अद्य यदि शृङ्गाग्रप्रहरणाभियुक्तचित्तः सचकितश् चोपसर्पिष्यति। तद् देवपादैर् अवगन्तव्यम्। दुष्टबुद्धिर् इति।

एवम् उक्त्वोत्थाय दमनकः संजीवकसकाशं प्रायात्। तस्यापि मन्दगतिर् अधृतिपरीतम् इवात्मानम् अदर्शयत्। ततस् तेनाभिहितः। भद्र। भवतः कुशलम्। सो ऽब्रवीत्। कुतः कुशलम् अनुजीविनाम्। कस्मात्।

संपत्तयः परायत्ताः। सदा चित्तम् अनिर्वृतम्।
स्वजीविते ऽप्य् अविश्वासस्। तेषां ये राजसेवकाः ॥२६२॥

तथा। तावज् जन्मापि दुःखाय। ततो दुर्गतता परा।
तत्रापि सेवया वृत्तिर्। अहो कष्टपरंपरा ॥२६३॥

जीवन्तो ऽपि मृताः पञ्च। व्यासेन परिकीर्तिताः।
दरिद्रो व्याधितो मूर्खः। प्रवासी नित्यसेवकः ॥२६४॥

आहरन्न् अपि न स्वस्थो। विनिद्रो न प्रबुध्यति।
वक्ति न स्वेच्छया किंचित्। सेवको ऽपीह जीवति ॥२६५॥

सेवा श्ववृत्तिर् आख्याता। यैस् तैर् मिथ्या प्रजल्पितम्।
स्वच्छन्दं चरति श्वा हि। सेवको राजशासनात् ॥२६६॥

भूशय्या ब्रह्मचर्यं च। कृशत्वं लघुभोजनम्।
सेवकस्य यतेर् यद्वद्। विशेषः पापधर्मजः ॥२६७॥

स्वाभिप्रायपरोक्षस्य। परचित्तानुवर्तिनः।
स्वयंविक्रीतदेहस्य। सेवकस्य कुतः सुखम् ॥२६८॥

प्रत्यासत्तिं व्रजति पुरुषो यावतीं सेवमानः
कुर्यात् स्वामिन्य् अवहितमनास् तावतीम् एव भीतिम्।
राजा वह्निः सदृशम् उभयं केवलं नामभिन्नं
सह्यो दूराद् भवति दहनो दुःसहः संनिकर्षात् ॥२६९॥ mandā

मृदुनापि सुगन्धेन। *सुमृष्टेनापि हारिणा।
मोदकेनापि किं तेन। निष्पन्नो यस् तु सेवया ॥२७०॥

तत् सर्वथा। कः कालः कानि मित्राणि। को देशः कौ व्ययागमौ।
कश् चाहं का च मे शक्तिर्। इति चिन्त्यं मुहुर् मुहुः ॥२७१॥

हृदयान्तर्निहितभावस्य दमनकस्य वचनं श्रुत्वा संजीवको ऽब्रवीत्। भद्र। कथय। किं वक्तुकामस् त्वम्। सो ऽब्रवीत्। भवांस् तावन् मम सुहृत्। अवश्यं च मया तव हितम् आख्येयम्। अयं हि तावत् स्वामी पिङ्गलकस् तवोपरि क्रुद्धबुद्धिः। अनेन चाद्याभिहितम्। संजीवकं हत्वा सर्वक्रव्यभक्षाणां तृप्तिम् उत्पादयिष्यामि। इति। तच् छ्रुत्वाहं परं विषादम्

आगमम्। तद् यद् अनन्तरं करणीयम्। तत् क्रियताम्। इति। तच् च तद्वचनं वज्रपातसदृशम् आकर्ण्य संजीवकः परं विषादम् अगमत्। सर्वकालश्रद्धेयवचनत्वाच् च दमनकस्य सुतराम् आविग्नहृदयः परं भयम् उपागतः संजीवक आह। साध्व् इदम् उच्यते।

दुर्जनगम्या नार्यः। प्रायेणापात्रभृद् भवति राजा।
कृपणानुसारि च धनं। देवो गिरिजलधिवर्षी च ॥२७२॥ ār

कष्टं भोः कष्टम्। किम् इदम् आपतितं ममेति।

आराध्यमानो नृपतिः प्रयत्नाद्
आराध्यते नाम किम् अत्र चित्रम्।
अयं त्व् अपूर्वः प्रतिमाविशेषो
*यः सेव्यमानो रिपुताम् उपैति ॥२७३॥ upa

किं च। निमित्तम् उद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनो हि यस्य वै
कथं नरस् तं परितोषयिष्यति ॥२७४॥ vaṃśa

अकारणाविष्कृतवैरदारुणाद्
असज्जनात् कस्य भयं न जायते।
विषं महाहेर् इव यस्य दुर्वचः
*सुदुःसहं संनिहितं सदा मुखे ॥२७५॥ vaṃśa

सरसि बहुशस् ताराछायां दृशन् परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशास्व् अविचक्षणः।
न दशति पुनस् ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्ये ऽप्य् अपायम् अपेक्षते ॥२७६॥ hari

तद् अहो। किं मयापकृतं स्वामिनः पिङ्गलकस्य। दमनक आह। वयस्य। निर्निमित्तापकारपराः पररन्ध्रान्वेषिणश् च राजानो भवन्ति। सो ऽब्रवीत्। एवम् एतत्। साधु चेदम् उच्यते।

चन्दनतरुषु भुजंगा। जलेषु कमलानि तत्र च ग्राहाः।
गुणघातिनः खला इति। भवन्ति न सुखान्य् अविघ्नानि ॥२७७॥ ā

न शैलशृङ्गे कमलं प्ररोहति
न दुर्जनात् क्वापि शुभं प्रवर्तते।
न साधवो यान्ति कदापि विक्रियां
यवाः प्रकीर्णा न भवन्ति शालयः ॥२७८॥ vaṃśa

न स्मरन्त्य् अपराधानां। स्मरन्ति सुकृतान्य् अथ।
*असंभिन्नार्यमर्यादाः। साधवः पुरुषोत्तमाः ॥२७९॥

अथवा ममैवायं दोषः । यन् मया कुमित्रसेवा कृता । इति । उक्तं च ।

अकालचर्या विषमा च गोष्ठी
कुमित्रसेवा न कदापि कार्या ।
पश्याण्डजं पद्मवने प्रसुप्तं
धनुर्विमुक्तेन शरेण भिन्नम् ॥२८०॥ upa

दमनक आह । कथम् एतत् । संजीवकः कथयति ।

॥ कथा १२ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे महाप्रमाणं सरः । तत्र च मदरक्तो नाम हंसः प्रतिवसति स्म । तस्य च तत्रानेककालं बहुप्रकारं क्रीडतः समयो ऽतिवर्तते । अथ कदाचित् तस्यान्तकरो मृत्युर् उलूकरूपेणायातः । तं च दृष्ट्वा हंसो ऽब्रवीत् । कुतस् त्वम् अस्मिन् विजने वने । सो ऽब्रवीत् । तव गुणश्रवणाद् अहम् आयातः । अपि च ।

पर्यटन् पृथिवीं सर्वां ' गुणान्वेषणतत्परः ।
गुणैस् त्वदधिको नान्यस् ' तेनायातस् तवान्तिकम् ॥२८१॥
त्वया सह मयावश्यं ' सख्यं कार्यम् इहादरात् ।
अपवित्रम् अपि प्राप्य ' गङ्गां याति पवित्रताम् ॥२८२॥

तथा च ।

हरिहस्तगतः शङ्खः ' पवित्रः प्रथितो ऽस्थ्य् अपि ।
महानुभावसंसर्गः ' कस्य नोन्नतिकारकः ॥२८३॥

एवम् उक्तेन हंसेन ' तथैव ' इति प्रतिपन्नम् । हे सुमित्र ' यथेष्टम् उष्यताम् अस्मिन् महासरसि सुखसेव्ये ऽत्र वने मया समम् । एवं च तयोर् विहरमाणयोः प्रीतिपूर्वं कालो ऽतिवर्तते । अथान्यदोलूक आह । यास्याम्य् अहम् आत्मीयावासं पद्मवनं नाम । यदि मया किंचित् प्रयोजनं ममोपरि च स्नेहानुभावः '

तद् अवश्यं त्वया मम प्राघूर्णकेनागन्तव्यम् । एवम् उक्त्वा स्वकीयावासं गतः ।

अथ कालेन गच्छता हंसश् चिन्तितवान् । तिष्ठन्न् अहम् इहावासे वृद्धीभूतः । न चान्याम् अहं कांचिद् अपि दिशं जानामि । तद् अधुना गच्छामि तस्य प्रियसुहृद् उलूकस्य सकाशम् । तत्र मे नवनवं विनोदस्थानं भक्ष्यभोज्यं च भविष्यति । एवं विचिन्त्योलूकसकाशं गतः । अथ तत्र पद्मवने तं न पश्यति । अतिसुनिपुणम् अन्वेषयन् यावत् पश्यति । तावद् अमुं दिवान्धं विषमविवरम् आश्रितं दृष्ट्वाभिहितवान् । भद्र । एह्य् एहि । प्रियसुहृत् ते हंसो ऽहम् उपागतः । इति श्रुत्वा तेनोच्यते । नाहं दिवसचरः । तव मम चास्तं गते रवौ समागमो भविष्यति । इति श्रुत्वा सुचिरं प्रतीक्ष्य रात्राव् उलूकेन सह संगतः । स्वकुशलवार्त्तादि विधाय मार्गपरिश्रान्तस् तत्रैव प्रसुप्तः ।

अथ तस्मिन्न् एव सरसि महान् *वणिजारकसार्थ आवासितः । अथ सार्थपतिः प्रत्यूषकाल उत्थाय प्रयाणशङ्खं दापितवान् । अत्रान्तर उलूको महान्तं विस्वरशब्दं कृत्वा नदीविवरम् अनुप्रविष्टः । हंसस् तु तथैव स्थितः । ततश् च दुर्निमित्तचकितचित्तसार्थपतिप्रेरितेन केनापि शब्दवेधिना धनुर्धरेण सुदृढं धनुर् आरोप्याकर्णपूर्णं बाणम् आकृष्य चोलूकनीडनिकटवासी हंसो व्यापादितः ॥

अतो ऽहं ब्रवीमि । अकालचर्या विषमा च *गोष्ठी । इत्यादि । पुनः संजीवक आह । अयं तावत् स्वामी पिङ्गलक आदौ वाग्मधुरः । परिणामे विषप्रतिमचित्तः । तत् सर्वथा ।

परोक्षे गुणहन्तारं । प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत् तादृशं मित्रं । विषकुम्भं पयोमुखम् ॥ २८४ ॥

मया चैतद् अनुभूतम्। यथा।

दूराद् उच्छ्रितपाणिर् आर्द्रनयनः संप्रोज्झितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेष्व् अखिन्नोत्तरः।
अन्तर् गूढविषो बहिर् मधुमयश् चातीव मायापटुः
को नामायम् अपूर्वनाटकविधिर् यं शिचितो दुर्जनः॥२८५॥ śārdū

आदाव् अत्युपचारचाटुविनयालंकारशोभान्वितं
मध्ये चापि विचित्रवाक्यकुसुमैर् अभ्यर्चितं निष्फलैः।
*पैशुन्याविनयापमानमलिनं बीभत्सम् अन्ते च यद्
धिक् केनाप्य् अकुलीनसंगतम् असद्धर्मार्थम् उत्पादितम्॥२८६॥ śārdū

तथा च। नमति विधिवत् प्रत्युत्थानं करोत्य् अनुगच्छति
प्रथयति दृढां भक्तिं स्नेहात् परिष्वजतेऽधिकम्।
वदति मधुरं चित्तग्राहि प्रशंसति सद्गुणान्
न हि च कुरुते यत् कर्तव्यं सदैव हि दुर्जनः॥२८७॥ hari

कष्टं भोः कष्टम्। क्वाहं *शष्पभक्षः। क्वायम् आमिषभक्षसिंहसंसर्गः। साधु चेदम् उच्यते।

ययोर् एव समं वित्तं। ययोर् एव समं कुलम्।
तयोर् विवाहः सख्यं च। न तु पुष्टविपुष्टयोः॥२८८॥

उक्तं च। हुताशज्वालाभे स्थितवति रवाव् *अस्तशिखरे
पिपासुः किञ्जल्कं प्रविशति सरोजं मधुकरः।
तदन्तः संरोधं न गणयति संध्यासमयजं
जनोऽर्थी नापायं विमृशति फलैकान्ततृषितः॥२८९॥ śikha

कमलमधुनस् त्यक्त्वा पानं विहाय नवोत्पलं
प्रकृतिसुरभिं गन्धोद्दामाम् अपास्य च मालतीम्।
जलमधुकराः क्लिश्यन्तीमे कटाम्बुषु दन्तिनां
सुलभम् अपहायैवं लोकः खलेष्व् अनुरज्यते॥२९०॥ hari

गल्लोपान्ते सुचिरनिभृतं वारि वन्यद्विपानां
ये सेवन्ते नवमधुरसास्वादलुब्धा द्विरेफाः।
ते तत्कर्णव्यजनपवनप्रेङ्खितैः चिप्तदेहा
*भूमिं प्राप्ताः कमलविवरक्रीडितानि स्मरन्ति॥२९१॥ mandā

अथवा गुणानाम् एवायं दोषः। यतः।

स्वफलनिचयो नम्रां शाखां करोति वनस्पतेर्
गमनम् अलसं बर्हाटोपः करोति शिखण्डिनाम्।
चतुरगमनो जात्यो योऽश्वः स गौर् इव वाह्यते
गुणवति जने प्रायेणैवं गुणाः खलु वैरिणः॥२९२॥ hari

कालिन्द्याः पुलिनेन्द्रनीलशकलश्यामाम्भसो ऽन्तर्जले
मग्नस्याञ्जनपुञ्जमेचकनिभस्याहेः कुतो ऽन्वेषणम् ।
ताराभाः फणचक्रवालमणयो न स्युर् यदि द्योतिनो
यैर् एवोन्नतिम् आप्नुवन्ति गुणिनस् तैर् एव यान्त्य् आपदम् ॥२९३॥ śārdu

नरेन्द्रा भूयिष्ठं गुणवति जने ऽत्यन्तविमुखाः
श्रियः प्रायो लोके व्यसनिषु च मूर्खेषु च रताः ।
नराणां माहात्म्यं गुणत इति मिथ्या स्तुतिर् इयं
जनः प्रायेणैवं न हि पुरुषकारं गणयति ॥२९४॥ śikha

सिंहैः पञ्जरयन्त्रणापरिभवप्रम्लानदीनाननैर्
नागैर् अङ्कुशभिन्नमस्तकपुटैर् मन्त्रालसैः पन्नगैः ।
विद्वद्भिश् च निराश्रयव्यसनिभिः शूरैश् च भाग्यक्षतैः
कालः क्रीडनकैर् *इवात्मरुचितैः प्रेङ्खोलयन् क्रीडति ॥२९५॥ śārdū

सरःपद्मं त्यक्त्वा विकसितम् अपायैर् विरहितं
मदं नागेन्द्राणाम् अभिलषति लोभान् मधुकरः ।
न मूढस् तत्कर्णव्यजनपरिघातं गणयति
स्वभावात् सर्वो ऽर्थी न हि खलु निदानं विमृशति ॥२९६॥ śikha

तत् सर्वथा मम क्षुद्रमण्डलान्तः प्रविष्टस्य जीवितं नास्ति । उक्तं च ।

बहवः पण्डिताः क्षुद्राः । सर्वे मायोपजीविनः ।
कुर्युः कृत्यम् अकृत्यं वा । उष्ट्रे काकादयो यथा ॥२९७॥

दमनक आह । कथं चैतत् । सो ऽब्रवीत् ।

## ॥ कथा १३ ॥

अस्ति कस्मिंश्चिन् नगरे वणिक् सागरदत्तो नाम । स उष्ट्रशतं बहुमूल्यचेलकस्य भृत्वा कस्यांश्चिद् दिशि प्रस्थितः । अथ तस्य विकटनामोष्ट्रो ऽतिभारेण निपीडितो विस्रस्तसर्वाङ्गो निश्चेष्टः पतितः । ततो वणिक् चेलकभरम् अन्येषूष्ट्रेषु विभज्य क्षिप्त्वा ' अरण्यभूमिर् इयं विषमा ' अस्मिन् स्थाने न शक्यते स्थातुम् ' इति विकटं विहाय प्रस्थितः । तस्मिंश् च सार्थवाहे गते विकटः शनैः शनैः संचरञ् *शष्पं भक्षयितुम् आरब्धः । एवम् असौ

कतिपयैर् एवाहोभिर् बलवान् संवृत्तः। तस्मिंश् च वने मदोत्कटो नाम सिंहः प्रतिवसति स्म। तस्यानुचरा द्वीपिवायसगोमायवः। अथ तैस् तद् वनं भ्रमद्भिर् दृष्टः सार्थवाहपरिभ्रष्टः स उष्ट्रः। तं चाविज्ञातपूर्व*रूपं हास्यजनकं दृष्ट्वा सिंहः पृष्टवान्। इदम् अपूर्वं सत्त्वम् इह वने पृच्छ्यताम्। कस् त्वम् असि। ततो ऽवगततत्त्वार्थो वायसो ऽब्रवीत्। उष्ट्रो ऽयं लोके प्रख्यातनामा। ततः सिंहेन पृष्टः। भोः ' कुतस् त्वम् इह। तेन चात्मनो यथावृत्तवियोगः सार्थवाहात् समाख्यातः। अवगताभ्युपपत्तिना च तस्य सिंहेनाभयं दत्तम्। एवं वर्तमाने कदाचित् सिंहो गजयुद्धरदनक्षतशरीरो गुहावासी संवृत्तः। अथ पञ्चषेषु दिनेष्व् अतिक्रान्तेषु सर्व एव त आहारवैकल्याद् आत्ययिकापदि पतिताः। अथ तान् *सीदतो ऽवलोक्य सिंहो ऽभिहितवान्। अहम् अनया क्षतरुजा न क्षमः पूर्ववद् भवताम् आहारम् उत्पादयितुम्। तद् यूयम् आत्मार्थे तावद् अभ्युद्यमं कुरुध्वम् ' इति। ततस् ते प्रोचुः। एवं स्थितेषु देवपादेषु किम् अस्माकं पुष्ट्यर्थेन ' इति। सिंह आह। तर्हि ' साध्व् अनुजीविवृत्तं भक्तिश् च भवताम्। तद् एवमवस्थस्य ममोपानयध्वम् आहारम् ' इति। ततो यदा न किंचिद् ऊचुस् ते ' तदानेनाभिहिताः। भोः ' अलम् अनया व्रीडया। गवेषयतां किंचित् सत्त्वम्। अहम् एतदवस्थो ऽपि भवताम् आत्मनश् चाहारम् उत्पादयिष्ये।

अथ ते चत्वारो ऽपि भ्रमितुम् आरब्धाः। यावत् सत्त्वं किंचिन् न पश्यन्ति ' तावद् वायसशृगालौ मन्त्रयेते। तत्र शृगालो ऽब्रवीत्। भो वायस। किं प्रभूतभ्रमणेन। अयम् अस्माकं प्रभोर् विकटो विश्रब्धस् तिष्ठति। तद् एनं हत्वा प्राणयात्रां कुर्मः।

वायसः प्राह । युक्तम् उक्तं भवता । परं किं तु स्वामिनाभयप्रदानं दत्तम् अस्ति । तेनावध्यः स्याद् अयम् । शृगाल आह । युक्तम् उक्तम् । स्वामिनं विज्ञप्य यथास्य वधं मन्यते । तथा करिष्यामि । इति । तत् तिष्ठन्तु भवन्तो ऽत्रैव । यावद् अहं गृहं गत्वा स्वामिवचनम् आनयामि । एवम् अभिधाय स्वामिनम् उद्दिश्य सत्वरं प्रस्थितः । अथ सिंहम् आसाद्येदम् आह । स्वामिन् । समस्तम् अपि भ्रान्ता वनं सांप्रतं बुभुक्षाक्रान्ताः पदम् एकम् अपि चलितुं न शक्ताः । देवो ऽपि पथ्याहारी वर्तते । तद् यदि देवादेशो भवति । तदा विकटपिशितेनाद्य पथ्यक्रिया क्रियते । अथ सिंहस् तस्य दारुणवाक्यम् आकर्ण्य सकोपम् इदम् आह । धिग् धिक् पापाधम । यद्य् एवं भूयो वदसि । तत् त्वां तत्क्षणाद् एव हनिष्यामि । यतो मया तस्याभयप्रदानं दत्तम् । तत् कथं स्वयम् एव व्यापादयामि । उक्तं च ।

न गोप्रदानं न महीप्रदानं
नान्नप्रदानं हि तथा प्रधानम् ।
यथा वदन्तीह बुधाः प्रधानं
सर्वप्रदानेष्व् अभयप्रदानम् ॥२९८॥

तच् छ्रुत्वा शृगाल आह । स्वामिन् । यद्य् अभयप्रदानं दत्त्वा वधः क्रियते । तदा ते दोषो भवति । यदि पुनः स देवपादानां स्वयम् एव भक्त्यात्मनो जीवितव्यं प्रयच्छति । ततो न दोषः । तद् यदि स्वयम् एव स्वं वधाय नियोजयति । तदा वध्यः । अन्यथास्माकं मध्याद् एकतमो भक्षणीयः । यत्कारणम् । देवः पथ्याहारी वर्तते । क्षुधानिरोधाद् अन्यादृशीं दशां यास्यति । तत् किम् एतैः प्राणैर् अस्माकम् । ये स्वाम्यर्थे न यास्यन्ति । यदि

स्वामिपादानां किंचिद् अनिष्टं भविष्यति । तदास्माभिः पृष्ठतो वह्निप्रवेशः कार्यः । उक्तं च ।

> यस्मिन् कुले यः पुरुषः प्रधानः
> सदैव यत्नेन स रक्षणीयः ।
> तस्मिन् विनष्टे हि कुलं विनष्टं
> न नाभिभङ्गे ह्य् अरका वहन्ति ॥२९९॥

तच् छ्रुत्वा मदोत्कटः प्राह । यद्य् एवम् । तत् कुरु । यद् रोचते ।

इति श्रुत्वा सत्वरं गत्वा तान् उवाच । अहो । स्वामिनो महत्य् अवस्था वर्तते । नासिकान्तप्राप्तजीवितस् तिष्ठति । तत् तेन विना को ऽस्माकम् अत्र कानने रक्षिता । तद् अस्य क्षुद्रोगात् परलोकप्रस्थितस्य स्वयं गत्वा स्वशरीरदानं कुर्मः । येन स्वामिप्रसादस्यानृणतां गच्छामः । उक्तं च ।

> आपदं प्राप्नुयात् स्वामी । यस्य भृत्यस्य पश्यतः ।
> प्राणेषु विद्यमानेषु । स भृत्यो नरकं व्रजेत् ॥३००॥

ततस् ते सर्वे बाष्पपूरितदृशो गत्वा मदोत्कटं प्रणम्योपविष्टाः ।

अथ तान् दृष्ट्वा मदोत्कटः प्राह । भो भोः । प्राप्तं दृष्टं वा किम् अपि सत्त्वम् । अथ काकः प्रोवाच । स्वामिन् । वयं तावत् सर्वत्रैव पर्यटिताः । परं न किंचित् सत्त्वं प्राप्तं दृष्टं वा । तद् अद्य माम् एव भक्षयित्वा प्राणान् धारयतु स्वामी । येन देवस्याप्यायना । मम पुनः स्वर्गप्राप्तिर् भवति । उक्तं च ।

> स्वाम्यर्थे यस् त्यजेत् प्राणान् । मर्त्यो भक्तिसमन्वितः ।
> स परं पदम् आप्नोति । जरामरणवर्जितम् ॥३०१॥

तच् छ्रुत्वा शृगालः प्राह । अल्पकायो भवान् । तव भक्षणात्

स्वामिनः प्राणयाचापि तावन् न भवति । अपरं दोषश् च समुत्पद्यते । उक्तं च ' यतः ।

काकमांसं तथोच्छिष्टं ' स्तोकं तद् अपि दुर्बलम् ।
भक्षितेनापि किं तेन ' येन तृप्तिर् न जायते ॥३०२॥

तद् दर्शिता भवता स्वामिभक्तिः । प्राप्ता लोकद्वये ऽपि साधुता । तद् अपसर ' येनाहम् अपि स्वामिनं विज्ञपयामि । तथानुष्ठिते शृगालः सादरं प्रणम्य प्रोवाच । स्वामिन् ' अद्य मम कायेन प्राणधारणां कृत्वा मम लोकद्वयप्राप्तिं कुरु । उक्तं च ।

स्वाम्यायत्ता यतः प्राणा ' भृत्यानाम् अर्जिता धनैः ।
यतस् तेन न दोषो ऽस्ति ' तेषां ग्रहणसंभवे ॥३०३॥

तद् आकर्ण्य द्वीपी प्राह । भोः ' साधूक्तं भवता । परं भवान् अपि स्वल्पकायः ' स्वजातीयश् च *नखायुधत्वाद् अभक्ष्य एव । उक्तं च ।

नाभक्ष्यं भक्षयेत् प्राज्ञः ' प्राणैः कण्ठगतैर् अपि ।
विशेषात् तद् अपि स्तोकं ' लोकद्वयविनाशि च ॥३०४॥

तद् दर्शितं भवतात्मभृत्यत्वम् । साधु चेदम् उच्यते ।

एतदर्थं कुलीनानां ' नृपाः कुर्वन्ति संग्रहम् ।
आदिमध्यावसानेषु ' न ते गच्छन्ति विक्रियाम् ॥३०५॥

तद् अपसरतु भवान् अग्रतः ' येनाहम् अपि स्वप्रभुं प्रसादयामि । तथानुष्ठिते द्वीपी प्रणम्योवाच । स्वामिन् ' क्रियताम् अद्य मम प्राणैः प्राणयाचा । दीयतां ममाक्षयः स्वर्गवासः । विस्तार्यतां क्षितितले प्रभूतं यशः । तन् नात्र विकल्पः कार्यः । उक्तं च ।

स्थितानां स्वामिनः कार्ये ' भृत्यानाम् अनुवर्तिनाम् ।
भवेत् स्वर्गे ऽक्षयो वासः ' कीर्तिश् च धरणीतले ॥३०६॥

तच् छ्रुत्वा विकटकश् चिन्तयाम् आस । एतैस् तावच् छोभाव-चनान्य् अभिहितानि ' न चैको ऽपि स्वामिना विनाशितः । तद् अहम् अपि प्राप्तकालं विज्ञपयामि ' येन ममापि वचनम् एते त्रयो ऽपि विघटयन्ति । इति निश्चित्य प्रोवाच । भोः ' युक्तम् उक्तं भवता । परं भवान् अपि *नखायुधः । तत् कथं स्वामी भवन्तं भक्षयति । उक्तं च ' यतः ।

मनसापि स्वजात्यानां ' यो ऽनिष्टानि विचिन्तयेत् ।
तस्य लोकद्वयं नास्ति ' भवेच् चाशुचिकीटकः ॥३०७॥

तद् अपसरायतः ' येनाहं स्वामिनं विज्ञपयामि । तथानुष्ठिते विकटकः पुरः स्थित्वा प्रणम्योवाच । स्वामिन् ' एते तावद् अभक्ष्या भवताम् । तन् मम प्राणैः प्राणयात्रा विधीयताम् ' येन ममोभयलोकप्राप्तिर् भवति । उक्तं च ।

न यज्वानो ऽपि गच्छन्ति ' तां गतिं नैव योगिनः ।
स्वाम्यर्थे प्रोज्झितप्राणा ' यां गतिं यान्ति सेवकाः ॥३०८॥

एवम् अभिहिते सिंहानुज्ञातचित्रकशृगालाभ्यां विदारितकुक्षिः काकेन चोत्पाटितनयनो विकटकः प्राणांस् तत्याज । तैश् च क्षुद्भारपीडितैः सर्वैर् अपि भक्षितः ॥

अतो ऽहं ब्रवीमि । बहवः पण्डिताः क्षुद्राः ' इति । आख्याते चाख्यानके पुनर् दमनकं संजीवको ऽब्रवीत् । भद्र ' क्षुद्रपरिवारो ऽयं राजा न शिवायाश्रितानाम् । वरं गृध्रो ऽपि राजा हंसपरिवारः ' न हंसो ऽपि राजा गृध्रपरिवारः ' इति । यतो गृध्रपरिवाराद् धि स्वामिनो बहवो दोषाः प्रादुर्भवन्ति ' ते चालं विनाशाय । तस्मात् तयोः पूर्वम् एव राजानं लिप्सेत । असद्वचनप्रचारितस् तु राजा विचाराक्षमो भवति । श्रूयते चैतत् ।

येन ते जम्बुकः पार्श्वे ' तीक्ष्णतुण्डश् च वायसः ।
तेनाहं वृक्षम् आरूढः ' परिवारो न शोभनः ॥३०९॥

दमनक आह । कथम् एतत् । संजीवकः कथयति ।

॥ कथा १४ ॥

अस्ति कस्मिंश्चिन् नगरे रथकारो देवगुप्तो नाम । स चाजस्रं पथ्यदनं गृहीत्वा सभार्यो ऽरण्ये महाञ्जनस्तम्भाञ् छिनत्ति । अथ तत्र वने विमलो नाम सिंहः प्रतिवसति स्म । तस्यानुचरौ द्वौ पिशिताशनौ गोमायुवायसौ । अथ कदाचित् सिंह एकाकी वने परिभ्रमंस् तं रथकारम् अपश्यत् । रथकारो ऽपि तम् अतिभयानकं सिंहं दृष्ट्वा गतासुम् इवात्मानं मन्यमानः प्रत्युत्पन्नमतितया वा ' बलवदुपसर्पणम् एव श्रेयः ' इति तदभिमुखं गत्वा प्रणम्य प्रोवाच । एह्य् एहि ' सखे । अद्य मदीयम् एव भक्ष्यं त्वया भक्षयितव्यं तव भ्रातृजाययोपनीतम् ' इति । तेन चाभिहितम् । भद्र ' न ममान्नेन प्राणयात्रा भवति ' यतः पिशिताशनो ऽहम् । परं तथापि त्वदीयप्रीत्या किंचिद् आस्वादयामि ' कीदृशो ऽयं भक्ष्यविशेष इति । एवम् उक्तवति सिंहे रथकारेण संखण्डघृतद्राक्षाचतुर्जातकवासितलड्डुकाशोकवर्तिखाद्यकप्रभृतिभिर् विविधभक्ष्यविशेषैः सिंहस् तर्पितः । सिंहेनापि कृतज्ञतया तस्याभयं प्रदत्तम् ' वने ऽस्खलितप्रचारः कृतः । ततो रथकारो ऽब्रवीत् । वयस्य ' त्वया प्रत्यहम् अत्रागन्तव्यम् ' परम् एकाकिनैव । न कश्चिद् अन्यो ममान्तिकम् आनेतव्यः । एवं च तयोः प्रीतिपूर्वकं कालो ऽतिवर्तते । एवं च प्रतिदिनं तथाविधविविधाहारविहितसौहित्यः सिंहो ऽपि न मृगयाविहारं चकार । अथ परभाग्योपजीवितया क्षुधा बाध्यमानाभ्यां गोमायुवायसाभ्यां सिंहो विज्ञप्तः । स्वामिन् ' क्व भवान् प्रत्यहं गच्छति ' गत्वा च प्रीतमनाः प्रत्यागच्छति ' इत्य् आवयोः कथय । सो ऽब्रवीत् । न क्वचिद् अहं

गच्छामि। अथ ताभ्याम् अत्यादरेण पृष्टेन सिंहेनोक्तम्। अस्मिन् वने ऽस्मत्सखा प्रतिदिनम् आगच्छति। तस्य च जाया महाभक्ष्यविशेषान् संपादयति। तान् अहं प्रीतिपूर्वकम् उपभुञ्जे। ततस् ताभ्याम् उच्यते। तच गत्वा रथकारं व्यापाद्य तदीयशोणितमांसेन प्रभूतकालम् आत्मपुष्टिं करिष्यावः। तच् च श्रुत्वा सिंहो ऽब्रवीत्। अहो ' मया तस्याभयं प्रदत्तम्। कथं मनसापि तस्योपरीदृशम् अशोभनं चिन्त्यते। किं तु भवतोर् अपि विशिष्टं भक्ष्यविशेषं तस्मात् संपादयिष्यामि। तथैव ताभ्यां प्रतिपन्नम्। ततो रथकारस्य सकाशं ते गन्तुम् आरब्धाः। अथ दूराद् एव रथकारः सिंहं दुष्टपरिवारसमेतं दृष्ट्वा चिन्तितवान्। न शोभनम् आपतितं मम। इति त्वरिततरं सकलत्रो वनस्पतिम् आरूढः। अथागत्य सिंहो ऽब्रवीत्। भद्र ' किंनिमित्तं माम् आयातं दृष्ट्वा वनस्पतिम् आरूढः। स एवाहं तव सुहृद् विमलो नाम सिंहः। मा भैषीः ' इति। ततस्तेन रथकारेणोच्यते। येन ते जम्बुकः पार्श्वे ' इत्यादि॥

अतो ऽहं ब्रवीमि। क्षुद्रपरिवारो राजा न शिवायाश्रितानाम्। कथिते चाख्यानके पुनर् अपि संजीवक आह। सो ऽयं केनापि ममोपरि पिङ्गलको विप्रलब्धः। अपि च।

मृदुना सलिलेन खन्यमानान्य्
अवघृष्यन्ति गिरेर् अपि स्थलानि।
उपजापविदां च कर्णजापैः
किम् उ चेतांसि मृदूनि मानवानाम्॥३१०॥ aupa

तद् एवं गते किम् अधुना प्राप्तकालम्। अथवा किम् अन्यद् युद्धात्। उक्तं च।

यान् यज्ञसंघैस् तपसा च लोकान्
स्वर्गैषिणो दानचयैश् च यान्ति।
प्राणांश् च युद्धेषु परित्यजन्तः
क्षणेन तान् एव हि यान्ति शूराः॥३११॥ upa

तथा च। मृतः प्राप्स्यति वा स्वर्गं । शत्रूञ् जित्वापि वा सुखम्।
उभाव् अपि हि शूराणां । गुणाव् एतौ सुखावहौ॥३१२॥

तथा च । मणिकनकविभूषणा युवत्यो
*द्विपतुरगासनचामराः श्रियश् च ।
अविकलशशिकान्तम् आतपत्रं
न भवति मातृमुखस्य युद्धभीरोः ॥ ३१३ ॥ puspi

तद्वचः श्रुत्वा दमनकश् चिन्तितवान् । तीक्ष्णशृङ्गो ऽयं पुष्टतरवपुः । कदाचिद् दैववशात् स्वामिनः प्रहरेत् । *तद् अप्य् अयुक्तम् । उक्तं च ।

संदिग्धो विजयो युद्धे । जायते महताम् अपि ।
उपायचितयाद् ऊर्ध्वं । तस्माद् युध्येत पण्डितः ॥ ३१४ ॥

तद् एनं स्वबुद्ध्या युद्धपराङ्मुखं करोमि । इति । आह च । भद्र । अनुपाय एषः । यत्कारणम् ।

शत्रोर् बलम् अविज्ञाय । वैरम् आरभते तु यः ।
स पराभवम् आप्नोति । समुद्रष् टिट्टिभाद् इव ॥ ३१५ ॥

संजीवक आह । कथम् एतत् । दमनकः कथयति ।

## ॥ कथा १५ ॥

अस्ति । कस्मिंश्चिज् *झषमकरकूर्मग्राहशिशुमारशुक्तिशङ्खैर् अन्यैश् च प्राणिगणैर् आवृतस्य महोदधेस् तीरैकदेशे टिट्टिभदंपती प्रतिवसतः । तत्रोत्तानपादो नाम टिट्टिभः । पतिव्रता नाम टिट्टिभी । सा कदाचिद् ऋतुकालावबद्धफला प्रत्यासन्नप्रसवा संवृत्ता । तत्र तया टिट्टिभो ऽभिहितः । किंचित् स्थानम् अन्विष्यताम् । यत्राहं प्रसुवे । टिट्टिभो ऽब्रवीत् । नन्व् एतद् एव स्थानं पूर्वपुरुषोपार्जितं वृद्धिकरम् । अत्रैव प्रसूष्व । इति । साब्रवीत् । अलम् अनेन सापायेन स्थानेन । अत्रायम् अभ्यर्णः समुद्रः । कदाचित् सुदूरम् उल्लसता वेलाजलेन ममापत्यान्य् अपहरेत् । असाव् आह । भद्रे । जानात्य् एष माम् उत्तानपादम् । न खलु शक्तो महोदधिर् मया सार्धम् ईदृशं वैरानुबन्धं विधातुम् । किं न श्रुतं भवत्या ।

को गृह्णाति फणमणिं ' ज्वलन्तम् अतितेजसा भुजंगस्य ।
यो दृष्ट्वैव प्रहरति ' दुरासदं कोपयति कस् तम् ॥३१६॥
ग्रीष्मातपतप्तो ऽपि हि ' वृक्षादिनिराश्रये ऽपि कान्तारे ।
गात्रच्छायां कः किल ' मदान्धनागस्य सेवेत ॥३१७॥

किं च ।

प्रालेयलेशमिश्रे ' मरुति प्राभातिके च वाति जडे ।
गुणदोषज्ञः पुरुषो ' जलेन कः शीतम् अपनयति ॥३१८॥
मत्तेभकुम्भविदलनकृतश्रमं सुप्तम् अन्तकप्रतिमम् ।
यमलोकदर्शनेच्छुः ' सिंहं बोधयति को नाम ॥३१९॥
को गत्वा यमसदनं ' स्वयम् अन्तकम् आदिशत्य् अजातभयः ।
प्राणान् अपहर मत्तो ' यदि शक्तिः काचिद् अस्ति तव ॥३२०॥
ज्वालाशतरुद्धाम्बरम् ' अपगतधूमं सदा महाभयदम् ।
मन्दमतिः कः प्रविशति ' हुताशनं स्वेच्छया मनुजः ॥३२१॥

इति । एवं वदति खगे विहस्य सा टिट्टिभी विदिततत्त्वा तच्छक्तेर् उक्तवती । साध्व् इदम् ' एवं च बहुसदृशम् ।

किं भाषितेन गुरुणा ' लोके हास्यो *भविष्यसि खगेन्द्र ।
हदते तद् इहाश्चर्यं ' यच् छशको हस्तिलिण्डानि ॥३२२॥

कथं चात्मनो स्वयं न ज्ञायते सारासारता ' इति । उक्तं च ।

दुःखम् आत्मा परिच्छेत्तुम् ' इति योग्यो न वेत्ति वा ।
इदं यस्यास्ति विज्ञानं ' न स कृच्छ्रेषु सीदति ॥३२३॥
अनेन सिध्यति ह्य् एतन् ' ममाप्य् एष पराक्रमः ।
एवं ज्ञात्वा चरेद् यस् तु ' सफलास् तस्य बुद्धयः ॥३२४॥

सुष्ठु चेदम् उच्यते ।

मित्राणां हितकामानां ' न करोतीह यो वचः ।
स कूर्म इव दुर्बुद्धिः ' काष्ठाद् भ्रष्टो विनश्यति ॥३२५॥

टिट्टिभ आह । कथम् एतत् । साब्रवीत् ।

॥ कथा १६ ॥

अस्ति कस्मिंश्चित् सरसि कम्बुग्रीवो नाम कच्छपः । तस्य च सुहृदौ संकटविकटनामानौ द्वौ हंसौ । अथ कालपर्यायाद् द्वादशवार्षिक्य् अवृष्टिर् आपतिता । ततस् तयोर् ईदृशं चित्ते संजातम् । क्षीणतोयं जातम् इदं सरः । अन्यं जलाशयं गच्छावः ' इति । किं पुनश् चिरपरिचितम् इदं प्रियमित्रं कम्बुग्रीवम् आमन्त्रयावहे । तथानुष्ठिते कच्छपेनाभिहितम् । कस्मान् ममामन्त्रणं क्रियते । अहं हि जलचरः । इहाद्य स्वल्पजलत्वाद् युवयोर् वियोगदुःखाच् च विनष्ट एवाचिराद् अस्मि । तद् यदि मयि कश्चित् स्नेहो ऽस्ति ' ततो माम् अस्मान् मृत्युमुखात् त्रातुम् अर्हथः । किं तु युवयोस् तावद् आहारवैकल्यम् एव केवलम् अस्मिन् स्वल्पोदके सरसि ' सद्य एव ममात्र मरणम् । तच् चिन्त्यताम् आहारप्राणवियोगयोः किं गरीयः ' इति । ततस् ताभ्याम् अभिहितम् । असमर्थाव् आवाम् अपक्षिणं जलचरं त्वां सह नेतुम् । कच्छपो ऽब्रवीत् । *अस्त्य् उपायः । समानीयतां यष्टिकाष्ठखण्डम् एकम् । तथानुष्ठिते यष्टिखण्डं मध्ये *दन्तसंदंशेन धृत्वोवाच । एनं चञ्च्वा सुदृढम् उभयपार्श्वयोर् गृहीत्वोड्डीय गम्यतां व्योममार्गेण समगतिभ्यां युवाभ्याम् ' यावद् अन्यो विशिष्टजलाशयः ' इति । अथ ताव् ऊचतुः । अपायलक्षणो ऽयम् उपायः । यदि कथम् अपि

स्वल्पालापम् अपि करोषि ' तदा यष्टिग्रहाच् च्युतः सुदूरात् पतितः खण्डशो भविष्यसि । कच्छप आह । मम खलु मौनव्रतम् अद्यप्रभृति ' यावद् आकाशगमनम् । अथ तथानुष्ठिते कथं कथम् अपि ताभ्यां हंसाभ्यां जलाशयाद् आसन्ननगरोपरिभागेन तथा नीयमानं कच्छपं दृष्ट्वा ' किम् इदं शकटसदृशं वियता पक्षिभ्यां नीयते ' इत्य् अधस्ताज् जनकलकलारवः समुत्थितः । तं च कच्छपः श्रुत्वासन्नमृत्युश् चापलाद् अब्रवीत् । एष लोकः किं प्रलपति । इति ब्रुवन् वाक्समम् एव चाश्रयान् मूर्खः परिभ्रष्टो भूमौ निपतितः । तत्कालम् एव मांसार्थिना लोकेन तीक्ष्णशस्त्रैः खण्डशो विभक्तः ' इति ॥

अतो ऽहं ब्रवीमि । मित्राणां हितकामानाम् ' *इति । पुनश् चाब्रवीत् ।

अनागतविधाता च ' प्रत्युत्पन्नमतिश् च यः ।
द्वाव् एतौ सुखम् एधेते ' यद्भविष्यो विनश्यति ॥३२६॥

टिट्टिभ आह । कथं चैतत् । सा कथयति ।

॥ कथा १७ ॥

कस्मिंश्चिन् महाह्रदे महाकायास् त्रयो मत्स्याः प्रतिवसन्ति स्म ' तद् यथा ' अनागतविधाता प्रत्युत्पन्नमतिर् यद्भविष्यः ' इति । तत्र यो ऽसाव् अनागतविधाता ' तेनोदकतीरान्ते कदाचिद् अतिक्रमतां मत्स्यबन्धिनां च वचनम् अनुश्रुतम् ' यथा । बहुमत्स्यो ऽयं ह्रदः । अद्य श्वो मत्स्यबन्धनं कुर्मः । तच् च श्रुत्वानागतविधात्रा चिन्तितम् । न शोभनम् आपतितम् । अवश्यम् एते

स्थः परश्वो वात्रागन्तारः । तद् अहं प्रत्युत्पन्नमतियद्भविष्यौ गृहीत्वान्यम् अविच्छिन्नस्रोतसं ह्रदं संश्रयामि । ततस् ताव् आहूय पृष्टवान् । तत्र प्रत्युत्पन्नमतिर् अब्रवीत् । चिरसेवितो ऽयं ह्रदो न शक्यत एकपद एव परित्यक्तुम् । यद्य् अत्र मत्स्यजीविनः समागमिष्यन्ति ˈ तदाहं तत्समयोचितकर्मणा केनाप्य् आत्मानं रक्षयिष्यामि । यद्भविष्यस् त्व् आसन्नमृत्युर् आह । सन्त्य् अन्ये ऽपि विपुलतरा ह्रदाः । को जानाति ˈ यद् अत्रागमिष्यन्ति वा न *वेति । तन् न युक्तम् एतावच्छ्रवणमात्रेणापि जन्मह्रदं परित्यक्तुम् । उक्तं च ˈ यतः ।

सर्पाणां दुर्जनानां च ˈ परच्छिद्रानुजीविनाम् ।
अभिप्राया न सिध्यन्ति ˈ तेनेदं वर्तते जगत् ॥३२७॥

तस्मान् मया न गन्तव्यम् । *एष निश्चयः ˈ इति । एवं तौ तत्र स्थिरौ मत्वानागतविधातान्यजलाशयं गतः । अन्येद्युश् चापयाते तस्मिन् *परिजनसमेतैर् मत्स्यबन्धैर् अन्तःस्रोतो निरुध्य जालं प्रक्षिप्य निःशेषमत्स्यानां बन्धः कृतः । एवं स्थिते प्रत्युत्पन्नमतिर् मृतरूपं *जालस्यान्तर् आत्मानं दर्शितवान् । तैश् च ˈ स्वयम् एव मृतो ऽसौ महामत्स्यः ˈ इति मत्वा जालाद् आकृष्य तटे स्थापितः । ततो ऽसौ भूयो जलाशयं प्रविष्टः । यद्भविष्यस् तु जालविवरविनिहितमुखः समुच्छलन् अनेकलगुडप्रहारजर्जरितशरीरः पञ्चत्वम् उपनीतस् तैः ॥

अतो ऽहं ब्रवीमि । अनागतविधाता च ˈ इति । टिट्टिभ आह । भद्रे ˈ किं मां यद्भविष्यवन् मन्यसे ।

वाजिवारणलोहानां ˈ काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानां ˈ दृश्यते महद् अन्तरम् ॥३२८॥

तन् न भीः कार्या । मद्भुजपरिरक्षितायाः कस् ते पराभवं कर्तुं समर्थः । अथ प्रसूतायां टिट्टिभ्यां श्रुतपूर्वतदालापः समुद्रश् चिन्तयाम् आस । अहो ' साध्व् इदम् उच्यते ।

उत्क्षिप्य टिट्टिभः पादौ ' शेते भङ्गभयाद् दिवः ।
स्वचित्तकल्पितो गर्वः ' कस्य नाम न विद्यते ॥३२९॥

तद् अहम् एतदीयशक्तिं ज्ञास्यामि । अन्येद्युः प्राणयात्रां गतयोस् तयोर् अण्डकानि सविशेषप्रसारितकल्लोलहस्तैः कौतुकेनापहृतवान् । अथायाता टिट्टिभी शून्यम् अपत्यस्थानं दृष्ट्वा भर्तारम् आह । पश्य मे यद् आपतितं मन्दभाग्यायाः । समुद्रेणाण्डकान्य् अद्यापहृतानि । उक्तस् त्वम् असकृन् मया ' यद् अन्यत्र गच्छावः । परं यद्भविष्यवद् अल्पमतिर् न गतः । अहम् अधुना स्वापत्यनाशदुःखिता वह्नौ प्रवेक्ष्यामि । इति मे निश्चयः । टिट्टिभ आह । भद्रे ' दृश्यतां तावन् मम सामर्थ्यम् ' यावद् एनं दुष्टम् अम्बुनिधिं स्वचञ्च्वा शोषयामि । टिट्टिभी प्राह । आर्यपुत्र ' कस् ते समुद्रेण सह विग्रहः । तथा च ।

अविदित्वात्मनः शक्तिं ' परस्य च समुत्सुकः ।
गच्छन्न् अभिमुखो मोहान् ' नश्येद् वह्नौ पतङ्गवत् ॥३३०॥

टिट्टिभ आह । प्रिये ' मा मैवं वद ।

बालस्यापि रवेः पादाः ' पतन्त्य् उपरि भूभृताम् ।
तेजसा सह जातानां ' वयः कुत्रोपयुज्यते ॥३३१॥

तद् अनया चञ्च्वा सकलम् अपि तोयं शोषयित्वा जलधिं स्थलीकरिष्यामि । टिट्टिभी प्राह । भोः कान्त ' यत्र जाह्नवी सिन्धुश् च नवनवनदीशतानि गृहीत्वा निरन्तरम् एव प्रविशतः '

तं कथं विप्रुड्वाहिन्या चञ्च्वा शोषयिष्यसि । तत् किम् अश्रद्धेयप्रजल्पितेन । टिट्टिभ आह ।

अनिर्वेदः श्रियो मूलं । चञ्चुर् मे लोहसंनिभा ।
अहोरात्राणि दीर्घाणि । समुद्रः किं न शुष्यति ॥३३२॥

यतः ।

दुरधिगमः परभागो । यावत् पुरुषेण पौरुषं न कृतम् ।
जयति तुलाम् अधिरूढो । भास्वान् अपि जलदपटलानि ॥३३३॥

टिट्टिभी प्राह । यदि त्वयावश्यम् एव समुद्रेण सह वैरयितव्यम् । तद् अन्यान् अपि विहगान् समाहूय तद् एव समाचर । उक्तं च ।
यतः ।

बहूनाम् अप्य् असाराणां । समुदायो जयावहः ।
तृणैर् आवेष्ट्यते रज्जुस् । तया नागो ऽपि बध्यते ॥३३४॥

तथा च ।

*चटिका काष्ठकूटेन । मक्षिका सह दर्दुरैः ।
महाजनविरोधेन । कुञ्जरः प्रलयं गतः ॥३३५॥

टिट्टिभ आह । कथम् एतत् । साब्रवीत् ।

## ॥ कथा १८ ॥

कस्मिंश्चिद् वनगहनप्रदेशे चटकदंपती तमालशाखाकृतनीडौ प्रतिवसतः । अथ तयोर् गच्छति काले संततिर् अभवत् । अथान्यस्मिन् अहनि तत्र मत्तः कश्चिद् वनगजो घर्मार्तस् तं तमालवृक्षं छायार्थी समाश्रितः । ततो मदान्धत्वात् तां चटकयुग्मसमाश्रितां

ाखां पुष्कराग्रेणाकृष्य बभञ्ज। तद्भङ्गे चटकाण्डकानि विशीर्णानि। आयुःशेषतया कथंचिच् चटकयुगलं न मृत्युम् आससाद। अथ चटिका स्वापत्यमृत्युशोकविधुरा प्रलपितवती। एतस्मिन् अन्तरे तस्याः प्रलापान् समाकर्ण्य काष्ठकूटो नाम पक्षी तस्याः परमसुहृत् तद्दुःखदुःखित आगत्य ताम् उवाच। भद्रे किं वृथाप्रलपितेन। उक्तं च यतः।

नष्टं मृतम् अतिक्रान्तं नानुशोचन्ति पण्डिताः।
पण्डितानां *च मूर्खाणां विशेषो ऽयं यतः स्मृतः ॥३३६॥

तथा च।

अशोच्यानीह भूतानि यो मूढस् तानि शोचति।
तद्दुःखाल् लभते दुःखं द्वाव् अनर्थौ निषेवते ॥३३७॥

अन्यच् च।

श्लेश्माश्रु बान्धवैर् मुक्तं पितॄणाम् उपतिष्ठते।
तस्मान् न रोदितव्यं स्यात् क्रिया कार्या स्वशक्तितः ॥३३८॥

चटिका प्राह। अस्त्य् एतत्। परं किम्। अनेन दुष्टगजेन मदान् मे संतानक्षयः कृतः। तद् यदि त्वं मम सुहृत् तद् अस्य महागजस्य *कंचिद् वधोपायं चिन्तय। तदनुष्ठानेन संततिविनाशजं दुःखं निवर्तते। उक्तं च।

आपदि येनोपकृतं येन च हसितं दशासु विषमासु।
उपकृत्य तयोर् उभयोः पुनर् अपि जातं नरं मन्ये ॥३३९॥ ār

काष्ठकूट आह। भवत्या सत्यम् अभिहितम्। उक्तं च यतः।

स सुहृद् व्यसने यः स्याद् अन्यजात्युद्भवो ऽपि सन्।
वृद्धौ सर्वो ऽपि मित्रं स्यात् सर्वेषाम् एव देहिनाम् ॥३४०॥

तथा च ।

स सुहृद् व्यसने यः स्यात् ' स पिता यस् तु पोषकः ।
तन् मित्रं यत्र विश्वासः ' सा भार्या यत्र निर्वृतिः ॥ ३४१ ॥

तत् पश्य मे बुद्धिप्रभावम् । परं किं तु ममापि सुहृद्भूता वीणारवा नाम मक्षिकास्ति । तां समाहूयागच्छामि ' येन स दुरात्मा दुष्टगजो वध्यते । अथासौ *चटिकया सह मक्षिकाम् आसाद्य प्रोवाच । भद्रे ' इयं मम सुहृच् *चटिका दुष्टगजेनाण्डकविस्फोटेन पराभूता । तत् तस्य वधोपायम् अनुतिष्ठतो मे साहाय्यं कर्तुम् अर्हसि त्वम् । मक्षिकाह । भद्र ' किम् उच्यते ऽत्र विषये । परं ममापि परमसुहृन् मेघदूतो नाम मण्डूको ऽस्ति । तम् अपि समाहूय यथोचितं कुर्मः । उक्तं च ' यतः ।

हितैः साधुसमाचारैः ' शास्त्रज्ञैर् मतिशालिभिः ।
कथंचिन् न विकल्प्यन्ते ' विद्वद्भिश् चिन्तिता नयाः ॥ ३४२ ॥

अथ त्रयो ऽपि गत्वा मेघदूतस्य समस्तम् अपि वृत्तान्तं निवेदयाम् आसुः । अथ स प्रोवाच । कियन्मात्रो ऽसौ वराकः करी महाजनस्य कुपितस्य । तत् ' मक्षिके ' त्वं गत्वा तस्य मदोद्धतस्य कर्णे शब्दं कुरु ' येन त्वच्छब्दश्रवणसुखान् निमीलिताक्षो भवति । ततश् च काष्ठकूटचञ्चुस्फोटितनयनः पिपासार्तो गर्तातटसंश्रितस्य मम शब्दम् आकर्ण्य जलाशयं *मत्वा समागच्छन् गर्ताम् आसाद्य पतित्वा पञ्चत्वं याति । अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयसुखान् निमीलितनेत्रः काष्ठकूटापहृतचक्षुर् मध्याह्नसमये तृषार्तो भ्रमन् मण्डूकशब्दानुसारी गच्छन् महतीं गर्ताम् आसाद्य पतितो मृतश् च ॥

अतो ऽहं ब्रवीमि । *चटिका काष्ठकूटेन ' इति । टिट्टिभः प्राह । एवं भवतु । सुहृत्समुदायेन समुद्रं शोषयिष्यामि । इति निश्चित्य सर्वान् पक्षिणः समाहूय स्वापत्यापहारदुःखं निवेदितम् । ते ऽपि तद्दुःखप्रतीकारनिमित्तं समुद्रं पक्षैस् ताडयितुम् आरब्धाः । तत्रैकेन पक्षिणाभिहितम् । नैवम् अस्मन्मनोरथाः सिध्यन्ति । किं तु समुद्रम् एव लोष्टैः पांसुभिश् च पूरयामः । इत्य् उक्ते सर्वे ऽपि चञ्चुपुटसंगृहीतपांसुलोष्टनिचयाः समुद्रं पूरयितुम् आरेभिरे । अथान्यो ऽब्रवीत् । सर्वथाशक्ता वयं महोदधिविग्रहस्य । तद् अत्र यत् प्राप्तकालम् ' तद् उपदिशामि । अस्त्य् एको वृद्धहंसो न्यग्रोधपादपवासी । स चास्माकं समयोचितहितबुद्धिं दास्यति । अतस् तं गत्वा पृच्छामः । उक्तं च ।

श्रव्यं वाक्यं हि वृद्धानां ' ते वृद्धा ये बहुश्रुताः ।
हंसयूथं वने बद्धं ' वृद्धबुद्ध्या विमोचितम् ॥३४३॥

पक्षिण ऊचुः । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा १९ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे महाशाखो वटवृक्षः । तत्र च हंसकुलं प्रतिवसति स्म ' अथ तस्य वटस्याधस्तात् कोशाम्बी नाम वल्ली प्रादुर्भूता । अथ तेन वृद्धहंसेनोक्तम् । येयं वल्ल्य् अमुं वटवृक्षम् आरोहति ' सास्माकम् अतिविषमा । अनेनाश्रयेण कश्चिद् इहारुह्य कदाचिद् अस्मान् हन्याद् इति । यावद् इयं लघ्वी सुखच्छेद्या ' तावद् अपनीयताम् ' इति । अथ तस्य वचनम् अवगणय्य ते न च तां वल्लीं छिन्नवन्तः । अथ कालक्रमात् सा

वल्ली तं वृक्षं समन्ताद् आरूढवती । अथ कदाचित् कश्चिद् व्याधस् तेषां हंसानाम् आहारार्थं विनिर्गतानां लतानुसारेण वटवृक्षे समारुह्य हंसावासेषु पाशान् आसज्य स्वकीयावासं ययौ । अथ ते हंसाः कृताहारविहारा निशायां यावद् आगताः । तावत् सर्वे ऽपि पाशैर् बद्धाः । अथ वृद्धहंसो ऽब्रवीत् । इदं तद् आपतितं पाशबन्धनव्यसनम् । यन् मम वचनम् अनादृत्य युष्माभिश् चेष्टितम् । इति । तद् इदानीं सर्वे विनष्टाः *स्मः । ततस् ते हंसास् तम् ऊचुः । आर्य । एवम् अवस्थिते किम् अधुना कर्तव्यम् । अथासाव् आह । यदि मम वचनं *कुरुथ । तदा यावद् असौ व्याधः समभ्येति । तावद् भवद्भिर् मृतकरूपेणासितव्यम् । व्याधस् तु । मृता एवैते । इति मत्वा यावत् सर्वान् अपि भूमौ प्रक्षिपति । ततः सर्वैः पतितैस् तस्योत्तरत एककालम् उत्पतितव्यम् । अथ वृत्ते सुप्रभाते व्याधः समायातो यावत् पश्यति । तावत् ते सर्वे ऽपि मृतप्रायाः । ततस् तेन विश्वस्तमतिना पाशाद् अवमुच्य क्रमेण सर्वे भूमौ प्रक्षिप्ताः । तं च [illegible]े ऽवतरणाय कृतोद्यमं दृष्ट्वा वृद्धहंसदत्तमतिप्रमाणेन सर्वे ऽपि समकालम् उत्पतिताः ॥

अतो ऽहं ब्रवीमि । श्रव्यं वाक्यं हि वृद्धानाम् । इति । आ-[illegible]ख्याते चाख्यानके सर्वे ते पक्षिणो वृद्धहंसान्तिकं गत्वापत्यहरण-[illegible]ःखं निवेदितवन्तः । अथ वृद्धहंसेनोच्यते । अस्माकं सकलपक्षिणां [illegible]रुडो राजा । तद् अत्र समयोचितम् । सर्व एव भवन्त एककालम् [illegible]आक्रन्दारवेण गरुडम् उद्वेजयन्तु । एवं च स नो दुःखम् अपने-[illegible]ति । इति संप्रधार्य गरुडसकाशं गताः । गरुडो ऽपि देवासुरसं-[illegible]मनिमित्तं समाहूतो भगवता नारायणेन । ततस् तस्मिन्न् एव

समये तैः पक्षिभिर् निवेदितं समुद्रकृतम् अपत्यहरणवियोगदुःखं स्वामिने पक्षिराजाय । यथा । देव । त्वयि नाथे प्रतपति चञ्चुभरणमात्रजीविनो भोजनदौर्बल्याद् अस्मान् परिभूय समुद्रः शिशून् अपहृतवान् । श्रूयते च ।

प्रच्छन्नं किल भोक्तव्यं । दरिद्रेण विशेषतः ।
पश्य भोजनदौर्बल्याद् । हुडः केसरिणा हतः ॥३४४॥

गरुडः पृच्छति । कथम् एतत् । वृद्धपक्षी कथयति ।

## ॥ कथा २० ॥

अस्ति कस्मिंश्चिद् वनोद्देशे स्वयूथच्युतो हुडः । स च बृहत्केसरशृङ्गपञ्जरः कठिनगात्रो वनं परिभ्रमति । अथ कदाचित् तत्र वने सकलमृगपरिवृतः सिंहस् तम् अपश्यत् । दृष्ट्वा च तम् अदृष्टपूर्वं सर्वतः सततोद्धुषितगात्रम् अव्यक्ततनुं क्षुभितहृदयो भयम् उपागतो । नूनम् अयं मत्तो ऽतिबलवान् । इति मन्यते । अत एवात्र विशङ्कः परिभ्रमति । इति विचिन्त्य शनैः शनैर् अपससार । अथान्येद्युस् तम् एव हुडं वनभुवि तृणानि चरन्तं दृष्ट्वा सिंहो व्यचिन्तयत् । कथम् असौ तृणाशी । तन् नूनम् अनेनाहारानुरूपबलेन भवितव्यम् । इति विचिन्त्य सहसोपसृत्य हुडो व्यापादितः ॥

अतो ऽहं ब्रवीमि । प्रच्छन्नं किल भोक्तव्यम् । इति । इत्य् एवं कथयतां तेषां पुनर् विष्णुदूतः समागत्य प्राह । भो गरुत्मन् । स्वामी नारायणस् त्वाम् आज्ञापयति । अमरावतीगमनाय शीघ्रम् आगम्यताम् । इति । तद् आकर्ण्य गरुडः साभिमानं तम् आह ।

भो दूत ' किं मया कुभृत्येन स्वामी करिष्यति । दूत आह । भो गरुड ' कदाचिद् भगवता भवन्तं प्रति विरूपम् अभिहितम् । तत् कथं भगवन्तं प्रत्य् अभिमानं करोषि । गरुड आह । भगवतः समाश्रयभूतेन समुद्रेणास्मद्भृत्यस्य टिट्टिभस्याण्डकान्य् अपहृतानि । तद् यदि तस्य निग्रहं न करोमि ' ततो भगवतो ऽहं न भृत्यः ' इति त्वया स्वामिने निवेदनीयम् । अथ दूतमुखेन विष्णुः प्रणय-कुपितं गरुत्मन्तं विज्ञाय चिन्तयाम् आस । अहो ' अतिकोपो वैनतेयस्य । तत् स्वयम् एनं गत्वा संबोध्य संमानपुरःसरम् आनयामि । उक्तं च ।

शक्तं भक्तं कुलीनं च ' न भृत्यम् अपमानयेत् ।
पुत्रवल् लालयेन् नित्यं ' यदीच्छेच् *छ्रियम आत्मनः ॥३४५॥

किं च ।

स्वामी तुष्टो ऽपि भृत्यानां ' मानमात्रं प्रयच्छति ।
ते तु संमानितास् तस्य ' प्राणैर् अप्य् उपकुर्वते ॥३४६॥

इति संप्रधार्य सत्वरं गरुडसकाशम् अगमत् । सो ऽपि स्वस्वामिनं गृहागतम् अवलोक्य त्रपाधोमुखः प्रणम्योवाच । भगवन् ' त्वदाश्रयवशोन्मत्तेन समुद्रेण ' पश्य ' मे भृत्यस्याण्डकान्य् अपहृत्य ममापमानं विहितम् । भगवल्लज्जया मया विलम्बितम् । नो चेत् ' एनम् अहं स्थलताम् अद्यैव नयामि । उक्तं च ।

येन स्याल् लघुता लोके ' पीडा च प्रभुचेतसि ।
प्राणत्यागे ऽपि तत् कर्म ' न कुर्यात् कुलसेवकः ॥३४७॥

इत्य् उक्ते भगवान् आह । भो वैनतेय ' सत्यम् उक्तं भवता । यतः ।

सदा भृत्यापराधेन ' स्वामिनं दण्डयेत् किल ।
यदि क्रूरं च दुष्टं च ' स्वामी भृत्यं न मुञ्चति ॥३४८॥

तद् आगच्छ । येन समुद्राद् अण्डकान्य् आदाय टिट्टिभं च संतोष्य सुरकार्यायामरावतीं गच्छावः । तथेति प्रतिपन्ने समुद्रं निर्भर्त्स्य भगवता धनुष्य् आग्नेयं शरं संधायाभिहितम् । भो दुरात्मन् । दीयताम् अस्य टिट्टिभस्याण्डकानि । नो चेत् । त्वां स्थलतां नेष्यामि । इति श्रुत्वा समुद्रो ऽपि भयचकितसकलपरिवारो वेपमानस् तान्य् अण्डकानि गृहीत्वा भगवद्विदितं टिट्टिभस्य समर्पयाम् आस ॥

अतो ऽहं ब्रवीमि । शत्रोर् बलम् अविज्ञाय । इति । अवगततत्त्वार्थश् च संजीवकस् तम् अपृच्छत् । वयस्य । कथय । कस् तस्य युद्धमार्गः । इति । सो ऽब्रवीत् । अन्यदासौ *स्रस्ताङ्गः शिलातलस्थितो यथा तथैवासीत् । अद्य यदि प्रथमम् एव संगृहीतलाङ्गूलः संहितचतुश्चरणस्तब्धकर्णो दूराद् एव त्वत्संमुखम् ईक्षमाणस् तिष्ठति । ततस् त्वयावगन्तव्यः । ममोपरि द्रोहबुद्धिः । इति ।

एवम् उक्त्वा दमनकः करटकसकाशं गतः । तेन चाभिहितम् । किम् अनुष्ठितं भवता । सो ऽब्रवीत् । *भेदितौ तौ तावत् परस्परं मया । करटक आह । किं सत्यम् । दमनको ऽब्रवीत् । फलेन ज्ञास्यति भवान् । करटक आह । को ऽत्र विस्मयः । उक्तं च ।

भिनत्ति सम्यक् प्रहितो । भेदः स्थिरमतीन् अपि ।
भूधरान् संहितशिलान् । महापूर इवाम्भसाम् ॥ ३४९ ॥

दमनक आह । भेदम् उत्पाद्य सर्वथा पुरुषेणात्महितं कार्यम् । उक्तं च ।

यो ऽधीत्य शास्त्रम् अखिलं । शास्त्रार्थं तत्त्वतश् च विज्ञाय ।
आत्महितं न हि कुरुते । श्रमावहैस् तस्य किं शास्त्रैः ॥ ३५० ॥

करटक आह । तत्त्वतो न किंचिद् आत्महितम् । यतः ।

कृमयो भस्म विष्ठा वा । निष्ठा यस्येयम् ईदृशी ।
स कायः परपीडाभिः । पोष्यते यत् स को नयः ॥ ३५१ ॥

दमनक आह । अनभिज्ञो ऽसि मन्त्रिकुलमूलवेतनस्य प्रकृतिकुटिलस्य नीतिमार्गस्य । तत्रेत्य् उक्तम् ।

निस्त्रिंशं हृदयं कृत्वा । वाणीं चेक्षुरसोपमाम् ।
विकल्पो ऽत्र न कर्तव्यो । हन्यात् पूर्वापकारिणम् ॥ ३५२ ॥

अन्यच् च । निहतो ऽप्य् एष संजीवको ऽस्माकम् उपभोग्यो भविष्यति । यतः ।

परस्य पीडनं कुर्वन् । स्वार्थसिद्धिं च पण्डितः ।
गूढबुद्धिर् न लक्ष्येत । वने चतुरको यथा ॥ ३५३ ॥

करटक आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा २१ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे क्रव्यमुखचतुरकशङ्कुकर्णाख्यैर् वृकजम्बुककरभैर् मन्त्रिभिः सहितो वज्रदंष्ट्रो नाम सिंहः । स कदाचिन् मत्तगजेन सह युध्यमानस् तदीयदन्तकोटिपाटितवपुर् एकान्तम् आस्थितः । ततः सप्तदिनोपवासपीडितः क्षुत्क्षामतनुस् तान् क्षुधा बाध्यमानान् सचिवान् आह । किंचिद् अन्विष्यतां वने सत्त्वम् , येनाहम् एतदवस्थो ऽपि भवतां तृप्तिम् उत्पादयामि , इति । अथ तदाज्ञासमकालम् एव ते वने पर्यटिताः , परं न किंचिद् आसादितम् । अथ चतुरकश् चिन्तयाम् आस । यदि शङ्कुकर्णो ऽयं व्यापाद्यते , तदा सर्वेषां कतिचिद् दिनानि तृप्तिर् भवति । परं नैनं स्वामी मित्रत्वाद् व्यापादयिष्यति । अथवा बुद्धिप्रभावेण स्वस्वामिनं तथा प्रबोधयिष्यामि , यथा व्यापादयति । तथा च ।

अवध्यं वाथवागम्यम् , *अकृत्यं नास्ति किंचन ।
लोके बुद्धिमताम् अत्र , तस्मात् तां योजयाम्य् अहम् ॥३५४॥

एवं संचिन्त्य शङ्कुकर्णम् इदम् आह । भोः शङ्कुकर्ण , स्वामी पथ्यं विना क्षुधया परिपीड्यते । स्वाम्यभावाद् अस्माकं चैव ध्रुवं मृत्युः । तत् त्वदर्थं स्वाम्यर्थं च किंचिद् वदिष्यामि । तच् छ्रूयताम् । शङ्कुकर्ण आह । भो भद्र , शीघ्रतरं निवेदय , येन त्वद्वचनम् अविकल्पः करोमि । अपरं स्वामिनो हिते कृते सुकृतशतं कृतम् । चतुरक आह । भो भद्र , आत्मशरीरं द्विगुणलाभेन प्रयच्छ , येन ते द्विगुणं शरीरं भवति , स्वामिनः प्राणयात्रा भवति । तच् छ्रुत्वा शङ्कुकर्ण आह । भद्र , यद्य् एवम् , तन् मदीयम् एवेदं प्रयोजनम् । तद् उच्यतां स्वामी । एतद् एव

यताम्' इति। परम् अत्र विषये धर्मराजः प्रतिभूर् याच-
यः।

एवं निश्चित्य सर्वे ते सिंहसकाशम् आजग्मुः। ततश् चतुरक
ह। देव' न किंचिद् अद्य सत्त्वम् आसादितम्' भगवान्
दित्यो ऽप्य् आसन्नास्तमयः। तच् छ्रुत्वा सिंहः परं विषादम्
ामत्। अथ चतुरक आह। देव' एवम् असौ शङ्कुकर्णो ऽभि-
ं। यदि धर्मराजं प्रतिभुवं दत्त्वा द्विगुणवृद्ध्या पुनः प्रयच्छति'
ाहं स्वशरीरं प्रयच्छामि' इति। सिंह आह। भद्र' सुन्दरम्
म्। एवं क्रियताम्। तथा' इति प्रतिपन्ने सिंहतलाहतो
श्शृगालाभ्यां विदारितकुक्षिः शङ्कुकर्णः पञ्चत्वम् उपगतः।
थ चतुरकश् चिन्तयाम् आस। कथम् अयम् एकाकिनो मे
थ्यः स्यात्। इति मनसा संप्रधार्य सिंहं रुधिरसिक्ताङ्गं दृष्ट्वाब्र-
त्। गच्छतु स्वामी नद्यां स्नानदेवतार्चननिमित्तम्। अहं च
यमुखसहितो भक्ष्यम् इदं रक्षंस् तिष्ठामि। इति श्रुत्वा सिंहो
ग्रां जगाम। गते च सिंहे चतुरकः क्रव्यमुखम् आह। भोः
यमुख' क्षुधालुर् भवान्। तद् यावद् असौ स्वामी नाग-
ति' तावत् त्वम् अस्योष्ट्रस्य मांसं भक्षय। अहं स्वामिनो ऽग्रे
निर्दोषं करिष्यामि। तस्य वचनेन किंचिन् मांसं यावद्
स्वादयति' तावच् चतुरकेणाभिहितम्। भोः क्रव्यमुख' दूरम्
पसर। आगच्छति स्वामी। तथानुष्ठिते सिंहः समागत्योष्ट्रं
क्तीकृतहृदयं दृष्ट्वा सकोपम् इदम् आह। भोः' केनायम् उष्ट्र
च्छिष्टतां नीतः' येन तम् अपि व्यापादयामि। इत्य् अभिहिते
व्यमुखश् चतुरकमुखम् अवलोकयति' किल वद किंचित्'
नायम् उपशाम्यति' इति। अथ चतुरको विहस्याब्रवीत्। भोः'

क्रमेलकहृदयम् आत्मना भक्षयित्वा कथं मे मुखम् अवलोकयसि। तच् छ्रुत्वा क्रव्यमुखः प्राणभयात् प्रपलाय्य देशान्तरं गतः। सिंहश् च किंचित् तम् अनुसृत्य ' नखायुधो ऽवध्यो मे ' इति विचिन्त्य निवृत्तः।

एतस्मिन् अन्तरे दैवयोगात् तेनैव मार्गेण महान् *दासेरकसार्थो भाराक्रान्तो ग्रीवावबद्धबृहद्घण्टा*रणत्कारकारी समागच्छति। तस्य च महान्तं घण्टानादं दूराद् एव श्रुत्वा सिंहो जम्बुकम् उवाच। भद्र ' ज्ञायताम् ' क एष रौद्रो नादः। तच् छ्रुत्वा चतुरकः किंचिद् वनान्तरं गत्वा सत्वरम् अभ्येत्य सावेगम् उवाच। स्वामिन् ' गम्यतां गम्यताम् ' यदि शक्नोषि गन्तुम्। सो ऽब्रवीत्। भद्र ' किम् एवं *मां व्याकुलयसि। तत् कथय ' किम् एतत्। चतुरक आह। स्वामिन् ' एष धर्मराजस् तवोपरि कुपितो ऽभ्येति। यत् किलानेन मदीयदासेरको मां प्रतिभुवं दत्त्वाकाल एव व्यापादितः ' तत् सहस्रगुणम् आत्मीयम् उष्ट्रम् अस्माद् अहं *ग्रहीष्यामि ' इति निश्चित्य बृहदुष्ट्रमानम् आदाय तदीयपितृपितामहान् अपि गवेषयितुकाम इत एव संनिहितो ऽभ्युपैति। तच् छ्रुत्वा सिंहो ऽपि मृतम् उष्ट्रं परित्यज्य स्वप्राणभयात् प्रनष्टः। चतुरको ऽपि शनैः शनैस् तस्योष्ट्रस्य मांसं चिरं भक्षयाम् आस ॥

अतो ऽहं ब्रवीमि। परस्य पीडनं कुर्वन्। इति। अथ गते दमनके संजीवकश् चिन्तयाम् आस। किं करोमि। यदि तावद् अन्यत्र गच्छामि। तद् अन्येनापि क्रूरसत्त्वेन मे वधः क्रियते। यतो निर्जनं वनम् एतत्। रुष्टेषु च स्वामिषु गन्तुम् अपि न शक्यते। उक्तं हि।

कृत्वापराधं नष्टः सन्। दूरस्थो ऽस्मीति नाश्वसेत्।
दीर्घौ बुद्धिमतां बाहू। कंपतो हि प्रमादिनम्॥ ३५५॥

तद् वरं सिंहम् एवानुसरामि। कदाचित्। शरणागतो ऽयम्। इति मत्वा मां त्यजेद् अपि।

एवं स्वचेतसि निश्चित्योद्विग्नमना मन्दं मन्दं गत्वा दमनकाख्यातानुकाररूपं सिंहं दृष्ट्वा स्थानान्तर उपविश्याचिन्तयत् । अहो । विषमता प्रभूणाम् । उक्तं च ।

अन्तर्गूढभुजंगमं गृहम् इव व्यालाकुलं वा वनं
ग्राहाकीर्णम् इवाभिरामकमलच्छायासनाथं सरः ।
नित्यं दुष्टजनैर् असत्यवचनैः क्षुद्रैर् अनार्यीकृतं
दुःखेनेह विगाह्यते सुचकितै राज्ञां मनः सेवकैः ॥ ३५६ ॥ śārdū

पिङ्गलको ऽपि दमनकजल्पिताकारं तम् अवलोक्य सहसा तस्योपरि पपात । अथ संजीवकस् तन्नखकुलिशाग्र*विकर्तितशरीरः स्वशृङ्गाग्राभ्यां सिंहस्योदरप्रदेशम् उल्लिख्य कथम् अपि तस्माद् अपेत्य पुनर् अपि शृङ्गाभ्यां हन्तुम् इच्छन् योद्धुम् अवस्थितः ।

अथोभाव् अपि तौ पुष्पितपलाशप्रतिमौ परस्परं वधकाङ्क्षिणौ दृष्ट्वा करटकः साक्षेपं दमनकम् उवाच । भो मूढमते । यद् अनयोर् विरोधस् त्वया कृतः । तन् न साधु विहितम् । यतः सकलम् अपि वनम् इदम् आकुलीकृतं भवता । ततस् त्वं न नीतितत्त्वं वेत्सि । उक्तं च ।

कार्याण्य् उत्तमदण्डसाहसफलान्य् आयाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः ।
निःसाराल्पफलानि ये त्व् अविधिना वाञ्छन्ति दण्डोद्यमैस्
तेषां दुर्नयचेष्टितैर् नरपतेर् आरोप्यते श्रीस् तुलाम् ॥ ३५७ ॥ śārdū

तत् । मूर्ख ।

साम्नैवादौ प्रयोक्तव्यं । कार्याकार्यविचक्षणैः ।
सामसिद्धा हि विधयो । न प्रयान्ति पराभवम् ॥ ३५८ ॥

तत् । मूढ । मन्त्रिपदम् अभिलषसि । न च सामनामापि जानासि । तद् वृथा मनोरथो ऽयं ते । यद् दण्डविधेर् इति । उक्तं च ।

सामादिर् दण्डपर्यन्तो । नयः प्रोक्तः स्वयंभुवा ।
तेषां दण्डस् तु पापीयांस् । तस्माद् दण्डं विवर्जयेत् ॥ ३५९ ॥
नोन्मयूखेन रत्नेन । नातपेन न वह्निना ।
साम्नैव प्रलयं याति । विद्वेषिप्रभवं तमः ॥ ३६० ॥

किं च । साम्नैव यत्र सिद्धिः स्यात् । तत्र दण्डं न योजयेत् ।
यदि शर्करया पित्तं । शाम्येत् तत् किं पटोलया ॥ ३६१ ॥

अन्यच् च । ये सामदानभेदास् । ते किल बुद्धेर् अपावृतं द्वारम् ।
यस् तु चतुर्थोपायस् । तम् आहुर् आर्याः पुरुषकारम् ॥ ३६२ ॥ ār
बुद्धिर् या सत्त्वरहिता । स्त्रीत्वं तत् केवलं मतम् ।
शौर्यं चानयसंपन्नं । तत् पशुत्वं न संशयः ॥ ३६३ ॥

द्विपाशीविषसिंहाग्निजलानिलविवस्वताम् ।
बलं बलवतां दृष्टम् । उपायाक्रान्तिनिष्फलम् ॥ ३६४ ॥

तद् यदि । मन्त्रिपुत्रो ऽहम् । इत्य् अवलेपाद् अतिभूमिं गतो ऽसि । तद् अप्य् आत्मविनाशस् तव । उक्तं च ।

यां लब्ध्वेन्द्रियनिग्रहो न महता भावेन संपद्यते
या बुद्धेर् न विधेयतां प्रकुरुते धर्मे न या वर्तते ।
लोके केवलवाक्यमात्ररचना यां प्राप्य संजायते
या नैवोपशमाय नापि यशसे विद्वत्तया किं तया ॥ ३६५ ॥ śardū

तद् अत्र शास्त्रेष्व् अभिहितः पञ्चाङ्गो मन्त्रः । तद् यथा । कर्मणाम् आरम्भोपायः । पुरुषद्रव्यसंपत् । देशकालविभागः । विनिपातप्रतीकारः । कार्यसिद्धिश् च । इति । सो ऽयम् अधुना स्वामिनो महात्ययो वर्तते । तद् अत्र यदि तव शक्तिर् अस्ति । तद् विनिपातप्रतीकारश् चिन्त्यताम् । *भिन्नसंधाने हि मन्त्रिणां बुद्धिपरीक्षा । तत् । मूर्ख । तत् कर्तुम् असमर्थस् त्वम् । यतो विपरीतबुद्धिर् असि । उक्तं च ।

नाशयितुम् एव नीचः । परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुम् अस्ति शक्तिर् । नाखोर् उद्धर्तुम् उत्रिपिटिम् ॥ ३६६ ॥ ār

अथवा न तवायं दोषः । अपि तु स्वामिन एव । यस् तव मन्दमतेर् वाक्यं श्रद्दधाति । उक्तं च ।

मदादिचालनं शास्त्रं । मन्दानां कुरुते मदम् ।
चक्षुःप्रबोधनं तेज । उलूकानाम् इवान्ध्यकृत् ॥ ३६७ ॥
ज्ञानं मददर्पहरं । माद्यति यस् तेन तस्य को वैद्यः ।
अमृतं यस्य विषायति । तस्य चिकित्सा कथं क्रियते ॥ ३६८ ॥ ār

तं च शङ्कावस्थं स्वामिनं दृष्ट्वा करटकः परं विषादम् अगमत् । कष्टं कष्टम् इदम् आपतितं स्वामिनो ऽनयोपदेशात् । अथवा साध्व् इदम् उच्यते ।

नराधिपा *नीचमतानुवर्तिनो
बुधोपदिष्टेन पथा न यान्ति ये ।
विशन्ति ते दुर्गममार्गनिर्गमं
सपत्नसंबाधम् अनर्थपञ्जरम् ॥ ३६९ ॥ upa

तत् । मूर्ख । सर्वो ऽपि जनो गुणवत्परिजनस्य स्वामिनः सेवापरिग्रहं करोति । तत् कुतो युष्मद्विधेन पशुनेव केवलभेदविदासन्मन्त्रिणा स्वामिनो गुणवत्सहायसंपत् । उक्तं च ।

गुणवान् अप्य् असन्मन्त्री । नृपतिर् नाधिगम्यते ।
प्रसन्नस्वादुसलिलो । दुष्टग्राहो यथा ह्रदः ॥ ३७० ॥

त्वं तु प्रायश आत्मभूत्यर्थं विविक्तम् एव राजानम् इच्छसि । तत् । मूर्ख । किं न वेत्सि ।

आकीर्णः शोभते राजा । न विविक्तः कदाचन ।
ये तं विविक्तम् इच्छन्ति । ते तस्य परिपन्थिनः ॥ ३७१ ॥

किं च । परुषे हितम् अन्वेष्यं । तच् च नास्ति विषं हि तत् ।
मधुरे शाठ्यम् अन्वेष्यं । तच् च नास्त्य् अमृतं हि तत् ॥ ३७२॥

यद् अपि च परसुखविभूत्योर् दर्शनाद् दुःखितो ऽसि । तद् अप्य् असाधु । लब्धस्वभावेषु मित्रेष्व् एवं न वर्तितुम् उचितम् । यतः ।

शाठ्येन मित्रं कपटेन धर्मं
परोपतापेन समृद्धिभावम् ।
सुखेन विद्यां परुषेण नारीं
वाञ्छन्ति ये व्यक्तम् अपण्डितास् ते ॥ ३७३॥ upa

तथा । सैव भृत्यगता संपद् । विभूतिः सैव भूपतेः ।
रत्नोद्भासिभिर् उद्भूतैः । कस् तरङ्गैर् *विनोदधिः ॥ ३७४॥

तथा च । यः स्वामिलब्धप्रसादो भवति । सुतरां स विनीतः स्यात् । उक्तं च ।

यथा यथा प्रसादेन । भर्ता भृत्ये प्रवर्तते ।
तथा तथा सशङ्कस्य । गतिर् निम्नास्य शोभते ॥ ३७५॥

त्वं तु लघुप्रकृतिर् असि । उक्तं च ।

महान् प्रणुन्नो न जहाति धीरतां
न कूलपातैः कलुषो महोदधिः ।
लघोर् विकारस् तनुनापि हेतुना
चलन्ति दर्भाः शिथिले ऽपि मारुते ॥ ३७६॥ vaṃśa

अथवा स्वामिन एवायं दोषः । यद् युष्मद्विधे मन्त्रिमात्रव्यपदेशजीविनि षाड्गुण्योपायात्यन्तबाह्ये त्रिवर्गप्राप्त्यर्थम् असमीक्ष्य मन्त्रयते । साधु चेदम् उच्यते ।

चित्रचाटुकरैर् भृत्यैर् । अनायासितकार्मुकैः ।
ये रमन्ते नृपास् तेषां । रमन्ते रिपवः श्रियम् ॥ ३७७॥

सुष्ठु खल्व् इदम् आख्यानकम् आख्यायते । उक्तं च ।

नृपः श्रवणको दग्धः । पार्थिवो ऽभिमुखीकृतः ।
आत्मा चैवोन्नतिं नीतो । बलभद्रेण मन्त्रिणा ॥ ३७८॥

दमनक आह । कथम् एतत् । करटकः कथयति ।

## ॥ कथा २२ ॥

अस्ति कोशलेषु जनपदेष्व् अयोध्या नाम नगरी । तस्यां चानेकप्रणतसामन्तमुकुटालीढपादपीठः सुरथो नाम राजा । तस्य कदाचिद् वनपालकेनागत्य निवेदितम् । स्वामिन् । सर्वे वि-

प्रतिपन्ना आटविका राजानः । तेषां च मध्ये विन्ध्यको नामाटविकः । तस्य विनयोपदेशे देव एव प्रमाणम् । एवं च श्रुत्वा राजा बलभद्रसचिवम् आहूय तेषां निग्रहार्थं प्रेषितवान् । अथ गतवति तस्मिन् नग्नश्रवणकस् तां पुरीम् उष्णकालावसाने प्रविष्टः । कतिपयैश् च दिवसैः प्रश्नव्याकरणहोराशकुनज्ञानलग्नद्रेक्काणनवांशद्वादशांशत्रिंशांशच्छायानष्टमुष्टिधातुमूलजीवचिन्ताचुलुकमाषकादिज्योतिष्कप्रकारैर् असौ सर्वम् एव जनपदं क्रीतम् इवात्मीकृतवान् । अन्यदा जनपरंपरया तत् स्वरूपं श्रुत्वा राज्ञा कौतुकेन स्वकीयावासम् आनीतः कृतासनपरिग्रहश् च पृष्टः । सत्यम्' किलाचार्याः परचित्तवेत्तारः । ततः सो ऽब्रवीत् । फलैर् ज्ञास्यति भवान् । एवम् उचितकथाभिः परं कौतुकम् उपनीतो ऽसौ राजा । एकदा च समुचितागमनकालम् अतिक्रम्यापराह्णसमये राजभुवनम् अनुप्रविश्याह । भो राजन्' प्रियं प्रियम् आवेदयामि । अहम् अद्य प्रभाते मठिकाभ्यन्तर एव कायम् इमं निक्षिप्यान्येन सुरलोकयोग्येन शरीरेण' सर्वामरजनो माम् अनुस्मरतीति' अतो ऽहं स्वर्गं गतः पुनर् आगतश् च । तत्र सुरैर् उक्तम्' यथा । अस्मद्वचनाद् असौ पार्थिवः कुशलं प्रष्टव्यः । इति श्रुत्वा परमकौतुकजनितविस्मयो राजाब्रवीत् । कथम्' आचार्य । स्वर्गं गच्छति भवान् । असाव् आह । महाराज' सर्वदिनेषु स्वर्गं गच्छामि । इति श्रद्दधानः स राजा जडमतिः सर्वाण्य् अपि राज्यप्रयोजनान्य् अन्तःपुरकृत्यानि च शिथिलीकृत्य तत्परः संवृत्तः । अत्रान्तरे हतकण्टकम् अटवीराज्यं कृत्वा राजपादान्तिकम् अनुप्रविष्टो बलभद्रः । पश्यति च स्वामिनम् एकान्तोज्झितमन्त्रिमण्डलं तेनैव नग्नश्रवणेन सहैकान्तम्

उपगतं विकसितवदनकमलं किम् अप्य् आश्चर्यम् इव मन्वयमाणम् । विदिततत्त्वश् च प्रणम्योक्तवान् । जयतु देवो देवानां प्रियः, इति । ततो राज्ञा मन्त्री कुशलं पृष्ट उक्तश् च । जानाति भवान् अमुम् आचार्यम् । असाव् आह । बहूनाम् आचार्याणां प्रजापतिभूतः कथं न ज्ञायते । श्रूयते चास्याचार्यस्य सुरलोके गमनम् । तत् किं सत्यम् । राजाह । सर्वम् अवितथम्, यद् भवता श्रुतम्, इति । ततः क्षपणको ऽब्रवीत् । यद्य् अस्य मन्त्रिणः कौतुकम्, ततः पश्यत्व् एषः । एवम् उक्त्वा मठिकाभ्यन्तरम् अनुप्रविश्य सार्गलं द्वारं कृत्वा स्थितः । ततो मुहूर्तमात्रापगमे मन्त्रिणोक्तम् । देव, कस्यां वेलायाम् अयम् आगमिष्यति । पार्थिवः प्राह । किम् इति त्वरसे । यतो ऽसौ स्वकलेवरं मठिकाभ्यन्तरस्थं कृत्वान्येन दिव्यशरीरेणागच्छति । असाव् आह । यदि सत्यम् एवेदम्, तदानीयताम् अग्निकाष्ठनिचयः, येनेमां मठिकाम् आदीपयामि । भूपतिर् आह । किंनिमित्तम्, इति । सचिवेनोच्यते । देव, अस्मिन् कलेवरे दग्धे तेनैव सुरलोकयायिना शरीरेण यथासौ युष्मत्पार्श्ववर्ती भवति । श्रूयते चैतत् ।

॥ कथा २३ ॥

अस्ति राजगृहे नगरे देवशर्मा नाम ब्राह्मणः । तस्य ब्राह्मणी निरपत्यतया प्रातिवेश्मकार्भकान् दृष्ट्वा भृशं रुरोद । अथैकस्मिन् दिने ब्राह्मणेनाभिहितम् । भद्रे, अलं संतापेन । पश्य, अम्ब, अहं पुत्रकामाम् इष्टिं कुर्वाणः केनाप्य् अदृष्टेन स्पष्टाक्षरम् अभिहितः, यथा । ब्राह्मण, सर्वमनुष्योत्तररूपसत्त्वसौभाग्यान्वितः पुत्रस् ते भविष्यति । इति श्रुत्वा परमप्रमोदापूर्यमाणहृदया ब्राह्मणी,

अवितथास् तस्य व्याहारा भवन्तु ' इति जगाद । क्रमेण संजा-
तगर्भा प्रसवकाले सर्पं सुषुवे । तं दृष्ट्वा ' त्यज्यताम् अयम् ' इत्य्
अशेषपरिजनवचनान्य् अनादृत्य प्रगृह्य स्नपयित्वा पुत्रवात्सल्याद्
विपुलशुचिभाण्डे ऽवस्थाप्य क्षीरनवनीतादिभिर् उपबृंहितशरीरः
कतिपयैर् एव दिवसैर् असौ प्रौढीकृतः । एकदा तु ब्राह्मणी
बाष्पावरुद्धवदना प्रातिवेश्मकपुत्रविवाहोत्सवम् अवलोक्य
भर्तारम् अब्रवीत् । सर्वथैव ममोपरि तवावज्ञा ' येन मम
दारकस्य विवाहोत्सवाय न यतसे । तच् छ्रुत्वा ब्राह्मणः प्राह ।
आर्ये ' यदि परं पातालम् अनुप्रविश्य वासुकिम् अभ्यर्थये ।
मूढे ' को ऽन्यो ऽस्य सर्पस्य स्वदारिकां प्रयच्छति ' इति । एवम्
उक्ते सविशेषं दीनवदनां ब्राह्मणीम् अवलोक्य तदुपरोधाद् बहु
पाथेयं गृहीत्वा प्रियकलत्रतया देशान्तरं पर्यटन् कतिपयैर् मासैर्
दूरदेशावस्थितं कुक्कुटनगरनामाधिष्ठानं प्राप्तः । तत्र च परस्प-
रपरिज्ञातसद्भावसुखसंश्रयणीयसंबन्धिकगृहे स्नानभोजनादिभिर्
उपचर्यमाणस् तां निशाम् अतिवाह्य प्रभातसमये तं ब्राह्मणम्
अभिवाद्य यावत् प्रस्थितः ' तावत् तेनाभिहितः । किमर्थं भवान्
इहागतः ' कुत्र वा यास्यति । इत्य् उक्ते ऽसाव् आह । पुत्रयोग्यां
दारिकाम् अन्वेष्टुम् अहम् आगतः । इति श्रुत्वा ब्राह्मणो ऽब्रवीत् ।
यद्य् एवम् ' ततो ममेयम् अतिसुरूपा दारिका । भवांश् च
ममापि प्रभविष्णुः । तद् गृह्यताम् इयं स्वपुत्राय । इत्य् अभिहिते
ब्राह्मणस् तद्दारिकां सपरिजनां गृहीत्वा स्वाधिष्ठानं प्रत्यागतः ।
अथ तस्याः परमलावण्याद्भुतगुणोपेताम् असाधारणां रूपसं-
पदम् अभिवीक्ष्य प्रीतिविस्फारितनयना जनपदास् तत्परिजनम्
अब्रुवन् । कथं सद्भिर् ईदृशं कन्यारत्नं सर्पस्योपपादितम् । इति

श्रुत्वा *सर्वैर् एवोद्विग्नहृदयैस् तस्या महत्तमैर् अभिहितम्। अपह्रियताम् इयम् अस्माद् ग्रहोपष्टम्भितबटुकात्। अथ तया कन्ययोक्तम्। अलम् अनया विडम्बनया। पश्यत ' यतः।

सकृज् जल्पन्ति राजानः ' सकृज् जल्पन्ति साधवः।
सकृत् कन्याः प्रदीयन्ते ' त्रीण्य् एतानि सकृत् सकृत् ॥३७९॥

किं च। कृतान्तविहितं कर्म ' यद् भवेत् पूर्वनिर्मितम्।
न शक्यम् अन्यथा कर्तुं ' पुष्पकस्य सुरैर् यथा ॥३८०॥

अथ ते सर्व एव पृच्छन्ति स्म। को ऽयं पुष्पको नाम। कन्या कथयति।

॥ कथा २४ ॥

आसीद् इन्द्रस्यानेकशास्त्रागमाप्रतिहतबुद्धिः परमरूपलावण्यगुणोपेतः शुकः पुष्पको नाम। अथ कदाचिद् असौ महेन्द्रकरतलस्पर्शसुखाप्यायितशरीरो विविधसूक्तानि पठन् स्वसेवासमये समायातं यमं दृष्ट्वापसृतः। सर्वैर् एवामरगणैः पृष्टः। किं भवान् अमुं दृष्ट्वापक्रान्तः ' इति। शुक आह। सर्वप्राण्यपकर्ता किलायम्। कथम् अस्मान् नापक्रम्यते। इति श्रुत्वा तैः सर्वैस् तद्भयोपशमायाभिहितो यमः ' यत् किलास्मद्वचनाद् अयं भवता शुको न मार्यः। यम आह। नाहं जानामि। अत्र कालः प्रभविष्णुः ' इति। एवं च तं गृहीत्वा कालसकाशं गत्वा पूर्वोक्तम् एवाब्रुवन्। अथ कालो ऽप्य् आह। मृत्युर् एतज् जानाति। स एव भण्यताम्। अथैवम् अनुष्ठिते मृत्युदर्शनाद् एव शुकः पञ्चत्वम् उपगतः। तच् च दृष्ट्वा सर्वैर् एवाकुलीभूतमनोभिर् यम उक्तः। को ऽसौ वृत्तान्तः। ततो यमो ऽब्रवीत्। मृत्युदर्शनाद् एव मरणं निबद्धम् आसीद् अस्य। इति श्रुत्वा स्वस्थानं जग्मुः॥

अतो ऽहं ब्रवीमि । कृतान्तविहितं कर्म ' इति । अन्यच् च । कन्यानृतवचनीयता मे पितुर् मा भूत् ' इति । एवम् अभिहिते परिवारानुमता सा सर्पेण परिणीता । अथासौ भक्तिपूर्वं दुग्धपानादिक्रियाभिः सर्पम् उपचरितुम् आरब्धा । अन्यदा रात्राव् अयं सर्पो ऽपवरकस्थापितविपुलपेटाभ्यन्तरान् निर्गत्य तस्याः शयनम् आरूढः । ततस् तयोक्तः । को ऽयं पुरुषाकृतिः । परपुरुष इति मत्वोत्थाय प्रवेपितसर्वाङ्गी द्वारम् उद्घाट्य प्रस्थानाभिमुखी तेनोक्ता । भद्रे ' स्थीयताम् । अहं तव भर्ता । अथ तत्प्रत्ययार्थं पेटाभ्यन्तरस्थं शरीरम् अनुप्रविश्य पुनस् तस्मान् निर्गत्यागतः । सा च दूरोच्छ्रितमुकुटकुण्डलकटककेयूराङ्गदविभूषितस्यास्य पादयोर् अपतत् । पश्चात् तौ सुरतसुखम् *अन्वभूताम् । तच् च दृष्ट्वा पूर्वोत्थितस् तस्य पिता ब्राह्मणः पेटाभ्यन्तरस्थं तत् सर्पकोशं गृहीत्वा ' मायम् अत्र पुनः प्रवेक्ष्यति ' इत्य् असौ वह्निना संस्कारितवान् । प्रभाते च परमहर्षात् पत्न्या सह स्नेहवार्त्तापरायणं प्रधानपुत्रायमाणं स्वपुत्रं सर्वजनस्य दर्शितवान् ॥

एतन् निदर्शनं राज्ञे निवेद्य नग्नश्रवणकगर्भां मठिकां बलभद्रः प्रज्वालितवान् ॥

अतो ऽहं ब्रवीमि । नग्नः श्रवणको *दग्धः । इति । तत् । मूर्ख । ईदृशा मन्त्रिणो भवन्ति । न भवद्विधाः केवलमन्त्रिमात्रव्यपदेशोपजीविनो नीतिमार्गानभिज्ञाः । सर्वथा प्रकटीकृतं त्वयान्वयागतम् अनेन दुश्चरितेन दुर्मन्त्रित्वम् । नूनं तव पिताप्य् एवंलक्षण आसीत् । यतः ।

यो ऽवश्यं पितुर् आचारः । पुत्रस् तम् अनुवर्तते ।
न हि *केतकिवृक्षस्य । भवत्य् आमलकीफलम् ॥ ३८१ ॥

न च स्वभावगम्भीराणां विदुषां बहुनापि कालेनागम्यं रन्ध्रान्तरं लभ्यते । यदि न स्वयम् एव गाम्भीर्यम् अपहायात्ममतिच्छिद्रं दर्शयेयुः । यतः ।

यत्नाद् अपि कः पश्येच् । छिखिनाम् आहारनिर्गमस्थानम् ।
यदि जलदध्वनिमुदितास् । त एव मूढा न नृत्येयुः ॥ ३८२ ॥

तत् सर्वथा किं तवापसदस्योपदेशेन । उक्तं च ।

नानाम्यं नाम्यते दारु । न शस्त्रं क्रमते ऽश्मनि ।
सूचीमुख्या इवाशिष्ये । नोपदेशः सुखावहः ॥ ३८३ ॥

दमनक आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा २५ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे वानरयूथम् । तच् च हेमन्तकाले ऽतिविह्वलं निशामुखे खद्योतम् अपश्यत् । तच् च तं दृष्ट्वा ' अग्निर् अयम् ' इति मत्वा यत्नाद् आहृत्य शुष्कतृणपर्णैर् अवच्छाद्य प्रसारितभुजकक्षाकुक्षिवक्षःप्रदेशान् कण्डूयमानं तापमनोरथसुखं किलानुभवति स्म । अथ तत्रैकः शाखामृगो विशेषतः शीतार्तस् तद्गतमना मुहुर् मुहुस् तम् एवोपाधमत् । अथ सूचीमुखी नाम पक्षिणी वृक्षाद् अवतीर्य दैवाहतात्मोपघाताय तम् उवाच । भद्र ' मा क्लिश्यताम् । नायं वह्निः । खद्योतो ऽयम् ' इति । अथासौ तद्वचनम् अनादृत्य पुनर् धमति । ततस् तयासकृन् निवार्यमाणो ऽपि नोपशाम्यति । अथ किं बहुना । तावत् तया कर्णाभ्यर्णम् आगत्य प्रबलम् उद्वेजितः ' यावत् तेन सा गृहीत्वा शिलायाम् आस्फालिता पिष्टवक्त्रनेत्रशिरोग्रीवा पञ्चत्वम् आप ॥

अतो ऽहं ब्रवीमि । नानाम्यं नाम्यते दारु । इति । अथवा ।

किं करिष्यति पाण्डित्यम् । अपात्रे प्रतिपादितम् ।
सपिधानघटान्तःस्थः । प्रदीप इव वेश्मनि ॥ ३८४ ॥

तन् नूनम् अपजातस् त्वम् । उक्तं च ।

जातः पुत्रो ऽनुजातश् च । अभिजातस् तथैव च ।
अपजातश् च लोके ऽस्मिन् । मन्तव्याः शास्त्रदर्शिभिः ॥ ३८५ ॥
मातृतुल्यगुणो जातस् । त्व् अनुजातः पितुः समः ।
अभिजातो ऽधिकस् तस्माद् । अपजातो ऽधमाधमः ॥ ३८६ ॥

चेदम् उच्यते ।

प्रज्ञयातिविसारिण्या । यो धनेन बलेन वा ।
धुरं वहति गोत्रस्य । जननी तेन पुत्रिणी ॥ ३८७ ॥

च । आपातमात्रसौन्दर्यं । कुत्र नाम न विद्यते ।
अत्यन्तप्रतिपत्त्या तु । दुर्लभो *ऽलंकृतो जनः ॥ ३८८ ॥

वा साधु चेदम् उच्यते ।

धर्मबुद्धिर् अबुद्धिश् च । द्वाव् एतौ विदितौ मम ।
तनयेनातिपाण्डित्यात् । पिता *धूमेन मारितः ॥ ३८९ ॥

नक आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा २६ ॥

स्ति । कस्मिंश्चिन् नगरे वणिक्पुत्रौ धर्मबुद्धिदुष्टबुद्धिनामानौ
हृदाव् आस्ताम् । तौ चार्थोपार्जननिमित्तं विप्रकृष्टं देशान्तरं
तौ । अथ यो धर्मबुद्धिनामा । तेन स्वभाग्योदयवशात् कस्यापि
ाधोः पूर्वस्थापितं कलशगतं दीनारसहस्रं प्राप्तम् । स तु दुष्टबु-
द्धिना सह संप्रधार्य । कृतार्थाव् आवाम् । स्वदेशं गच्छावः । इति
निश्चित्य द्वाव् अपि प्रत्यागतौ । स्वाधिष्ठानसमीपे च धर्मबुद्धि-
ाभिहितम् । भद्र । अर्धविभागस् त्वय्य् आगच्छति । तद् गृहाण ।
नाधुना स्वगृहं प्राप्य मित्रामित्रसमक्षम् उज्ज्वलं व्यवहरि-
यामः । अथ दुष्टबुद्धिः कुटिलहृदयतया स्वार्थपुष्ट्यै तम् आह ।
द्र । यावद् आवयोर् अयम् अर्थः सामान्यः । तावद् अव्यव-
च्छिन्नः स्नेहसद्भावः । तत एकैकं शतं गृहीत्वा शेषं भूमौ निक्षिप्य
स्वगृहं प्रविशावः । यतो ऽस्यार्थस्य ह्रासवृद्धिभ्यां पुण्यपरीक्षा
कृता भवति । ततो धर्मबुद्धिना स्वभावार्यतया तदन्तर्गतदुष्टाभि-
प्रायम् अविज्ञाय तथेति प्रतिपन्ने तौ द्वाव् अपि किंचिद् आदाय
शेषं भूमौ सुगुप्तं कृत्वा नगरान्तः प्रविष्टौ । अथ दुष्टबुद्धिर् असद्य-

यव्यसनसेवितया सच्छिद्रभाग्यतया च क्षीणप्रत्यंशः पुनर् अपि धर्मबुद्धिना सहापरं शतं शतं विभक्तवान्। अथ तस्य तद् अपि वर्षस्यान्तरे तथैव परिक्षीणम्। एवं च दुष्टबुद्धिश् चिन्तयाम् आस। यदि पुनस् तेन सह शतं विभजामि। ततः शेषैश् चतुर्भिः शतैर् अपहृतैर् अपि किम् अल्पैः। तस्मात् षट् शतान्य् एवापहरामि। इति विचिन्त्यैकाकीभूय ताम् अर्थमात्राम् अपनीय तं भूप्रदेशं समीकृतवान्। अतिक्रान्ते च मासमात्रे स्वयं गत्वा धर्मबुद्धिम् अभिहितवान्। भद्र। शेषद्रव्यं समविभागं कुर्वः। इत्य् उक्त्वा धर्मबुद्धिना सह तम् उद्देशं गत्वा खातकर्म कर्तुम् आरब्धौ। खन्यमाने च भूभागे यदासाव् अर्थो न दृश्यते। तदा धृष्टतया दुष्टबुद्धिः प्रथमत एव तेनैव रिक्तभाण्डेनात्मनः शिरस् ताडयन्न् अब्रवीत्। क्व तद् ब्रह्महृदयम्। नूनम्। धर्मबुद्धे। त्वयैवापहृतम्। तद् अर्पय तस्यार्धम्। नो चेत्। अहं राजकुले निवेदयिष्यामि। स आह। भो दुरात्मन्। मैवं वद। धर्मबुद्धिः खल्व् अहम्। नैतच् चौर्यकर्माचरामि। उक्तं च।

मातृवत् परदाराणि। परद्रव्याणि लोष्टवत्।
आत्मवत् सर्वभूतानि। वीक्षन्ते धर्मबुद्धयः ॥३९०॥

ततस् तौ द्वाव् अपि विवदन्तौ धर्माधिकरणं गत्वा द्रव्यापहरणवृत्तान्तं कथयतः। तच् छ्रुत्वा धर्माधिकरणिकैस् तयोर् दिव्यम् आदिष्टम्। अथ पापबुद्धिः प्राह। अहो। न सम्यग् दृष्टो न्यायः। उक्तं च। यतः।

विवादे दृश्यते पत्त्रं। तदभावे तु साक्षिणः।
साक्ष्यभावात् ततो दिव्यं। प्रवदन्ति मनीषिणः ॥३९१॥

तद् अत्र विषये मम वनदेवता साक्षिभूता तिष्ठति। सापि भवताम्

आवयोः साधुम् असाधुं वा कथयिष्यति । अथ तैर् अभिहितम् । युक्तम् उक्तं भवता । उक्तं च , यतः ।

अन्त्यजो ऽपि यदा साक्षी , विवादे संप्रजायते ।
न तत्र युज्यते दिव्यं , किं पुनर् वनदेवताः ॥३९२॥

तद् अस्माकम् अप्य् अत्र विषये महत् कौतुकम् अस्ति । प्रत्यूषे युवाभ्याम् अप्य् अस्माभिः सह तत्र वनोद्देशे गन्तव्यम् । ततस् तैर् द्वाव् अपि प्रतिभुवं गृहीत्वा गृहं प्रति विसर्जितौ । अथ दुष्टबुद्धिना स्वगृहं गतेन पिता प्रार्थितः । तात , मत्पाणिगतास् ते दीनाराः , किं तु त्वद्वचनमात्रापेक्षिणस् तिष्ठन्ति । अतो ऽहम् अद्य रात्राव् अदृश्यम् एव पूर्वोत्खातनिधानसंनिधानप्रदेशस्थशमीतरुकोटरान्तरे त्वां स्थापयिष्यामि । प्रातस् त्वया धर्माधिकरणिकप्रत्यक्षं साक्षित्वं विधेयम् । ततः पित्राभिहितम् । पुत्र , विनष्टाव् आवाम् । यत्कारणम् , अनुपाय एषः । साधु चेदम् उच्यते ।

उपायं चिन्तयेद् विद्वान् , अपायम् अपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य , नकुलैर् भक्षिता बकाः ॥३९३॥

दुष्टबुद्धिर् अब्रवीत् । कथम् एतत् । पिता कथयति ।

॥ कथा २७ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे बककदम्बकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च बकबालकान्य् अजातपक्षाण्य् एव सदैव भक्षयन् कालं नयति । अथैको बकः सर्पभक्षितशिशुवैराग्यात् सरस्तीरम् आसाद्य बाष्पभरम् उत्सृजन् अधोमुखस् तिष्ठति । तं च तथाविधम् अवलोक्यैकः कुलीरकः प्रोवाच । माम , किम् एवम् अद्य रुद्यते । बक आह । भद्र , किं

करोमि । मन्दभाग्यो ऽहम् । मम बालकानि स्वजनापत्यानि च वटकोटरनिवासिना सर्पेण भक्षितानि । तद्दुःखदुःखितो ऽहं रोदनं करोमि । तत् कथय मे ' कश्चिद् उपायो ऽस्ति तद्विनाशे । तच् छ्रुत्वा कुलीरकश् चिन्तयाम् आस । अयं तावद् अस्मज्जातिसहजवैरी । तत् तथाविधं सत्यानृतम् उपदेशं प्रयच्छामि ' यथान्ये ऽपि बकाः क्षयं यान्ति । उक्तं च ।

नवनीतसमां वाणीं ' कृत्वा चित्तं सुनिर्दयम् ।
तथा प्रबोध्यते शत्रुः ' सान्वयो म्रियते यथा ॥३०४॥

आह च । माम ' यद्य् एवम् ' तन् मत्स्यमांस*खण्डानि नकुलबिलद्वारात् सर्पकोटरं यावत् प्रक्षिप ' येन तन्मार्गेण गत्वा स तं दुष्टसर्पं विनाशयति । तथानुष्ठिते नकुलेन मत्स्यमांस*खण्डानुसारिणा तं दुष्टसर्पं व्यापाद्य ते ऽपि च तद्वृक्षाश्रयाः सर्वे बकाः शनैः शनैर् भक्षिताः ॥

अतो ऽहं ब्रवीमि । उपायं चिन्तयेद् विद्वान् ' इति । अथ दुष्टबुद्धिना तत् पितृवचनम् अवगणयता तस्मिन् वृक्षविवरे रात्राव् अदृश्य एव पिता स्थापितः । अथ प्रातर् एव स्नात्वा पापबुद्धिर् धौतप्रावरणो धर्मबुद्धिपुरःसरो धर्माधिकरणिकैः सह तां शमीं समभ्येत्य तारस्वरेण प्रोवाच ।

आदित्यचन्द्राव् अनिलो ऽनलश् च
द्यौर् भूमिर् आपो हृदयं यमश् च ।
अहश् च रात्रिश् च उभे च संध्ये
धर्मो विजानाति नरस्य वृत्तम् ॥३०५॥

भगवति वनदेवते । आवयोर् मध्ये यश् चौरः ' तं कथय । अथ शमीकोटरस्थः पापबुद्धिपिता प्रोवाच । भोः ' धर्मबुद्धिनापहृतम्

एतद् द्रव्यम् । तच् छ्रुत्वा सर्वे ते राजपुरुषा विस्मयोत्फुल्लनयना यावद् वित्तहरणोचितं शास्त्रदृष्ट्या धर्मबुद्धेर् निग्रहं विचारयन्ति । तावद् धर्मबुद्धिना वह्निभोज्यद्रव्यैर् आवेष्ट्य तच् छमीकोटरं वह्निना संदीपितम् । अथ ज्वलति तस्मिन् अर्धदग्धशरीरः स्फुटितदृष्टिः करुणम् आक्रन्दन् पापबुद्धिपिता शमीकोटरान् निश्चक्राम । ततश् च तैः सर्वैः पृष्टः । भोः । किम् इदम् । इत्य् उक्ते स । पापबुद्धिविचेष्टितं सर्वम् इदम् । इति कथयाम् आस । अथ ते राजपुरुषास् तं दुष्टबुद्धिं तस्याम् एव शमीशाखायां प्रविलम्ब्य धर्मबुद्धिं प्रशस्य राजप्रसादादिना संतोषयाम् आसुः ॥

अतो ऽहं ब्रवीमि । धर्मबुद्धिर् अबुद्धिश् च । इति । आख्याते चाख्यानके पुनः करटको ऽब्रवीत् । धिग् मूर्ख । अतिशयपाण्डित्येन त्वया दग्धः स्ववंशः । साधु चेदम् उच्यते ।

लवणजलान्ता नद्यः । स्त्रीभेदान्तानि बन्धुहृदयानि ।
पिशुनजनान्तं गुह्यं । दुःपुत्रान्तानि च कुलानि ॥ ३९६ ॥ ar

अपि च । यस्य तावन् मनुष्यस्याप्य् एकस्मिन् मुखे जिह्वाद्वयं भवति । कस् तस्य विश्वासम् उपैति । उक्तं च ।

द्विजिह्वम् उद्वेगकरं । क्रूरम् अत्यन्तनिष्ठुरम् ।
खलस्याहेश् च वदनम् । अपकाराय केवलम् ॥ ३९७ ॥

तन् ममाप्य् अनेन तव चरितेन भयम् उत्पन्नम् । कस्मात् ।

मा गाः खलेषु विश्वासं । मर्मैते पूर्वसंस्तुताः ।
चिरकालोपचीर्णो ऽपि । दशत्य् एव भुजंगमः ॥ ३९८ ॥

अपि च । चन्दनाद् अपि संभूतो । दहत्य् एव हुताशनः ।
विशिष्टकुलजातो ऽपि । यः खलः खल एव सः ॥ ३९९ ॥

अथवा स्वभाव एष खलानाम् । उक्तं च ।

परदोषकथाविचक्षणः
स्वगुणख्यापननित्यतत्परः ।
स्वयम् एव हि दैवदण्डितः viyo
पिशुनो विश्वविनाशपण्डितः ॥ ४०० ॥

नूनं तस्यास्यपुटे । जिह्वा वज्रोपमा मनुष्यस्य । ar
यस्य परदोषकथने । सद्यो न विशीर्यते शतधा ॥ ४०१ ॥

मा भवतु तस्य पापं । परहितनिरतस्य पुरुषसिंहस्य ।
यस्य परदोषकथने । जिह्वा मौनव्रतं चरति ॥४०२॥ ār

तत् सर्वथा परीक्ष्य संगतं कार्यम् । उक्तं च ।

विद्वान् ऋजुर् अभिगम्यो । विदुषि शठे *चाप्रमादिना भाव्यम् ।
ऋजुमूर्खस् त्व् अनुकम्प्यो । मूर्खशठः सर्वथा त्याज्यः ॥४०३॥ ār

तन् न केवलं त्वयात्मीयवंशविनाशाय यतितम् । किं पुनर् अधुना स्वामिनो ऽपि । यस् त्वं स्वामिनम् अप्य् एनाम् अवस्थां प्रापयसि । तस्य तवान्यो जनो जीर्णतृणभूत एव । उक्तं च । तुलां लोहसहस्रस्य । यत्र खादन्ति मूषकाः ।
श्येनः कुञ्जरहृत् तत्र । किं चित्रं यदि पुत्रहृत् ॥४०४॥

दमनक आह । कथम् एतत् । करटकः कथयति ।

## ॥ कथा २८ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने नाडुको नाम वणिक्पुत्रः । स च विभवक्षयाद् देशान्तरगमनम् अचिन्तयत् । यतः ।

यत्र देशे ऽथवा स्थाने । भोगा भुक्ताः स्ववीर्यतः ।
तस्मिन् विभवहीनो यो । वसेत् स पुरुषाधमः ॥४०५॥

तथा च ।

यत्राहंकारयुक्तेन । चिरं विलसितं पुरा ।
दीनं चरति तत्रैव । यः परेषां स निन्दितः ॥४०६॥

तस्य च गृहे पूर्वपुरुषोपार्जिता लोहपलसहस्रघटिता तुलास्ति । तां च श्रेष्ठिलक्ष्मणस्य निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः । ततश् च सुचिरं यदृच्छया देशान्तरेषु भ्रमित्वा पुनस् तद् एव नगरं समागत्य तं लक्ष्मणश्रेष्ठिनं जगाद । भो लक्ष्मण । समर्पय मे निक्षेपतुलाम् । ततो लक्ष्मणः प्राह । भो नाडुक । त्वदीयतुला मूषकैर् भक्षिता । तच् छ्रुत्वा नाडुकः प्राह । लक्ष्मण । नास्ति ते दोषः । यदि सा मूषकैर् भक्षिता । *यत ईदृग् एवायं संसारः । न किंचिद् अत्र शाश्वतम् अस्ति । परम् अहं नद्यां स्नानार्थं

गमिष्यामि । ततस् त्वं धनदेवनामानम् आत्मीयपुत्रं स्नानोपकरणग्रहणाय मया सह संप्रेषय। सो ऽपि लक्ष्मणो निजचौर्यशङ्कितः पुत्रं धनदेवम् उवाच । वत्स ' पितृव्यो ऽयं ते नाडुकः स्नानार्थं नद्यां यास्यति । तद् गम्यताम् अनेन सह स्नानोपकरणम् आदाय ' इति । अहो ' साध्व् इदम् उच्यते ।

न भक्त्या कस्यचित् को ऽपि ' प्रियं प्रकुरुते नरः ।
मुक्त्वा भयं प्रलोभं वा ' कार्यकारणम् एव वा ॥४०७॥

तथा च ।

अत्यादरो भवेद् यत्र ' कार्यकारणवर्जितः ।
तत्र शङ्का प्रकर्तव्या ' परिणामे ऽभयावहा ॥४०८॥

अथासौ लक्ष्मणपुत्रः स्नानोपकरणम् आदाय प्रहृष्टमना नाडुकेन सह नद्यां गतः । अथ नाडुको नद्यां स्नात्वा तं लक्ष्मणपुत्रं धनदेवं गिरिगुहायां प्रक्षिप्य तद्द्वारे बृहच्छिलां दत्त्वा लक्ष्मणगृहम् आयातो लक्ष्मणेन पृष्टः । भो नाडुक । कथ्यताम् ' क्व मे पुत्रो धनदेवस् त्वया सह गतः स्थितवान् । नाडुक आह । भो लक्ष्मण ' नदीतटाच् छ्येनेनापहृतः । लक्ष्मण आह । भो नाडुक ' अतथ्यवादिन् । महाकायं धनदेवं कथम् इव श्येनो ऽपहरति । नाडुको ऽब्रवीत् । भो लक्ष्मण । मूषकाः पुनर् लोहमयीं तुलां भक्षयन्ति । तद् अर्पय मे तुलाम् ' यदि पुत्रेण प्रयोजनम् । एवं विवदन्तौ तौ द्वाव् अपि राजद्वारम् उपगतौ । ततो लक्ष्मणस् तारस्वरेण प्रोवाच । भोः ' अब्रह्मण्यम् अब्रह्मण्यं वर्तते । मम पुत्रो धनदेवनामानेन नाडुकेनापहृतः । अथ धर्माधिकारिणस् तं नाडुकम् ऊचुः । भोः ' समर्पय लक्ष्मणपुत्रम् । नाडुको जगाद । किं करोमि । पश्यतो मे नदीतटाच्

श्येनेन नीतः। ते प्रोचुः। भो नाडुक' न सत्यम् उक्तं त्वया। किं श्येनः पञ्चदशवार्षिकं पुत्रम् *अपहर्तुं शक्नोति। ततो नाडुको विहस्य प्रोवाच। भोः' श्रूयतां मद्वचनम्।

तुलां लोहसहस्रस्य' यत्र खादन्ति मूषकाः।
श्येनः कुञ्जरहृत् तत्र' किं चित्रं यदि पुत्रहृत् ॥४०९॥

ते प्रोचुः। कथम् एतत्। नाडुको ऽपि तेषां तुलावृत्तान्तम् अकथयत्। तं श्रुत्वा विहस्यैकस्य तुलाम्' अपरस्य पुत्रं समर्पयाम् आसुः॥

अतो ऽहं ब्रवीमि। तुलां लोहसहस्रस्य। इति। करटकः पुनर् अब्रवीत्। तत्' मूर्ख। पिङ्गलककृतं संजीवकप्रसादम् असहमानेन त्वयैतत् कृतम्। यद् वा साध्व् इदम् उच्यते।

प्रायेणात्र कुलान्वितं कुकुलजाः स्त्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजून् अनृजवस् तेजस्विनं कातराः।
*वैरूप्योपहताश् च कान्तवपुषं सौख्यस्थितं दुःस्थिता
नानाशास्त्रविशारदं च पुरुषं निन्दन्ति मूर्खाः सदा ॥४१०॥ śārdū

तथा। मूर्खाणां पण्डिता द्वेष्या। निर्धनानां महाधनाः।
व्रतिनः पापशीलानां। *दुश्चारिण्याः कुलस्त्रियः ॥४११॥

अथवा। सदृशं *चेष्टते स्वस्याः। प्रकृतेर् ज्ञानवान् अपि।
प्रकृतिं यान्ति भूतानि। निग्रहः किं करिष्यति ॥४१२॥

तस्यैव युक्तम् उपदेष्टुम्। यः सकृद् उक्तं गृह्णाति। त्वं तु पाषाण इव शून्यहृदयो निश्चेष्टः। किं तवोपदिष्टेन। किं च। मूर्ख। त्वया सह संवास एव न युज्यते। कदाचित् त्वत्संपर्काद् अस्माकम् अप्य् अनर्थः स्यात्। उक्तं च।

मूर्खेण सह वासो ऽपि। देशे ग्रामे पुरे गृहे।
अनर्थायैव संभाव्यो। व्यवहारैर् विनैव हि ॥४१३॥
वरं जलधिपातालज्वलनावटपातनम्।
न विवेकविहीनेन। मूर्खेण सह संगतम् ॥४१४॥
लभते पुरुषस् तांस् तान्। गुणदोषान् साध्वसाधुसंपर्कात्।
नानादेशविचारी। पवन इव शुभाशुभान् गन्धान् ॥४१५॥ ār

साधु चेदम् उच्यते।

माताप्य् एका पिताप्य् एको । मम तस्य च पक्षिणः ।
अहं मुनिभिर् आनीतः । स च नीतो गवाशनैः ॥ ४१६ ॥
गवाशनानां स वचः शृणोति
राजन्न् अहं चाविरतं मुनीनाम् ।
प्रत्यक्षम् एतद् भवतापि दृष्टं
संसर्गजा दोषगुणा भवन्ति ॥ ४१७ ॥ युग्मम् ॥ upa 6

सो ऽब्रवीत् । कथम् एतत् । करटकः कथयति ।

## ॥ कथा २९ ॥

कस्मिंश्चित् पर्वतैकदेशे शुकी प्रसूता । तस्या द्वौ शुकौ समुत्पन्नौ । अथाहारार्थं निर्गतायाः शुक्यास् तौ पुत्रौ व्याधेन गृहीतौ । तयोर् एकः कथम् अपि दैववशाद् अपेतः । द्वितीयं पञ्जरके संस्थाप्य पाठयितुम् आरब्धः । अपरश् च शुकः परिभ्रमतर्षिणा दृष्टः । ततस् तेन संगृह्य स्वम् आश्रमपदम् आनीय पोषितः । एवं च काले ऽतिवर्तमाने कश्चिद् राजा स्वसैन्याद् अश्वेनापहृतस् तं वनोद्देशम् आगतः ' यत्र ते व्याधा निवसन्ति । तत आगतं राजानम् अवलोक्य सहसैव पञ्जरस्थः शुकः कलकलशब्दम् अकरोत् । भो भो मदीयस्वामिनः ' एष को ऽपि हयारूढ आगच्छति । तद् एनं बन्ध बन्ध ' व्यापादयत व्यापादयत ' इति । अथ तद् राजा शुकवचनं श्रुत्वान्यतो द्रुततरं वाजिनं प्रेरितवान् । अथ यावद् राजान्यद् दूरवनान्तरं गच्छति ' तावत् पश्यति मुनीनाम् आश्रमम् । तत्रापि पञ्जरस्थः शुको ऽब्रवीत् । एह्य् एहि ' राजन् । विश्राम्यताम् । शीतलान्य् उदकानि स्वादूनि च फलानि भक्षय । भो भो ऋषयः । अस्यार्घ्यपाद्येन पूजा क्रियताम् अस्मिन् सुशीतले द्रुमतले । एवं श्रुत्वा राजातीवोत्फुल्लनयनो विस्मितमनाः ' किम् इदम ' इति चिन्तितवान् ।

शुकं चापृच्छत्। मयेतो ऽन्यो ऽपि वनोद्देशे त्वत्सदृशः शुको दृष्टः। स क्रूररूपः ' बन्ध बन्ध। घातयत घातयत ' इत्य् एवम् अवदत्। अथ राज्ञो वचनम् आकर्ण्य शुकेन यथावृत्तम् आत्मनो वृत्तं निवेदितम् ॥

अतो ऽहं ब्रवीमि। संसर्गजा दोषगुणा भवन्ति। अतः संसर्ग एव त्वया सह न श्रेयान्। उक्तं च। यतः।

पण्डितो ऽपि वरं शत्रुर् ' न तु मित्रम् अपण्डितम्।
स्ववध्यार्थे मृतश् चौरो ' वानरेण हतो नृपः ॥४१८॥

दमनक आह। कथम् एतत्। करटकः कथयति।

## ॥ कथा ३० ॥

अस्ति कस्यचिद् राज्ञः पुत्रो वणिक्पुत्रभट्टपुत्राभ्यां सह मैत्रीम् उपगतः। प्रत्यहं चत्वरारामविहारविनोदविलासक्रीडाभिर् एव सुखम् अनुभवन्ति। धनुर्वेदगजाश्वारोहणवाहनमृगयाक्रीडाविमुखः प्रतिदिनम् आस्ते। अथान्यदा ' *राजनीतिविमुखस् त्वम् ' इति पित्रा तिरस्कृतो निजम् अभिमानदुःखं मित्रयोर् आवेदितवान्। *ताव् आहतुः। आवयोर् अपि स्वकर्मविमुखयोः संमुखं पितरौ नित्यम् एवासंबद्धं जल्पतः। तच् च दुःखं भवन्मैत्रीसुखेनैतावद्दिनान्य् आवाभ्यां न ज्ञातम्। इदानीं च त्वाम् अप्य् अनेनैव दुःखेन दुःखितं दृष्ट्वातिदुःखिताव् आवां संवृत्तौ। अथ राजपुत्रो ऽब्रवीत्। न खल्व् अपमानितानाम् इह स्थातुं युक्तम्। अतः सर्व एवैकदुःखदुःखिता निःसृत्य क्वाप्य् अन्यत्र यास्यामः। यतः।

वीरव्रतस्य विद्यायाः ' पुण्यानां शक्तिशीलयोः।
परीक्षा मानिनां ज्ञेया ' स्वदेशत्यागतः फलैः ॥४१९॥

अथ तथानुष्ठिते ' क्व गन्तुं युक्तम् ' इति चिन्तयन्ति स्म। ततो

वणिक्पुत्रेणाभिहितम् । न खल्व् अर्थं विना *क्वाप्य् अभिमतसिद्धिर् भवति ' इति रोहणाचलं गच्छामः । तत्र रत्नान्य् आसाद्य समस्तमनोरथान् अनुभविष्यामः । इति समीचीनम् अर्थम् एनं सर्वे प्रतिपद्य रोहणाचलं गताः । तत्र च भाग्यवशाद् एकैकम् अमूल्यम् उत्तमरत्नम् आसादितम् । अथ ते पर्यालोचितवन्तः । कथम् अस्माभिर् इतो बह्वपायेनाटवीमार्गेण प्रस्थितैर् एतानि रत्नानि रक्षणीयानि । अथ भट्टपुत्रो ऽब्रवीत् । ननु मन्त्रिपुत्रो ऽहम् । तन् मयात्रोपायश् चिन्तितः ' यथा । एतानि स्वस्वोदरान्तः प्रक्षिप्य नीयन्ते ' यथा सार्थिकस्य चौरादिकस्य च योग्या न भवामः । इति निर्णीय भोजनवेलायाम् अन्नकवलान्तर् निधाय तैस् तानि कवलितानि । एवं चानुष्ठीयमाने तत्र पर्वतोपत्यकायाम् अलक्षितविश्रान्तः को ऽपि पुरुषस् तान् दृष्ट्वा चिन्तयाम् आस । अहो ' मया च रोहणाचले रत्नार्थिना बहुदिनानि पर्यटितानि ' क्षीणभाग्यतया न किंचिल् लब्धम् । तद् एभिः सह गच्छामि ' यतो यत्रैव मार्गे जातश्रमा निद्रां यास्यन्ति ' तत्रैवामीषाम् उदराणि विदार्य चीराण्य् अपि रत्नान्य् अपहरिष्यामि । इति कृतनिश्चयः पर्वताद् अवतीर्य तेषां गच्छतां पृष्ठतो लग्नः ' अब्रवीच् च । भो भो महापुरुषाः । न शक्नोम्य् अहम् एकाकी भीषणां महाटवीम् उल्लङ्घ्य स्वदेशं गन्तुम् । अतो भवतां सार्थे मिलितः समेष्यामि । ते ऽपि *साहाय्यवृद्धिम् इच्छन्तः ' तथा ' इति प्रतिपद्य सहैव गन्तुम् आरब्धाः ।

अथ तस्याम् अटव्यां गिरिगहनप्रदेशाश्रिता मार्गासन्नभिल्लपल्ली तिष्ठति । तत्परिसरेण गच्छतां तेषां पल्लीपतिगृहे कौतु-

कवशाद् विधृतनानाविधपक्षिणां मध्याद् एकः पञ्जरस्थो वृद्धपक्षी शब्दं चकार। स च पल्लीपतिः समस्तपक्षिरुतभाषाकुशलः पक्षिरुतार्थं विचार्य प्रहृष्टमनाः स्वभृत्यान् अब्रवीत् ' यत् किलैष पक्षी खल्व् एवं कथयति। मार्गेण गच्छताम् अमीषाम् अध्वन्यानां पार्श्वे महामूल्यानि रत्नानि सन्ति। ततो गृह्णीत गृह्णीत ' इति। तद् एतान् विधृत्यानयत। अथ तैस् तथानुष्ठिते पल्लीपतिना स्वयम् *उल्लुण्ठितानाम् अपि तेषां पार्श्वे न किंचित् प्राप्तम्। ततो मुक्तास् ते कक्षापटमात्रपरिच्छदा गन्तुम् आरब्धाः। ततः स पक्षी तथैव पुनर् विरौति। तच् च श्रुत्वा पल्लीपतिना पुनर् आनायितास् ते सविशेषं सम्यक् संशोध्य मुक्ताः सन्तो यावद् गच्छन्ति ' तावत् तथैव तारतरं तस्मिन् पक्षिणि व्याहरति पुनर् अप्य् आकार्य पल्लीपतिना ते पृष्टाः ' यथा। किलैष पक्षी सर्वदा दृष्टप्रत्ययो न कदाचिद् अलीकं ब्रूते। ततो भवतां पार्श्वे रत्नानि कथयति। तत् क्व तानि ' इति। अथ ते ऽब्रुवन्। यद्य् अस्माकं पार्श्वे रत्नानि भवेयुः ' तत् कथं विलोकनपरा अपि भवन्तो न पश्येयुः। पल्लीपतिर् आह ' यद् एष पक्षी पुनः पुनः कथयति ' तद् अवश्यं भवदीयजठरान्तरे रत्नानि विद्यन्ते। संप्रति च संध्या संजाता। प्रभाते रत्नकारणाद् अवश्यं युष्माकम् उदराणि विदारयिष्यामि। इत्य् आक्षिप्य कारापवरके क्षेपिताः। ततश् चौरश् चिन्तयाम् आस। प्रातः खल्व् अमीषाम् उदरेषु विदार्यमाणेषु यदा तादृशरत्नानि पल्लीपतिः प्राप्स्यति ' तदा निश्चितं दुरात्मा मदीयम् अपि जठरं लोभाविष्टः पाटयिष्यति। ततो यथाकथम् अपि मम मृत्युर् एव। तद् अत्र किम् अहं करोमि। उक्तं च।

अवश्यगत्वरैः प्राणैर् ' मृत्युकाले महात्मनाम् ।
परोपकारश् चेत् कश्चित् ' सिध्येत् तद् अमृतं मृतम् ॥४२०॥

तद् वरम् आत्मोदरं प्रथमम् एवास्य विदारणाय दत्त्वा स्ववंध्यान् अप्य् एतान् रक्षामि ' यत आदाव् एव विदारितमदीयोदरे सुनिपुणम् अपि *वीक्षमाणो दुरात्मा स यदा न किंचिद् आसादयिष्यति ' तदा *छिन्नरत्नसत्त्वासंशयः स्वत एवामीषां जठरविदारणकर्म *निस्त्रिंशो ऽपि कारुण्यान् न करिष्यति । एवं च सति तेषां प्राणदानाद् धनदानाच् च ममोपकारकीर्तिर् इहलोके ऽन्यलोके च जन्मशुद्धिश् च भविष्यति । स्वतः प्राप्तकालम् अप्य् एतद् एव किंचित् पण्डितमरणम् ' इति । अथातिक्रान्तायां रजन्यां प्रातर् एव पल्लीपतिना तेषां जठरविदारणे प्रारब्धे चौरो योजिताञ्जलिर् भूत्वा तं विज्ञप्तवान् । न शक्नोम्य् अमीषां स्वभ्रातॄणां जठरविदारणं द्रष्टुम् । अतः प्रसीद ' प्रथमम् एव मदीयोदरविदारणं कार्यताम् । ततः पल्लीपतिना दयावशात् तथा प्रतिपन्ने विदारिते ऽपि सति तस्योदरे न किंचिद् रत्नम् आसादितम् । ततो ऽसाव् अनुशुशोच । कष्टं भोः कष्टम् । मया हि पक्षिरुतविचारमात्रोपबृंहितलोभेन महद् वैशसं कृतम् । यथास्य जठरे ' तथा शेषाणाम् अपि न किंचित् संभावयामि । इत्य् उक्त्वा त्रयो ऽप्य् अक्षतशरीरा मुक्तास् ते सत्वरम् अटवीम् उल्लङ्घ्य प्राप्ताः किंचिद् अधिष्ठानम् ॥

अतो ऽहं ब्रवीमि । स्ववध्यार्थे मृतश् चौरः । तद् वरं पण्डितशत्रुः ' इति ।

अथ तैस् तत्राधिष्ठाने वणिक्पुत्रम् अग्रे कृत्वा त्रयाणाम् अपि रत्नानां विक्रयः कृतः । अथ प्रभूतं मूल्यधनम् आनीय राजपुत्राग्रे मुक्तम् । अनेन च भट्टपुत्रं मन्त्रित्वे स्थाप्य तद्विषयाधिपतिराज्यम्

आच्छेत्तुं पर्यालोच्य वणिक्पुत्रो भाण्डागारिकत्वे नियोजितः । अथ प्रचुरं वरकरितुरंगपत्तिदलं द्विगुणार्थदानतो मेलयित्वा तस्य च मन्त्रिणः षाड्गुण्यबुद्धिबलेन विग्रहम् आरभ्य संग्रामेण व्यापाद्य राजानं स राजपुत्रस् तद्राज्यम् एव गृहीत्वा राजा बभूव। मित्रद्वये ऽप्य् आरोपितसर्वाङ्गराज्यचिन्ताभारः स्वच्छन्दवृत्तिर् विलाससौख्यान्य् अनुबभूव। अन्यदा च तेनान्तःपुरसमाश्रितेन प्रत्यासन्नमन्दुरावानर एकः कौतुकात् सदात्मसंनिहितः कृतः । यतः शुकचकोरपारापतमेषवानरादयः प्रकृत्यैव राज्ञां प्रिया भवन्ति। क्रमयोगाच् च वानरो नृपतिदत्तविविधभक्ष्योपचीयमानो वृद्धिम् उपगतः । सकलराजलोकमान्यश् च संजातः । राजापि तं वानरम् *अतिविश्वासाद् वात्सल्याच् च स्वखड्गधरं चकार । अथ तस्य राज्ञो गृहाभ्याशे *नानातरुखण्डमण्डितं प्रमदवनम् अस्ति। तच् च तेन राज्ञा वसन्तागमे मधुकरकुलोपगीयमानमदनकीर्तिप्रसरं बहुकुसुमपरिमलसुगन्धि रमणीयम् अवलोक्य मन्मथाविष्टेनाग्रमहिष्या सह तत्र प्रविशति स्म। सर्वो ऽपि परिजनो द्वार एव स्थापितः । अथ कौतुकात् प्रमदवनं परिभ्रम्यावलोकयता श्रान्तेन राज्ञा वानरो ऽभिहितः । अहम् अस्मिन् पुष्पगृहे क्षणं स्वपिमि लग्नः। मम को ऽप्य् उपद्रवं कुर्वाणस् त्वयाप्रमत्तेन प्रयत्नेन रक्षणीयः । इत्य् उक्त्वा राजा प्रसुप्तः। तस्य चोपरि पुष्पगन्धकस्तूरिकादिपरिमललुब्धो मधुकरः समागत्य शिरसि निलीनः। तं दृष्ट्वा सरोषो वानरश् चिन्तयाम् आस । कथं मम पश्यतो ऽपि क्षुद्रजन्तुनानेन राजा दश्यते । इति निवारयितुम् आरब्धः। अथ यदा निवार्यमाणो ऽपि भ्रमरः पुनः पुना राजानम् उपैति । तावत् कोपान्धो वानरः खड्गम्

आकृष्य भ्रमरम् अनु प्रहारं पातितवान् । तेन च प्रहारेण राज्ञः शिरश् छिन्नम् । अथ सहसुप्ता राजमहिषी चासाद् उत्थिता । तादृशं चासमञ्जसम् आलोक्य क्रन्दितवती । आह च । रे रे मूर्खवानर । विश्वस्ते राजनि किम् इदम् एवम् अनुष्ठितं त्वया । इति । वानरो ऽपि यथावृत्तम् आख्यातवान् । ततो मिलितसर्वलोकेनाक्रुश्य परिहृतः ॥

अत एवोच्यते । न तु मित्रम् अपण्डितं कार्यम् । यतो वानरेण हतो नृपः । इति । अतो ऽहं ब्रवीमि ।

पण्डितो ऽपि वरं शत्रुर् । न तु मित्रम् अपण्डितम् ।
स्ववधार्थे मृतश् चौरो । वानरेण हतो नृपः ॥४२१॥

पुनः करटक आह ।

*पैशुन्यमात्रकुशलः । सौहार्दस्य विनाशकः ।
प्रमाणं त्वादृशो यत्र । तत् कार्ये न शुभं भवेत् ॥४२२॥

तथा च । स्थितो ऽप्य् अन्यास्व् अवस्थासु । *नैवाकार्यं व्यवस्यति ।
*साधुस् तत् कुरुते येन । न लोके दूष्यते यशः ॥४२३॥

तथा । अन्यावस्थो ऽपि बुधो । न गुणान् विजहाति जातिशुद्धात्मा ।
न श्वेतभावम् उज्झति । शङ्खः शिखिभुक्तमुक्तो ऽपि ॥४२४॥

उक्तं च । यद् अकार्यम् अकार्यम् एव तन्
न बुधस् तत्र मतिं प्रयोजयेत् ।
परयापि तृषा प्रबाधितैर्
न हि रथ्यागतम् अम्बु पीयते ॥४२५॥

किं च । कर्तव्यम् एव कर्तव्यं । प्राणैः कण्ठगतैर् अपि ।
अकर्तव्यं न कर्तव्यं । प्राणैः कण्ठगतैर् अपि ॥४२६॥

इत्य् उक्तस् तदीयनीतिमार्गानुगं वचनं कूटबुद्धित्वाद् विषम् इव मन्यमानो दमनको ऽपसृतः ।

अत्रान्तरे तौ पिङ्गलकसंजीवकौ क्रोधान्धितधियौ युद्धाय पुनर् उद्यतौ । ततः पिङ्गलकः संजीवकं व्यापाद्य प्रशान्तकोपो ऽसृग्दिग्धपाणिना स्मृतपूर्वस्नेहवशात् करुणया बाष्पार्द्रे नयने प्रमृज्य सपश्चात्तापम् इदम् अब्रवीत् । अहो कष्टम् । महद् इदम् अकृत्यम् । मया हि द्वितीयम् इवात्मशरीरं संजीवकं व्यापादयतात्मन एवापकृतम् ।

उक्तं च । भूम्येकदेशस्य गुणान्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशे ।
भृत्यप्रणाशो मरणं नृपाणां
नष्टापि भूमिः सुलभा न भृत्याः ॥४२७॥ indra

तं चैवं पिङ्गलकम् अधृतिपरीतं दृष्ट्वातिधृष्टतया शनैः शनैर् उपसृत्य दमनको ऽब्रवीत् । स्वामिन् । क एष न्यायः । यत् सपत्नं हत्वाधृतिः क्रियते । उक्तं च ।

पिता वा यदि वा भ्राता । पुत्रो वा यदि वा सुहृत् ।
प्राणद्रोहे प्रवृत्तः सन् । हन्तव्यो भूतिम् इच्छता ॥४२८॥

किं च । राजा घृणी *ब्राह्मणः सर्वभक्षी
स्त्री चावशा दुष्टबुद्धिः सहायः ।
प्रेष्यः प्रतीपो ऽधिकृतः प्रमादी
त्याज्याः सर्वे यश् च कृतं न वेत्ति ॥४२९॥ upa

गच्छ दूरम् अपि यत्र नन्दसि
पृच्छ बालम् अपि पण्डितं जनम् ।
देहि देहम् अपि याचितो ऽर्थिने
छिन्द्धि बाहुम् अपि दुष्टम् आत्मनः ॥४३०॥ rath

न चायं धर्मो राज्ञाम् । यः किल प्राकृतपुरुषाणां साधारणः । उक्तं च ।

न मनुष्यप्रकृतिना । शक्यं राज्यं प्रशासितुम् ।
ये हि दोषा मनुष्याणां । त एव नृपतेर् गुणाः ॥४३१॥

अपि च । सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुर् अपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिर् अनेकरूपा ॥४३२॥ vasa

अथानागतम् एव समागत्य सिंहसकाशे समुपविष्टः करटको दमनकं प्रत्य् अब्रवीत् । भवांस् तावन् मन्त्रित्वम् एव न *जानाति । यतो द्वयोः परस्परप्रीत्युपभोगयोर् व्युच्छित्तिकारणं भेदः । न च नीतिर् एषा मन्त्रिणाम् । यत् सामदानभेदसाध्येषु कृत्येषु विद्यमानेष्व् आत्मीयभृत्यस्योपरि स्वामी युद्धोपदेशेन संशयम् आरोप्यते । उक्तं च ।

धनदस्य तथैव वज्रिणः
पवनस्याथ जलेश्वरस्य च ।
कलहैः खलु खण्डिताः श्रियः
कलहो नित्यजयो न कस्यचित् ॥४३३॥ viyo

किं च । नयाद् अपेतं प्रवदन्ति युद्धं
युद्धं व्यवस्यन्ति हि बुद्धिहीनाः ।

नयं च *धीराः प्रवदन्ति शास्त्रे
शास्त्राच् च सामादिगुणप्रयोगः ॥ ४३४ ॥ upa

तस्मान् मन्त्रिणा कदाचिद् अपि स्वामिनो युद्धं नोपदेष्टव्यम् । उक्तं च । यतः ।

शुचयो हितकारिणो विनीताः
प्रतिपन्नव्ययकारिणो ह्य् अलुब्धाः ।
निवसन्ति नरा गृहेषु येषां
वशम् आयान्ति न ते नृपा रिपूणाम् ॥ ४३५ ॥ aupa

तस्मात् । हितम् एव हि वक्तव्यम् । अरुच्यम् अपि सर्वथा ।
एकान्तप्रियवादित्वं । विरुद्धम् अनुजीविनाम् ॥ ४३६ ॥

किं च । पृष्टापृष्टा नरेन्द्रेण । प्रियाणि यदि मन्त्रिणः ।
प्रब्रूयुर् अहितार्थानि । प्रक्षीयेरन् नृपश्रियः ॥ ४३७ ॥

किं च । स्वामिनापि मन्त्रिणः प्रत्येकशः प्रष्टव्याः । पृष्टेषु च तेषु किं केनात्मनो हिताहितं श्रेयो वाभिहितम् । तत् सर्वं स्वयं विचारणीयम् । यतः कदाचिद् अन्यथा स्थापितम् अपि वस्तु मतिभ्रान्त्यान्यथा दृश्यते । उक्तं च ।

तलवद् दृश्यते व्योम । खद्योतो हव्यवाड् इव ।
न तलं विद्यते व्योम्नि । न खद्योतो हुताशनः ॥ ४३८ ॥

अपि च । असत्याः सत्यसंकाशाः । सत्याश् चासत्यरूपिणः ।
दृश्यन्ते विविधा भावास् । तस्माद् युक्तं परीक्षणम् ॥ ४३९ ॥

तस्माद् अपगतनयेन भृत्येन यद् अभिहितम् । स्वामिना तत् तथैव न प्रत्येतव्यम् । यतः कारणाद् धूर्तभृत्या हि स्वार्थसिद्धये विचित्रवाक्यैः कार्यम् अन्यथा स्थितम् अन्यथैव स्वामिनो निवेदयन्ति । तस्माद् आलोच्य स्वामिना कार्यम् अनुष्ठेयम् । उक्तं च ।

सुहृद्भिर् आप्तैर् असकृद् विचारितं
स्वयं च बुद्ध्या प्रविचिन्तिताक्षरम् ।
करोति कार्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसां च भाजनम् ॥ ४४० ॥ vaṃśa

तस्मात् *परवचनप्रत्याहार्यबुद्धिना स्वामिना स्वयम् एव न भाव्यम् । यत् सर्वथैव पुरुषान्तरम् अवधार्य हिताहितवचनोत्तरकालपरिणामं च विचार्यानाहार्यबुद्धिना स्वामिना स्वयम् एव बुद्धिमता सर्वं कार्यजातं सदैव प्रत्येतव्यम् । इति ॥

समाप्तं चेदं मित्रभेदं नाम प्रथमं तन्त्रम् । यस्यायम् आद्यः श्लोको भवति ।

वर्धमानो महान् स्नेहः *सिंहगोवृषयोर् वने ।
जम्बुकेनातिलुब्धेन पिशुनेन विनाशितः ॥ १ ॥



## ॥ अर्हम् ॥

अथेदम् आरभ्यते मित्रसंप्राप्तिर् नाम द्वितीयं तन्त्रम्। यस्यायम् आदिमः श्लोकः।

असाधना वित्तहीना। बुद्धिमन्तो बहुश्रुताः।
साधयन्त्य् आशु कार्याणि। काकाखुमृगकूर्मवत् ॥१॥

राजपुत्राः पृच्छन्ति। कथम् एतत्। विष्णुशर्मा कथयति।

अस्ति दाक्षिणात्ये जनपदे प्रमदारोप्यं नाम नगरम्। तस्य नातिदूरे महोच्छ्रायो महास्कन्धशाखोपचितो न्यग्रोधपादपः सर्वाश्रयो ऽस्ति। उक्तं च।

छायासुप्तमृगः शकुन्तनिवहैर् आलीननीलच्छदः
कीटैर् आवृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः।
विश्रब्धं मधुपैर् निपीतकुसुमः श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर् बहुसत्त्वसंघसुखदो भूभारभूतो ऽपरः ॥२॥ śārdū

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित् प्रातः प्राणयात्रार्थं पुरम् उद्दिश्य प्रचलितः। तदधिष्ठानवासिनं पक्षिबन्धननिमित्तम् आयान्तम् उग्ररूपं स्फुटितकरचरणम् उद्बद्धपिण्डिकम् अतिपरुषशरीरच्छविं रक्तान्तनयनं श्वभिर् अनुगम्यमानम् ऊर्ध्वबद्धशिरोरुहं जाललगुडपाणिम्। किं बहुना। द्वितीयम् इव *कालं पाशहस्तम्। अवतारम् इव पापस्य। हृदयम् इवाधर्मस्य। उपदेष्टारम् इव सर्वपातकानाम्। सुहृदम् इव मृत्योर् वृक्षाभ्याशम् आगतं व्याधम् एकम् अपश्यत्। अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्। किम् अयं पापश् चिकीर्षति। किं ममैवानर्थाय। आहो *स्वित् कश्चिद् अन्यो ऽस्याध्यवसायः। इति कौतुकपरस् तम् एव पृष्ठतो ऽनुगम्यावस्थितः। अथ व्याधो ऽपि तत्रैकदेशे जालं वितत्य धान्यकणान् अवकीर्य ततो नातिदूरे निभृतः स्थितः। अत्र ये तत्र पक्षिणः सन्ति। ते लघुपतनकवाक्यार्गलया नियन्त्रितास् तांस् तण्डुलान् हालाहलम् इव मन्यमानास् तूष्णीं तस्थुः।

अत्रान्तरे कपोतशतैः परिवृतश् चित्रग्रीवो नाम कपोतराजः प्राणयात्रार्थं परिभ्रमंस् तांस् तण्डुलान् दूरतो ऽप्य् अपश्यत्। अथ लघुपतनकेन निवार्यमाणो ऽपि जिह्वालौल्यात्

तद्रक्षणार्थं तत्र महाजालम् अपतत् । संनिपातसमकालम् एव सपरिवारः स्नायुपाशैर् बद्धश् च । अथवा दैवप्रतिकूलतया भवत्य् एवम् । न कश्चिद् अस्य दोषः । उक्तं च ।

पौलस्त्यः कथम् अन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः ।
अक्षैश् चापि युधिष्ठिरेण सुमहान् प्राप्तो ह्य् अनर्थः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ३ ॥ śādū

तथा च । कृतान्तपाशबद्धानां । दैवेनाविष्टचेतसाम् ।
बुद्धयः कुब्जगामिन्यो । भवन्ति महताम् अपि ॥ ४ ॥

अथ लुब्धको ऽपि प्रहृष्टमना लगुडम् उद्यम्य प्रधावितः । चित्रग्रीवो ऽपि सानुचरः पाशबन्धव्यसनाकुलस् तम् आयान्तं दृष्ट्वा प्रत्युत्पन्नमतितया तान् कपोतान् अब्रवीत् । अहो न भेतव्यम् । न भेतव्यम् । यतः ।

व्यसनेष्व् अपि सर्वेषु । यस्य बुद्धिर् न हीयते ।
स तेषां पारम् अभ्येत्य । प्राप्नोति परमं सुखम् ॥ ५ ॥

तत् सर्वैर् अप्य् एकचित्तैर् भूत्वा संघातेनोत्पत्य जालम् अपहर्तव्यम् । अन्यथा संघातं विना न शक्यते जालम् अपहर्तुम् । यतो ऽसंहतचित्तानां मृत्युर् एव भवति । उक्तं च ।

एकोदराः पृथग्ग्रीवा । अन्योन्यफलभक्षिणः ।
असंहता विनश्यन्ति । भारुण्डा इव पक्षिणः ॥ ६ ॥

कपोताः पृच्छन्ति । कथम् एतत् । चित्रग्रीवः कथयति ।

## ॥ कथा १ ॥

इह हि कस्मिंश्चित् सरसि भारुण्डा नाम पक्षिणः प्रतिवसन्ति स्म । तेषाम् उदरम् एकं ग्रीवे च द्वे पृथक् पृथग् भवतः । अथ तेषां मध्यात् कस्यापि पक्षिणः स्वेच्छया विचरत एकया ग्रीवया क्वाप्य् अमृतं प्राप्तम् । अथ द्वितीययाभिहितम् । ममाप्य् अर्धं देहि । अथ यदा तया न दत्तम् । तदा द्वितीयग्रीवया कोपात् कुतो ऽप्य् अन्विष्य भक्षिते विष एकोदरत्वान् मृत्युर् अभवत् ॥

अतो ऽहं ब्रवीमि । एकोदराः पृथग्ग्रीवाः । इति । एवं संघात एव समर्थः । इति श्रुत्वा ते कपोता जीवितार्थिनः संघातेन जालम् अपहृत्येषुक्षेपमात्रम् ऊर्ध्वम् उड्डीय वियति

वितानबन्धं कृत्वा निर्भयं प्रस्थिताः । लुब्धको ऽपि पक्षिभिर् जालम् अपह्रियमाणं दृष्ट्वा विस्मितमना ऊर्ध्वाननः । अदृष्टपूर्वम् इदम् । इति चिन्तयञ् श्लोकम् अपठत् ।

संहतास् तु हरन्तीमे । मम जालं विहंगमाः ।
यदा तु विवदिष्यन्ति । वशम् एष्यन्ति मे तदा ॥ ७ ॥

इति विचार्यानुसर्पितुम् आरब्धः । चित्रग्रीवो ऽपि तं क्रूरम् अनुगच्छन्तं दृष्ट्वा तदभिप्रायं च ज्ञात्वानाकुलमना गिरितरुविषमभूभागानाम् उपरि गन्तुम् आरब्धः । लघुपतनकश् च चित्रग्रीवस्य सुनयचरितेन व्याधस्य च दुरध्यवसायेन विस्मितमना ऊर्ध्वम् अधश् च मुहुर् मुहुर् निरीक्षमाण आहारचिन्ताम् उत्सृज्य कौतुकपरस् तद् एव कपोतवृन्दम् अनुगतश् चिन्तयति । किम् एष महात्मा । किम् अयं दुरात्मा च करिष्यति । इति । अथ लुब्धको ऽपि विषममार्गव्यवहितं कपोतचक्रं ज्ञात्वा विहताशः प्रतिनिवृत्तो ऽब्रवीत् ।

न हि भवति यन् न भाव्यं । भवति च भाव्यं विनापि यत्नेन ।
करतलगतम् अपि नश्यति । यस्य च भवितव्यता नास्ति ॥ ८ ॥

किं च । पराङ्मुखे विधौ पुंसां । यदि चेत् स्याद् धनागमः ।
तत् सो ऽन्यद् अपि संगृह्य । याति शङ्खनिधिर् यथा ॥ ९ ॥

तद् आस्तां तावद् विहगामिषलाभः । कुटम्बजीवनोपायभूतं तज् जालम् अपि नष्टम् ।

अत्रान्तरे चित्रग्रीवस् तं निराशं प्रतिनिवृत्तं दृष्ट्वा तान् कपोतान् उवाच । भोः । विश्रब्धं गम्यताम् । निवृत्तो दुरात्मा लुब्धकः । तद् अत्रास्माकं प्रमदारोप्ये नगरे गमनं श्रेयः । यतस् तत्र प्रागुत्तरदिग्भागे हिरण्यो नाम मूषको मम प्रियसुहृत् प्रतिवसति । स चास्माकम् अविलम्बितं पाशच्छेदं करिष्यति । समर्थश् चायम् आपद्विमोक्षणाय । इति । अथ तथैवानुष्ठिते हिरण्यमूषकदिदृक्षवस् ते सर्वे तद्बिलदुर्गम् आसाद्य भूमाव् अवतेरुः ।

अथ च । अनागतं भयं दृष्ट्वा । नीतिशास्त्रविशारदः ।
अवसन् मूषकस् तत्र । कृत्वा शतमुखं बिलम् ॥ १० ॥

अथैवं सति पक्षिपाताशङ्कितहृदयो हिरण्यो ऽपि बिडालपदमात्रं निजबिलदुर्गमार्गम् अनुसृत्य । किम् इदम् । इति वीक्षितुम् आरब्धः । चित्रग्रीवो ऽपि बिलद्वारावस्थित एवम् आह । भद्र हिरण्य । इतः सत्वरम् एहि । पश्य ममैनाम् अवस्थाम् ।

तच् च श्रुत्वा दुर्गान्तर्गत एव हिरण्यो ऽब्रवीत् । भद्र । को भवान् । किमर्थम् आयातः । कीदृक् च ते व्यसनम् । तत् कथ्यताम् । इति । तच् छ्रुत्वा चित्रग्रीव आह । भोः । चित्रग्रीवो नाम कपोतपतिस् तव सुहृत् । सत्वरम् आगच्छ । तद् आकर्ण्य पुलकिततनुः प्रहृष्टात्मा त्वरमाणो निष्क्रामन्न् अब्रवीत् ।

सुहृदः स्नेहम् आपन्ना । लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यम् । आगच्छन्ति कृतात्मनाम् ॥ ११ ॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धं दृष्ट्वा सविषादम् अब्रवीत् । भद्र । किम् इदम् । कुतो वा । कथय । इति । सो ऽब्रवीत् । भद्र । जानन्न् अपि किं मां पृच्छसि । उक्तं च ।

यस्माच् च येन च यथा च यदा च यच् च
यावच् च यत्र च शुभाशुभम् आत्मकर्म ।
तस्माच् च तेन च तथा च तदा च तच् च
तावच् च तत्र च कृतान्तवशाद् उपैति ॥१२॥ vasa

किं च । विलोचनानां विकचोत्पलत्विषां
जगत् सहस्रेण किलेक्षते हरिः ।
यदास्य मृत्युः पुरतो विजृम्भते
तदा स जात्यन्ध इवावसीदति ॥१३॥ vaṃśa

सपादाद् योजनशताद् । आमिषं प्रेक्षते खगः ।
सो ऽपि पार्श्वस्थितं दैवाद् । बन्धनं नैव पश्यति ॥१४॥

अपि च । शशिदिवाकरयोर् ग्रहपीडनं
गजभुजंगविहंगमबन्धनम् ।
मतिमतां च समीक्ष्य दरिद्रतां
विधिर् अहो बलवान् इति मे मतिः ॥१५॥ druta

किं च । व्योमैकान्तविहारिणो ऽपि विहगाः संप्राप्नुवन्त्य् आपदं
बध्यन्ते निपुणैर् अगाधसलिलान् मीनाः समुद्राद् अपि ।
दुर्णीतं किम् इहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितभुजो गृह्णाति दूराद् अपि ॥१६॥ śārdū

अथ हिरण्य एवम् उक्तवतश् चित्रग्रीवस्य पाशं छेत्तुम् आरब्धश् चित्रग्रीवेण निरुद्धः । उक्तं च । भद्र । विरुद्धम् एतत् । मा तावत् प्रथमं मम पाशश् छिद्यताम् । किं तु मत्परिजनस्य । तच् छ्रुत्वा हिरण्यः प्रकुपितः प्राह । भोः । न युक्तम् उक्तं भवता । यतः स्वामिनो ऽनन्तरं भृत्याः । स आह । भद्र । मा मैवं वद । अन्यान् अपि परित्यज्य ममाश्रिता एते सर्वे वराकाः । तत् कथम् अप्य् एतावन्मात्रं संमानं न करोमि । उक्तं च ।

यः संमानं सदा धत्ते । भृत्यानां क्षितिपो ऽधिकम् ।
वित्ताभावे ऽपि ते हृष्टास् । तं त्यजन्ति न कर्हिचित् ॥१७॥

तथा च । विश्वासः संपदो मूलं । तेन यूथपतिर् मृगः ।
सिंहो मृगाधिपत्ये ऽपि । न मृगैर् उपसेव्यते ॥१८॥

अपरं मम कदाचित् पाशे छिन्ने तव दन्तवेदना भवति । अथवा स पापात्मा लुब्धकः समभ्येति । तन् नूनं मम नरकपातः । उक्तं च ।

सदाचारेषु भृत्येषु । सीदत्स्व् अपि हि यः प्रभुः ।
सुखी स्यान् नरकं याति । स परत्रेह सीदति ॥१९॥

तच् छ्रुत्वा हिरण्यः प्राह । भोः । वेद्म्य् अहम् इमं स्वामिधर्मम् । परं तव परीक्षार्थं मयैतद् अभिहितम् । ततः सर्वेषां पाशच्छेदं करिष्यामि । भवान् अप्य् एतैर् बहुपरिवारो भविष्यति । उक्तं च । यतः ।

कारुण्यं संविभागश् च । *यस्य भृत्येषु सर्वदा ।
संभाव्यः स महीपालस् । त्रैलोक्यस्यापि रक्षणे ॥ २० ॥

एवम् उक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यश् चित्रग्रीवं प्राह । सखे । गच्छाधुना स्वाश्रयम् । चित्रग्रीवो ऽपि सपरिवारः स्वाश्रयम् अगमत् । साधु चेदम् उच्यते ।

मित्रवान् साधयेत् कार्यं । दुःसाध्यम् अपि वै यतः ।
तस्मान् मित्राणि कुर्वीत । समान्य् *एव श्रियात्मनः ॥ २१ ॥

लघुपतनको ऽपि सर्वं चित्रग्रीवस्य *बन्धनं मोक्षं च विलोक्य विस्मितमना व्यचिन्तयत् । अहो बुद्धिर् अस्य हिरण्यस्य । शक्तिश् च । दुर्गसामग्री च । तस्मान् ममापि युक्तं हिरण्येन सह मैत्रीकरणम् । यद्य् अप्य् अहं चञ्चलप्रकृतिः कस्यापि न विश्वासं व्रजामि । न च केनापि वञ्चितुं शक्यः । तथापि मित्रं कार्यम् एव । उक्तं च ।

संपूर्णेनापि कर्तव्यं । मित्रम् अभ्युदयार्थिना ।
उदधिः परिपूर्णो ऽपि । स्वातेर् जलम् अपेक्षते ॥ २२ ॥

एवं मत्वा पादपाद् अवतीर्य बिलद्वारम् आश्रित्य पूर्वोपलब्धनामानं हिरण्यम् आहूतवान् । भद्र हिरण्य । इतस् तावत् । इति ।

तच् छ्रुत्वा हिरण्यो व्यचिन्तयत् । किम् अन्यो ऽपि कश्चित् सावशेषबन्धनः कपोतस् तिष्ठति । यो मां व्याहरति । इति । आह च । भोः । को भवान् । वायस आह । अहं लघुपतनको नाम वायसः । तच् छ्रुत्वा हिरण्यो विशेषाद् अन्तर् लीनः प्राह । भद्र । गम्यताम् अस्मात् स्थानात् । स प्रत्याह । अहं तव पार्श्वे गुरुकार्येण समायातः । तत् क्रियतां मया सह दर्शनम् । इति । हिरण्य आह । न मे ऽस्ति त्वत्संगमेन प्रयोजनम् । इति । स आह । भोः । चित्रग्रीवबन्धमोक्षणं त्वत्सकाशाद् दृष्ट्वा मे महती प्रतीतिः संजाता । तन् ममापि कदाचिद् बन्धने संजाते तव पार्श्वान् मुक्तिर् भविष्यति । इति । तत् क्रियतां मया सह मैत्री । हिरण्यः प्राह । भोः । त्वं परिभोक्ता । अहं भोज्यभूतः । का त्वया सह मम मैत्री । उक्तं च ।

*यो मित्रं कुरुते मूढ । आत्मनो ऽसदृशं कुधीः ।
हीनं वाप्य् अधिकं वापि । हास्यतां यात्य् असौ जने ॥ २३ ॥

तद् गम्यताम् । इति । वायस आह । भोः । एषो ऽहं तव दुर्गद्वार उपविष्टः । यदि त्वं मैत्रीं न करोषि । ततः प्राणयात्रां न करिष्यामि । हिरण्य आह । भोः । कथं त्वया वैरिणा सह मैत्रीं करोमि । उक्तं च ।

शत्रुणा न हि संदध्यात् । सुश्लिष्टेनापि संधिना ।
सुतप्तम् अपि पानीयं । शमयत्य् एव पावकम् ॥ २४ ॥

वायस आह । भोः । भवता सह मम दर्शनम् अपि नास्ति । कुतो वैरम् । तत् किम् अनुचितं वदसि । हिरण्य आह । भोः । वैरं *द्विविधं भवति । सहजं कृत्रिमं च । तत् सहजवैरी त्वम् अस्माकम् । ततः ।

कृत्रिमं नाशम् आयाति । वैरं द्राक् कृत्रिमैर् गुणैः ।
प्राणदानं विना नैव । सहजं याति संक्षयम् ॥ २५ ॥

वायस आह । भोः । द्विविधस्यापि वैरस्य लक्षणं श्रोतुम् इच्छामि । स आह । भोः । कारणेन निष्पादितं कृत्रिमम् । तत् तद् अर्होपकारकरणाद् गच्छति । स्वाभाविकं पुनः कथम् अपि नापगच्छति । तच् च नकुलसर्पाणाम् । शष्पभुग्नखायुधानाम् । जलानलयोः । देवदैत्यानाम् । सारमेयमार्जाराणाम् । सपत्न्योः । सिंहगजानाम् । लुब्धकहरिणानाम् । काकोलूकानाम् । पण्डितमूर्खाणाम् । पतिव्रताकुलटानाम् । सज्जनदुर्जनानां च नित्यवैरं भवति । न च कस्यचित् केनापि कोऽपि व्यापादितः । तथापि प्राणान्ताय यतन्ते । वायस आह । अकारणम् एतत् । श्रूयतां मे वचनम् ।

कारणान् मित्रताम् एति । कारणाद् याति शत्रुताम् ।
तस्मान् मित्रत्वम् एवात्र । योज्यं वैरं न धीमता ॥ २६ ॥

हिरण्य आह । त्वया सह मम कः समागमः । श्रूयतां नीतिसर्वस्वम् ।

सकृद् दुष्टं च यो मित्रं । पुनः संधातुम् इच्छति ।
स मृत्युम् एव गृह्णाति । गर्भाद् अश्वतरी यथा ॥ २७ ॥

तथा च । सिंहो व्याकरणस्य कर्तुर् अहरत् प्राणान् प्रियान् *पाणिनेर्
मीमांसाकृतम् उन्ममाथ सहसा हस्ती मुनिं *जैमिनिम् ।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्
अज्ञानावृतचेतसाम् अतिरुषां कोऽर्थस् तिरश्चां गुणैः ॥ २८ ॥ Śārdu

वायस आह । अस्त्य् एतत् । परं श्रूयताम् ।

उपकाराद् धि लोकानां । निमित्तान् मृगपक्षिणाम् ।
भयल्लोभाच् च मूर्खाणां । मैत्री स्याद् दर्शनात् सताम् ॥ २९ ॥

किं च । मृद्घट इव सुखभेद्यो । दुःसंधानश् च दुर्जनो भवति ।
सुजनस् तु कनकघट इव । दुर्भेद्यः सुकरसंधिश् च ॥ ३० ॥ Ār

अपि च । इक्षोर् अग्रात् क्रमशः । पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत् सज्जनमैत्री । विपरीतानां तु विपरीता ॥ ३१ ॥ Ār

तत् सर्वथा साधुर् एवाहम् । अपरं त्वां शपथैर् निर्भयं करोमि । हिरण्य आह । न मेऽस्ति त्वदीयशपथैः प्रत्ययः । उक्तं च ।

शपथैः संहितस्यापि । न विश्वासं रिपोर् व्रजेत् ।
अत्यर्थं शपथं कृत्वा । वृत्रः शक्रेण सूदितः ॥ ३२ ॥

तथा च । न विश्वासं विना शत्रुर् । देवानाम् अपि सिध्यति ।
विश्वास्य त्रिदशेन्द्रेण । दितेर् गर्भो विदारितः ॥ ३३ ॥
सुसूक्ष्मेणापि रन्ध्रेण । प्रविशत्य् अन्तरं रिपुः ।
नाशयेच् च शनैः पश्चात् । प्लवं सलिलपूरवत् ॥ ३४ ॥
महताप्य् अर्थसारेण । यो विश्वासं रिपोर् गतः ।
भार्यासु च विरक्तासु । तदन्तं तस्य जीवितम् ॥ ३५ ॥

तच् छ्रुत्वा लघुपतनको ऽपि निरुत्तरीकृतश् चिन्तयाम् आस । अहो बुद्धिप्रागल्भ्यम् अस्य नीतिविषये । अथवात एवास्योपरि मे मैत्रीपक्षपातः । आह च ।

सख्यं साप्तपदीनं भो । इत्य् आहुर् विबुधा जनाः ।
बलात् त्वं मित्रतां प्राप्तो । वचनं मम तच् छृणु ॥ ३६ ॥

इदानीं मैत्रीं प्रतिपद्यस्व । अन्यथाहम् अत्रैव स्थाने प्राणत्यागं करिष्यामि । इति । एवम् उक्तो हिरण्यो ऽचिन्तयत् । नायम् *अबुद्धिर् वचनाद् एव ज्ञायते ।

नाविदग्धः प्रियं ब्रूयान् । नाकामी मण्डनप्रियः ।
निःस्पृहो नाधिकारी स्यात् । स्फुटवक्ता न वञ्चकः ॥ ३७ ॥

तद् अवश्यम् अनेन सह मया मैत्री प्रतिपत्तव्या । एवं मनसा संप्रधार्य वायसम् अब्रवीत् । भद्र । *प्रत्ययितो ऽहं भवता । परं मया त्वद्बुद्धिपरीक्षणार्थम् एतद् अभिहितम् । अधुना त्वदङ्कगतं मे शिरः । इति । एवम् उक्त्वा निर्गन्तुम् आरब्धः । ईषद् अर्धनिर्गतश् च पुनर् एवावस्थितः । ततो लघुपतनकेनाभिहितम् । किम् अद्यापि ममोपरि किंचिद् अविश्वासकारणम् । यद् दुर्गान् न निर्गच्छसि । सो ऽब्रवीत् । नाहम् उपलब्धचित्तस् त्वत्तो बिभेमि । किं तु त्वदीयान्यमित्रपार्श्वात् कदाचिन् मम विश्वस्तस्य विनाशः स्यात् । इति । अथासाव् आह ।

गुणवन्मित्रनाशेन । यन् मित्रम् उपजायते ।
शालिस्तम्बाभिभवनं । श्यामाकाद् इव तत् त्यजेत् ॥ ३८ ॥

तच् च श्रुत्वा सत्वरं निर्गत्य सादरं परस्परं समागतौ । मुहूर्तं स्थित्वा लघुपतनको हिरण्यम् आह । प्रविशतु भवान् स्वभवनम् । अहम् आहारम् अन्वेषयामि । एवम् उक्त्वा तस्य सकाशाद् अपक्रान्तः किंचिद् वनगहनम् अनुप्रविश्य शार्दूलव्यापादितम् एकं वनमहिषं दृष्ट्वा तत्र *प्रकामम् आहारं कृत्वा किंशुककुसुमतुल्यां मांसपेशीम् आदाय *हिरण्यान्तिकम् एवायातः । तं चाहूतवान् । एह्य् एहि । भद्र हिरण्य । भक्ष्यताम् इदं मयोपनीतं मांसम् । इति । तस्यापि च कृते तेनादाव् एवादृतेन भूत्वा श्यामाकतण्डुलानां महान् पुञ्जः कृतः । आह च । भद्र । मया *स्वसामर्थ्येनोपनीता भक्ष्यन्तां तण्डुलाः । इति । ततस् तौ परस्परं सुतृप्ताव् अपि प्रीतिप्रकटनाय भक्षितवन्तौ । यतो मैत्रीबीजम् एतत् । उक्तं च ।

ददाति प्रतिगृह्णाति । गुह्यम् आख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव । षड्विधं प्रीतिलक्षणम् ॥ ३९ ॥
नोपकारं विना प्रीतिः । कथंचित् कस्यचिद् भवेत् ।
उपयाचितदानेन । यतो देवो ऽपि तुष्यति ॥ ४० ॥
तावत् प्रीतिर् भवेल् लोके । यावद् दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा । स्वयं त्यजति मातरम् ॥ ४१ ॥

किं बहुना । प्रीतिं निरन्तरां कृत्वा । दुर्भेद्यां नखमांसवत् ।
मूषको वायसश् चैव । गताव् एकान्तमित्रताम् ॥ ४२ ॥

एवं स मूषकस् तदुपकाररञ्जितमनास् तथा विश्वस्तः । यथा तत्पक्षतिमध्ये प्रविष्टः सदा तिष्ठति ।

अथान्यस्मिन्न् अहनि वायसो ऽश्रुपूरितनयनः समागत्य सगद्गदम् उवाच । भद्र हिरण्य । मम विरक्तिः संजातास्य देशस्योपरि । तद् यास्याम्य् अन्यत्राहम् । हिरण्य आह । भद्र । किं कारणं विरक्तेः । सो ऽब्रवीत् । भद्र । श्रूयताम् । अस्मिन् देशे महत्य् अवृष्टिः संजाता । सर्वो ऽपि नगरजनो बुभुक्षापीडितो बलिमात्रम् अपि न प्रयच्छति । अपरं गृहे गृहे विहंगबन्धनार्थं पाशाः प्रगुणीकृताः । अहम् अप्य् आयुःशेषतया पाशे न पतितः । तेनाहं विदेशचलितो बाष्पमोक्षणं करोमि । इति । तेनाहं देशान्तरे यास्यामि । हिरण्य आह । तर्हि । क्व यास्यसि । इति कथय । स आह ।

अस्ति दक्षिणापथे वनगहनमध्ये महान् ह्रदः । तत्रास्ति त्वत्तो ऽप्य् अधिकः परमसुहृन् मन्थरको नाम कूर्मः । स मे लघुमत्स्यमांसशकलानि दास्यति । इति । तेन सह सुभाषितगोष्ठीसुखम् अनुभवन् सुखेन कालं नेष्यामि । यतो नाहम् ईदृक्पक्षिक्षयं द्रष्टुं शक्नोमि । उक्तं च । यतः ।

धन्यास् तात न पश्यन्ति । देशभङ्गं कुलक्षयम् ।
परहस्तगतां भार्यां । मित्रं च विषमस्थितम् ॥ ४३ ॥

हिरण्य आह । यद्य् एवम् । तर्हि । अहम् अप्य् आगमिष्यामि । यतो ममापि महद् दुःखम् अस्ति । स आह । किं दुःखम् । हिरण्य आह । भोः । बहु वक्तव्यम् अस्ति । तत्रैव गतस् ते सर्वं निवेदयिष्यामि । वायस आह । अहं तावद् आकाशगतिः । भवान् भूचरः । तत् कथं मया सह तत्र गमिष्यति । स आह । यदि मत्प्राणै रक्षितैः प्रयोजनम् । तदात्मपृष्ठम् आरोप्य शनैः शनैर् माम् उद्वहस्व । इति । तच् छ्रुत्वा सानन्दो वायसः प्राह । यद्य् एवम् । तद् धन्यो ऽहम् । न मत्तः समस्त्य् अन्यो धन्यतरः । तद् एवं क्रियताम् । अहं हि संपातादिकान्य् अष्टाव् उड्डयनानि वेद्मि । तत् त्वां सुखेन नेष्यामि । हिरण्य आह । भोः । उड्डयननामानि श्रोतुम् इच्छामि । वायस आह ।

संपातं च विपातं च । महापातं निपातनम् ।
वक्रं तिर्यक् तथा चोर्ध्वम् । अष्टमं लघुसंज्ञकम् ॥ ४४ ॥

तद् एवं श्रुत्वा हिरण्यको ऽपि *तत्पृष्ठोपरि समारूढः । सो ऽपि संपातोड्डयनेन प्रस्थितः । ततः शनैः शनैस् तेन स तं ह्रदं प्रापितः ।

अत्रान्तरे मूषकाधिष्ठितं वायसम् अवलोक्य देशकालवित् । को ऽयम् । इति विचिन्त्य मन्थरकः सत्वरं जले प्रविष्टः । लघुपतनको ऽपि तत्तीरस्थतरुकोटरे हिरण्यं मुक्त्वा शाखाग्रम् आरुह्य तारस्वरेणोवाच । भो मन्थरक । आगच्छ । तव मित्रम् अहं वायसश् चिरात् सोत्कण्ठहृदयः समायातः । तद् आगत्यालिङ्ग माम् । इति । उक्तं च । यतः ।

किं चन्दनैः सकर्पूरैस् । तुषारैः किम् उ शीतलैः ।
सर्वे ते मित्रगात्रस्य । कलां नार्हन्ति षोडशीम् ॥ ४५ ॥

तच् छ्रुत्वा निपुणतरं परिज्ञाय पुलकिततनुर् आनन्दाश्रुप्लुतनयनः सत्वरं सलिलान् निष्क्रम्य । न मया परिज्ञातो ऽसि । इति ममापराधः क्षम्यताम् । इति ब्रुवन् मन्थरको वृक्षोत्तीर्णं लघुपतनकम् आलिङ्गितवान् ।

एवं तौ द्वाव् अपि विहितालिङ्गनौ पुलकितशरीरौ वृक्षाधस्ताद् उपविष्टाव् आत्मचरित्रवृत्तान्तं परस्परं प्रोचतुः । हिरण्यो ऽपि मन्थरकं प्रणम्य तत्रोपविष्टः । अथ तं समालोक्य मन्थरको लघुपतनकम् आह । भोः । को ऽयं मूषकः । कस्माच् च भक्ष्यभूतो ऽयं पृष्ठम् आरोप्यात्र समानीतः । तच् छ्रुत्वा लघुपतनक आह । भोः । हिरण्यनामा मूषको ऽयं मम सुहृद् द्वितीयम् इव जीवितम् । तत् किं बहुना ।

पर्जन्यस्य यथा धारा । यथा च दिवि तारकाः ।
भूतले रेणवो यद्वत् । संख्यया परिवर्जिताः ॥ ४६ ॥
गुणाः संख्यापरित्यक्तास् । तद्वद् अस्य महात्मनः ।
परं निर्वेदम् आपन्नः । संप्राप्तो ऽयं तवान्तिकम् ॥ ४७ ॥

मन्थरक आह । किम् अस्य वैराग्यकारणम् । वायस आह । पृष्टो मयैतत् तत्रैव । परम् । बहु वक्तव्यम् । एतत् तत्रैव गतः कथयिष्यामि । इत्य् उक्त्वा ममानेन न कथितम् । तत् । भद्र हिरण्य । इदानीम् आवयोर् वैराग्यकारणं निवेदय । हिरण्यः कथयति ।

## ॥ कथा २ ॥

अस्ति दाक्षिणात्ये जनपदे प्रमदारोप्यं नाम नगरम् । तस्य नातिदूरे महेश्वरायतनम् । तत्प्रत्यासन्ने मठे परिव्राड् बूटकर्णो नाम प्रतिवसति स्म । स च भिक्षावेलायां तस्मान् नगरात् सखण्डगुडदाडिमगर्भाणां स्निग्धद्रवपेशलानां भक्ष्यविशेषाणां भिक्षाभाजनं संपूर्णं कृत्वा मठम् आगत्य यथाविधि प्राणयात्रां कृत्वा

तदुद्धरितशेषम् अन्नं भिक्षापात्रे गुप्तं कृत्वा प्रात्यूषिकपरिचारकार्थं नागदन्ते स्थापयति। अहं तु सपरिजनस् तेन जीवामि। एवं च कालो ऽतिवर्तते। सुप्रयत्नम् अवस्थापिते ऽपि तस्मिन् मया भक्ष्यमाणे स परिव्राड् निर्विण्णो मत् प्रति भयात् स्थानात् स्थानम् उच्चैस्तरं प्रतिसंक्रमयति। तथा‸पि तद् अहम् अनायासेनै‸व प्राप्नोमि भक्षयामि च। अथ कदाचित् तत्र बृहत्स्फिग्नामा तापसः प्राघूर्णकः समायातः। बूटकर्णो ऽपि तस्य स्वागताद्युपचारं कृत्वा *श्रमम् अपनीतवान्। ततश् च रात्राव् एकत्र स्रस्तरे द्वाव् अपि सुप्तौ धर्मकथां कर्तुम् आरब्धौ। अथ बूटकर्णो मूषकरक्षाक्षिप्तमना जर्जरवंशेन भिक्षापात्रं ताडयन् *बृहत्स्फिगो धर्मकथां कथयतः शून्यं प्रतिवचनं प्रयच्छति। अथा‸साव् अभ्यागतः परं कोपम् उपागतस् तम् उवाच। भो बूटकर्ण ' परिज्ञातस् त्वं सम्यग् मया गतसौहृदः। तेन मया सह साह्लादं न जल्पसि। तद् रात्राव् अपि त्वदीयमठं त्यक्त्वा‸न्यत्र यास्यामि ' इति। उक्तं च ' यतः।

एह्य् आगच्छ समाविश‸सनम् इदं कस्माच् चिराद् दृश्यसे
का वार्त्ते‸ति सुदुर्बलो ऽसि कुशलं प्रीतो ऽस्मि ते दर्शनात्।
एवं ये समुपागतान् प्रणयिनः प्रत्यालपन्त्य् आदरात्
तेषां युक्तम् अशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥४८॥ śārdū

अन्यच् च।

यश् चा‸गते *प्राघुणके ' दिशो वीक्षेत वा‸प्य् अधः।
ये यान्ति सदने तस्य ' ते शृङ्गरहिता वृषाः ॥४९॥
ना‸भ्युत्थानक्रिया यत्र ' ना‸लापमधुरा गिरः।
गुणदोषकथा नै‸व ' तस्य हर्म्ये न गम्यते ॥५०॥

तथैकमठप्राप्त्यापि त्वं गर्वितस् त्यक्तसुहृत्स्नेहो नैतद् वेत्सि , यन् मठाश्रयव्याजेन नरकोपार्जना कृता । उक्तं च , यतः ।

नरकाय मतिस् ते चेत् , पौरोहित्यं समाचर ।
वर्षं यावत् किम् अन्येन , *माठपत्यं दिनत्रयम् ॥५१॥

तत् , मूढ , शोचितव्ये ऽप्य् अर्थे त्वं गर्वितः , इति । अथ तच् छ्रुत्वा भयत्रस्तमना बूटकर्णः प्राह । भो भगवन् , मा मैवं वद । न त्वत्तो ममान्यसुहृत् को ऽप्य् अस्ति । तच् छ्रूयतां गोष्ठीशैथिल्यकारणम् । एष दुरात्मा मूषकः प्रोन्नतस्थानस्थम् अपि भिक्षापात्रम् उत्कूर्द्यारुह्य भिक्षाशेषं भक्षयति । तदभावे कर्मकरा वृत्तिच्छेदान् मार्जनादिकर्म न कुर्वन्ति । तन् मूषकत्रासार्थेनानेन वंशेन मुहुर् मुहुर् भिक्षापात्रं ताडयामि , नान्यत् कारणम् , इति । अपरम् , एतत् कुतूहलम् एतस्य दुरात्मनः , यद् उत्पतनेन मार्जारमर्कटादयो ऽपि तिरस्कृताः । बृहत्स्फिग् आह । अथ ज्ञायते कस्मिंश्चित् प्रदेशे तस्य बिलम् । बूटकर्ण आह । भो भगवन् , न वेद्मि । सो ऽब्रवीत् । नूनं निधानस्योपरि तस्य बिलम् । निधानोष्मणा निश्चितं द्राक् कूर्दते ऽसौ । उक्तं च ।

ऊष्मा हि वित्तजो वृद्धिं , तेजो नयति देहिनाम् ।
किं पुनस् तस्य संभोगस् , त्यागधर्मसमन्वितः ॥५२॥

तथा च ।

नाकस्माच् छाण्डिलीमाता , विक्रीणाति तिलैस् तिलान् ।
लुञ्चितान् इतरैर् यत्र , हेतुर् अत्र भविष्यति ॥५३॥

बूटकर्ण आह । कथम् एतत् । सो ऽब्रवीत् ।

॥ कथा ३ ॥

कदाचिद् अहं कस्मिंश्चिद् अधिष्ठान ऋतुग्रहणनिमित्तं कम् अपि ब्राह्मणम् आवासार्थं प्रार्थितवान् । ततो मम ब्राह्मणेनावासो दत्तः । तत्राहं देवतार्चनादिपरस् तिष्ठामि । अथान्यस्मिन्न् अहनि प्रत्यूषप्रबुद्धो ब्राह्मणब्राह्मण्योः संवादं दत्तावधानः शृणोमि । ब्राह्मणः प्राह । ब्राह्मणि ' प्रभाते दक्षिणायनसंक्रान्तिर् अनन्तफलदा भविष्यति । तद् अहं ग्रामान्तरं प्रतिग्रहार्थं यास्यामि । त्वया ब्राह्मणस्यैकस्य सूर्योद्देशेन यथाशक्ति भोजनं दातव्यम् ' इति । अथ तच् छ्रुत्वा ब्राह्मणी परुषवचनैस् तं भर्त्सयमाना प्राह । कुतस् ते दरिद्रस्य ब्राह्मणस्य भोजनप्राप्तिः । तत् किं न लज्जस एवं ब्रुवन् । अपि च ।

न मया तव हस्ताग्रं ' प्राप्य लब्धं क्वचित् सुखम् ।
नास्वादितं च मिष्टान्नं ' का कथा भूषणादिषु ॥५४॥

तच् छ्रुत्वा भयत्रस्तो द्विजो मन्दं मन्दं प्राह । ब्राह्मणि ' नैतद् युज्यते वक्तुम् । उक्तं च ।

ग्रासाद् अर्धम् अपि ग्रासम् ' अर्थिभ्यः किं न दीयते ।
इच्छानुरूपो विभवः ' कदा कस्य भविष्यति ॥५५॥

तथा च ।

ईश्वरा भूरिदानेन ' यल् लभन्ते फलं किल ।
दरिद्रस् तच् च काकिण्या ' प्राप्नुयाद् इति नः श्रुतिः ॥५६॥
यच्छञ् जलम् अपि जलदो ' वल्लभताम् एति सकललोकस्य ।
नित्यं प्रसारितकरो ' मित्रो ऽपि न वीक्षितुं शक्यः ॥५७॥

एवं ज्ञात्वा दरिद्रैर् अपि स्वल्पाल्पेतरम् अपि समये पात्रे देयम्।
उक्तं च ' यतः ।

सत्पात्रं महती श्रद्धा ' काले देयं यथोचितम् ।
यद् दीयते विवेकज्ञैस् ' तद् अनन्ताय कल्पते ॥५८॥

तथा च प्रोक्तं कैश्चित् ।

अतितृष्णा न कर्तव्या ' *तृष्णां नैव परित्यजेत् ।
अतितृष्णाभिभूतस्य ' शिखा भवति मस्तके ॥५९॥

ब्राह्मण्य् आह । कथम् एतत् । ब्राह्मणः कथयति ।

## ॥ कथा ४ ॥

अस्ति कस्मिंश्चित् प्रदेशे कश्चित् पुलिन्दः । स पापर्द्धिं कर्तुं प्रस्थितः । अथ तेन गच्छता महाञ्जनपर्वतशिखराकारः क्रोडः समासादितः । तं चासौ दृष्ट्वा आ *कर्णान्तं बाणम् आकृष्येमं श्लोकम् अपठत् ।

न मे धनुर् नापि च बाणयोजनं
दृष्ट्वापि शङ्कां समुपैति शूकरः ।
यथा च पश्याम्य् अहम् अस्य निश्चयं
यमेन नूनं प्रहितो ममान्तिकम् ॥६०॥ upa

अथासौ तीक्ष्णसायकेन समाहतः । शूकरेणापि कोपाविष्टेन बालेन्दुद्युतिना दंष्ट्राग्रेण पाटितोदरः पुलिन्दो गतासुर् भुवि पपात । अथ लुब्धकं व्यापाद्य शूकरो ऽपि शरप्रहारवेदनया पञ्चत्वम् उपागतः । एतस्मिन्न् अन्तरे कश्चिद् आसन्नमृत्युः शृगाल इतश् चेतश् च परिभ्रमन्न् अमुं देशम् आजगाम । यावत् पश्यति वराहपुलिन्दौ द्वाव् अपि पञ्चत्वम् उपागतौ ' ततः

प्रहृष्टो व्यचिन्तयत् । अनुकूलो मे विधिः । तेनैतद् अचिन्तितम् उपस्थितं भोजनम् । अथवा साध्व् इदम् उच्यते ।

अकृते ऽप्य् उद्यमे पुंसाम् ' अन्यजन्मकृतं फलम् ।
शुभाशुभं समभ्येति ' विधिना संनियोजितम् ॥६१॥

तथा च ।

यस्मिन् देशे च काले च ' वयसा यादृशेन वा ।
कृतं शुभाशुभं कर्म ' तत् तद् एवानुभुज्यते ॥६२॥

तद् अहं तथा भक्षयामि ' यथा मे बहून्य् अहानि प्राणयात्रा भवति । तत् तावद् एनं स्नायुपाशं धनुःकोटिगतं भक्षयामि पादाभ्याम् आदाय शनैः शनैः ' इति । उक्तं च ' यतः ।

शनैः शनैः प्रभोक्तव्यं ' स्वयं वित्तम् उपार्जितम् ।
रसायनम् इव प्राज्ञैर् ' हेलया न कथंचन ॥६३॥

इति विचिन्त्य चापचटितकोटिं मुखमध्ये क्षिप्त्वा स्नायुं भक्षयितुम् आरब्धः । ततश् च त्रुटितपाशे तालुप्रदेशं विदार्य चापकोटिर् मस्तकमध्येन शिखावन् निष्क्रान्ता । सो ऽपि तद्वेदनया निर्गतया परासुर् अभूत् ॥

अतो ऽहं ब्रवीमि । अतितृष्णा न कर्तव्या ' इति । पुनर् अप्य् आह । ब्राह्मणि ' न श्रुतं भवत्या ।

आयुः कर्म च वित्तं च ' विद्या निधनम् एव च ।
पञ्चैतानि हि सृज्यन्ते ' गर्भस्थस्यैव देहिनः ॥६४॥

अथैवं प्रतिबोधिता ब्राह्मणी प्राह । यद्य् एवम् ' तर्हि ' सन्ति मे गृहे स्तोकास् तिलाः । तांश् चूर्णयित्वा तिलचूर्णेन ब्राह्मणं भोजयिष्यामि । तस्यास् तद् वचनम् आकर्ण्य ब्राह्मणो ग्रामान्तरं गतः । तयापि ते तिला उष्णोदकेन सह संमर्द्य लुञ्चित्वा सूर्यातपे

दत्ताः । एतस्मिन्न् अन्तरे तस्या गृहे कर्मव्यग्रतया तेषां तिलानां मध्ये कश्चित् सारमेयो मूत्रोत्सर्गं चकार । तद् दृष्ट्वा सा व्यचिन्तयत् । अहो ! पश्य नैपुण्यं पराङ्मुखीभूतस्य विधेः ! यद् एतान् अपि तिलान् अभोज्यान् कृतवान् । तद् अहम् एतान् समादाय कस्यचिद् गृहं गत्वा लुञ्चितैर् अलुञ्चितान् आनयामि । सर्वो ऽपि जनो ऽनेन विधिना दास्यति ! इति । अथ ताञ् शूर्पे निधाय गृहाद् गृहं प्रविशन्तीदम् आह । अहो ! गृह्णातु कश्चिद् अलुञ्चितैस् तिलैर् लुञ्चितांस् तिलान् । अथ यस्मिन् गृहे ऽहं भिक्षार्थं प्रविष्टः ! तत्र सा तिलान् आदाय प्रविष्टा पूर्वोक्तम् एवाह । अथ तद्गृहिण्या प्रहृष्टयालुञ्चितैर् लुञ्चितास् तिला गृहीताः । तथा च प्रवृत्ते तस्या भर्ता समायातः । तेन साभिहिता । भद्रे ! किम् इदम् ! इति । सा कथयति । समर्घा मया तिला लब्धा लुञ्चिता अलुञ्चितैः ! इति । ततः स वितर्क्याब्रवीत् । कस्य *संबन्धिन इमे तिलाः । तत्र तत्सुतः कामन्दकिर् आह । शाण्डिलीमातुः । सो ऽब्रवीत् । भद्रे ! सातीव निपुणा व्यवहारकुशला च । ततस् त्याज्या एते तिलाः ! यतः । नाकस्माच् छाण्डिलीमाता विक्रीणाति तिलैस् तिलान् ! इति ॥

*तन् निश्चितं निधानोष्मजनिताच्च कूर्दनशक्तिर् अस्य । एवम् उक्त्वा स भूयो ऽप्य् आह । अथ ज्ञायते तस्य क्रमणम् । बूटकर्ण आह । भगवन् ! ज्ञायते ! यतो न स एकाकी समभ्येति ! किं तु यूथपरिवृतः । बृहत्स्फिग् आह । भोः ! समस्ति किंचित् *खनित्रकम् । सो ऽब्रवीत् । बाढम् अस्ति । एषा सुहस्तिका सर्वलोहमयी । अभ्यागत आह । तर्हि ! प्रत्यूषे त्वया मया सह प्रबोद्धव्यम् ! येन द्वाव् अपि चरणमलिनायां भूमौ तत्पादानु-

सारिणौ गच्छावः । मयापि तस्य दुरात्मनस् तद् वज्रपातसदृशं वचः समाकर्ण्य चिन्तितम् । अहो ' विनष्टो ऽस्मि ' इति । यतः साभिप्रायाण्य् अस्य वचांसि श्रूयन्ते । नूनं यथा निधानं लक्षितम् ' तथा दुर्गम् अपि मामकं ज्ञास्यति ' इति । एतद् अभिप्रायाद् एव ज्ञायते । उक्तं च ' यतः ।

सकृद् अपि दृष्ट्वा पुरुषं ' विद्वाञ् जानाति सारतां तस्य ।
हस्ततुलयापि निपुणाः ' पलपरिमाणं विगणयन्ति ॥६५॥ ārā

तथा च ।

वाञ्छैव सूचयति पूर्वतरं *भविष्यत्
पुंसो ऽन्यजन्मसुकृतं यदि वेतरच् च ।
विज्ञायते शिशुर् अजातकलापचिह्नः
प्रत्युत्पदैः परिसरन् सरसः कलापी ॥६६॥ vasa

ततो ऽहं भयत्रस्तमना दुर्गमार्गं परित्यज्य सपरिवारो ऽन्यमार्गेण गन्तुं प्रवृत्तः ।

ततो ऽग्रे बृहत्कायो मार्जारः संमुखीनम् अस्मद्वृन्दम् अवलोक्य यूथमध्ये पपात । अथ ते मूषका मां कुमार्गगामिनं गर्हन्तो हतशेषास् तद् एव दुर्गं रुधिराप्लावितवसुंधराः प्रविष्टाः । अथवा साध्व् इदम् उच्यते ।

छित्त्वा पाशम् अपास्य कूटरचनां भङ्क्त्वा बलाद् वागुरां
पर्यन्ताग्निशिखाकलापजटिलान् निर्गत्य दूरं वनात् ।
व्याधानां शरगोचराद् अतिजवेनोत्प्लुत्य धावन् मृगः
कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरुषम् ॥६७॥ śārdū

अथाहम् एको ऽन्यत्र गतः ' शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः । परिव्राजको ऽपि रुधिरबिन्दुचर्चितां भूमिम् अवलोक्य तेनैव

मार्गेण दुर्गं गतः । ततश् च सुहस्तिकया खनितुम् आरब्धः । अथ तेन खनता प्राप्तं तन् निधानम् ' यस्योपरि सदैवाहं कृतवसतिर् यस्योष्मणा च दुर्गम् अपि गच्छामि ' इति । ततो हृष्टमना अभ्यागत इदम् ऊचे । भो बूटकर्ण ' स्वपिहीदानीं निःशङ्कः । अस्योष्मणा मूषकस् त्वां जागरितवान् । एवम् उक्त्वा *तन् निधानम् आदाय मठाभिमुखौ प्रतस्थाते ।

अहम् अपि यावत् तत् स्थानम् आगच्छामि ' तावद् अरमणीयम् उद्वेगजननं वीक्षितुम् अपि न शक्नोमि । *अचिन्तयं च । अहो ' किं करोमि । क्व गच्छामि । कथं मे स्यान् मनसः प्रशान्तिः । एवं चिन्तयतो मे महता कष्टेन स दिवसो जगाम ।

अथास्तम् इते सहस्रकिरणे सोद्वेगो निरुत्साहस् तस्मिन्न् एव मठे सपरिवारः प्रविष्टः । अथास्मत्परिग्रहशब्दम् आकर्ण्य बूटकर्णो *भूयो भूयो ऽपि भिक्षापात्रं जर्जरवंशेन ताडयितुम् आरब्धः । अथासाव् अभ्यागतो ऽब्रवीत् । सखे ' किम् अद्यापि न निःशङ्को निद्रां गच्छसि । स आह । भगवन् ' आयातो नूनं सपरिजनो दुष्टमूषकः । तद्भयाद् एतत् करोमि । ततो विहस्याभ्यागतः प्रोवाच । सखे ' मा भैषीः । वित्तेन सह गतो ऽस्य कूर्दनोत्साहः ' यतः सर्वेषाम् अपि जन्तूनाम् एषा गतिः । उक्तं च ।

यद् उत्साही सदा मर्त्यः ' पराभवति यज् जनान् ।
यद् उद्धतं वदेद् वाक्यं ' तत् सर्वं वित्तजं बलम् ॥६८॥

अथाहं तच् छ्रुत्वा कोपाविष्टो भिक्षापात्रम् उद्दिश्य विशेषाद् उत्कूर्दितो ऽप्राप्त एव भूमौ पतितश् च । ततो मां दृष्ट्वा स मे *शत्रुर् बूटकर्णम् उवाच । सखे ' पश्य पश्य कौतूहलम् । उक्तं च ' यतः ।

अर्थेन बलवान् सर्वो ' ऽप्य् अर्थयुक्तश् च पण्डितः ।
पश्यैनं मूषकं व्यर्थं ' स्वजातिसमतां गतम् ॥६९॥

अथवा साध्व् इदम् उच्यते ।

दंष्ट्राविरहितः सर्पो ' मदहीनो यथा गजः ।
तथार्थेन विहीनो ऽत्र ' पुरुषो नामधारकः ॥७०॥

तच् छ्रुत्वाहं चिन्तितवान् । अहो ' सत्यम् आह ममैष शत्रुः । यतो ममाद्याङ्गुलमात्रम् अपि न कूर्दने शक्तिर् अस्ति । *तद् धिग् अर्थहीनं पुरुषस्य जीवितम् ' इति । उक्तं च ।

अर्थेन तु विहीनस्य ' पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्वा ' ग्रीष्मे कुसरितो यथा ॥७१॥
यथा काकयवाः प्रोक्ता ' यथारण्यभवास् तिलाः ।
नाममात्रा न सिद्धै स्युर् ' धनहीनास् तथा नराः ॥७२॥
सन्तो ऽपि हि न राजन्ते ' दरिद्रस्येतरे गुणाः ।
आदित्य इव भूतानां ' श्रीर् गुणानां प्रकाशिनी ॥७३॥
न तथा बाध्यते लोके ' प्रकृत्या निर्धनो जनः ।
यथा द्रव्यं समासाद्य ' तद्विहीनः सुखोचितः ॥७४॥
उन्नम्योन्नम्य तत्रैव ' दरिद्राणां मनोरथाः ।
पतन्ति हृदये व्यर्था ' विधवस्त्रीस्तना इव ॥७५॥
व्यक्तो ऽपि वासरे सत्यं ' दौर्गत्यतमसावृतः ।
अग्रतो ऽपि स्थितो यत्नाद् ' भास्वान् अपि न दृश्यते ॥७६॥

इति । एवं विलप्य भग्नोत्साहस् तत् स्वं निधानं गल्लोपधानीकृतं पश्यन् व्यर्थश्रमः स्वदुर्गं प्रभातकाले गतः ।

ततश् च ते मद्भृत्या गच्छन्तो मिथो जल्पन्ति । अहो ' *असमर्थो ऽयम् उदरपूरणे ऽस्माकम् । केवलम् अस्य पृष्ठल-

ग्रानां बिडालादिभ्यो विपत्तयः । तत् किम् अनेनाराधितेन । उक्तं च ˈ यतः ।

यत्सकाशान् न लाभः स्यात् ˈ केवलाश् च विपत्तयः ।
स स्वामी दूरतस् त्याज्यो ˈ विशेषाच् छस्त्रजीविभिः ॥७७॥

एवं तेषां वचो मार्गे शृण्वन् दुर्गं प्रविष्टः । यावन् निर्धनत्वात् को ऽपि परिजनमध्यात् सह न प्रविष्टः ˈ तावद् अहं वितर्कयितुम् आरब्धः । अहो धिग् इयं दरिद्रता । अथवा साधु चेदम् उच्यते ।

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते
मानो ह्रासम् उपैति शीलशशिनः कान्तिः परिम्लायति ।
निर्वेदाद् विमुखीभवन्ति सुहृदः स्फीतीभवन्त्य् आपदः śārdū
पापं यच् च भवेत् परैर् अपि कृतं तत् तस्य संभाव्यते ॥७८॥
यदा हि भाग्यक्षयपीडितां दशां
नरः कृतान्तोपहतः प्रपद्यते ।
तदास्य मित्राण्य् अपि यान्त्य् अमित्रतां
चिरानुरक्तो ऽपि जनो विरज्यते ॥७९॥ vaṃśa

तथा च ।

शून्यम् अपुत्रस्य गृहं ˈ हृच् छून्यं यस्य नास्ति सन्मित्रम् ।
मूर्खस्य दिशः शून्याः ˈ *सर्वं शून्यं दरिद्रस्य ॥८०॥ ā

तथा हि ।

तानीन्द्रियाण्य् अविकलानि तद् एव नाम
सा बुद्धिर् अप्रतिहता वचनं तद् एव ।
अर्थोष्मणा विरहितः पुरुषः स एव
चान्यः क्षणेन भवतीत्य् अतिचित्रम् एतत् ॥८१॥ vasa

यद् वा मादृशानां किं धनेन । यस्येदृशः फलविपाकः । तत् सर्वथा विभवहीनस्य ममाधुना वनवास एव श्रेयान् । यत उक्तम् ।

श्रयेन् मानाधिकं वासं । भग्नमानं न संश्रयेत् ।
मानहीनं सुरैः सार्धं । विमानम् अपि वर्जयेत् ॥८२॥
मानम् उद्वहतां पुंसां । वरम् आपत् पदे पदे ।
नापमानमलच्छन्ना । विस्तारिण्यो ऽपि संपदः ॥८३॥

पुनर् अप्य् अचिन्तयम् । याञ्चाकष्टम् अपि मरणोपमम् । यतः ।

कुब्जस्य कीटखातस्य । *दावनिष्कुषितत्वचः ।
तरोर् अप्य् ऊषरस्थस्य । भद्रं जन्म न चार्थिनः ॥८४॥

किं च ।

दौर्भाग्यायतनं धियो ऽपहरणं मिथ्याविकल्पास्पदं
पर्यायो मरणस्य दैन्यवसतिः शङ्कानिधानं परम् ।
मूर्तं लाघवम् आश्रयश् च विपदां तेजोहरं मानिनाम्
अर्थित्वं हि मनस्विनां न नरकात् पश्यामि वस्त्वन्तरम् ॥८५॥ Sāda

तथा च ।

निर्द्रव्यो ह्रियम् एति ह्रीपरिगतः प्रोन्मुच्यते तेजसा
निस्तेजाः परिभूयते परिभवान् निर्वेदम् आगच्छति ।
निर्विण्णः शुचम् एति शोकविधुरो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयम् एत्य् अहो निधनता सर्वापदाम् आस्पदम् ॥८६॥ Sārda

अन्यच् च ।

वरम् अहिमुखे क्रोधाविष्टे करौ विनिवेशितौ
विषम् अपि वरं पीत्वा सुप्तं कृतान्तनिवेशने ।
गिरिगुरुतटान् मुक्तः कायो वरं शतधा गतो
न हि *खलजनात् प्राप्तैर् अर्थैः प्रियं कृतम् आत्मनः ॥८७॥ hari

U

अपि च ।

वरं विभवहीनेन । प्राणैः संतर्पितो ऽनलः ।
नोपकारपरिभ्रष्टः । कृपणो ऽभ्यर्थितो जनः ॥८८॥
वरं पर्वतदुर्गेषु । भ्रान्तं वनचरैः सह ।
न तु दीनाक्षरं वाच्यं । देहीति कृपणं वचः ॥८९॥

अथ चैवं गते केन नामान्योपायेन जीवितं स्यात् । किं चौर्येण । तद् अपि परस्वादानात् कष्टतरम् । यत्कारणम् ।

वरं मौनं नित्यं न च वचनम् उक्तं यद् अनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवाक्येष्व् अभिरतिर्
वरं भिक्षार्थित्वं न च परधनास्वादनमतिः ॥९०॥ Śikha

अथवा किं परपिण्डेनात्मानं पोषयामि । तद् अपि कष्टं भोः कष्टम् । एतद् अपि द्वितीयं मृत्युद्वारम् । उक्तं च ।

रोगी चिरप्रवासी । परान्नभोजी परावसथशायी ।
यज् जीवति तन् मरणं । यन् मरणं सो ऽस्य विश्रामः ॥९१॥ ā

तत् सर्वथा तद् एव बृहत्स्फिगपहृतं धनम् आत्मीकरोमि । मया हि तयोर् दुरात्मनोर् उच्छीर्षकसंनिधाने धनपेटिका दृष्टास्ति । तद्वित्तापहारं कुर्वतो मे मृत्युर् अपि श्रेयान् । यतः ।

स्ववित्तहरणं दृष्ट्वा । कातरो यस् तितिक्षते ।
पितरो ऽपि न गृह्णन्ति । तद्दत्तम् उदकाञ्जलिम् ॥९२॥

इति । एवं संप्रधार्य रात्रौ तत्र गत्वा निद्रावशम् उपगतस्य तस्य मया पेटिकायां यावच् छिद्रं कृतम् । तावत् प्रबुद्धो ऽसौ तापसः । ततो जर्जरवंशप्रहारेण तेनाहं शिरसि ताडितः कथंचिद् आयुःसावशेषतया न मृतो ऽस्मि । इति । अथवा ।

प्राप्तव्यम् अर्थं लभते मनुष्यो
*देवो ऽपि तं लङ्घयितुं न शक्तः ।
तस्मान् न शोचामि न विस्मयो मे
यद् अस्मदीयं न हि तत् परेषाम् ॥९३॥ upa

काककूर्मौ पृच्छतः । कथम् एतत् । हिरण्यः कथयति ।

॥ कथा ५ ॥

अस्ति कस्मिंश्चिन् नगरे सागरदत्तो नाम वणिक् । तत्सूनुना रूपकशतेन विक्रीयमाणः पुस्तको गृहीतः । तस्मिंश् च लिखितम् अस्ति ।

प्राप्तव्यम् अर्थं लभते मनुष्यः ।

इति । तं दृष्ट्वा सागरदत्तेन सूनुः पृष्टः । पुत्र ' कियता मूल्येनैष पुस्तको गृहीतः ' इति । सो ऽब्रवीत् । रूपकशतेन । तच् छ्रुत्वा सागरदत्तो ऽब्रवीत् । धिग् मूर्ख ' लिखितैकश्लोकपादं पुस्तकं रूपकशतेन यद् गृह्णासि ' एतया बुद्ध्या कथं द्रव्यस्योपार्जनं करिष्यसि । अद्यप्रभृति त्वया मम गृहे न प्रवेष्टव्यम् । एवं निर्भर्त्स्य गृहान् निर्वासितः ।

स च तेन निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा किम् अपि नगरम् आश्रित्यावस्थितः । अथ कतिपयदिवसैस् तन्नगरनिवासिना केनचिद् असौ पृष्टः । कुतो भवान् आगतः ' किंनामधेयो वा ' इति । असाव् अब्रवीत् ।

प्राप्तव्यम् अर्थं लभते मनुष्यः ।

इति । अथान्येनापि पृष्टस् तथैवाब्रवीत् । एवं यः कश्चित् पृच्छति ' तस्येदम् एवोत्तरं वितरति । एवं च तस्य प्राप्तव्यमर्थम् इति प्रसिद्धं नाम जातम् ।

अथ राजकन्या चन्द्रमती नामाभिनवयौवनरूपसंपन्ना सखीद्वितीयैकस्मिन् दिवसे नगरं निरीक्षमाणा तिष्ठति । तत्रैव कश्चिद् राजपुत्रो ऽतीव रूपसंपन्नो मनोरमश् च तस्याः कथम् अपि दैववशाद् दृष्टिगोचरे गतः । तद्दर्शनसमकालम् एव कुसुमबाणबाणाहतया तया निजसख्य् अभिहिता । हले ' यथा किलानेन सह समागमो भवति ' तथाद्य त्वया यतितव्यम् । एवं श्रुत्वा सखी शीघ्रं तत्सकाशं गत्वाब्रवीत् ' यद् अहं चन्द्रमत्या त्वदन्तिकं प्रेषिता । भणितं च त्वां प्रति तया ' यन् मम त्वद्दर्शनान् मनोभवेन पश्चिमावस्था कृता । तद् यदि शीघ्रं मदन्तिकं न *समेष्यसि ' तदा मे मरणम् एव । इति श्रुत्वा तेनाभिहितम् । यद्य् अवश्यं मया तत्रागन्तव्यम् ' तत् कथय ' केनोपायेन प्रवेष्टव्यम् । अथ सख्याभिहितम् । रात्रौ सौधोत्सङ्गावलम्बितया दृढवरत्रया त्वया तत्रारोढव्यम् । सो ऽब्रवीत् । यद्य् एवं निश्चयो भवत्याः ' तद् अहम् एवं करिष्यामि । इति निश्चित्य सखी चन्द्रमतीसकाशं गता । अथागतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत् ।

गुरोः सुतां मित्रभार्यां ' स्वामिसेवकगेहिनीम् ।
यो गच्छति पुमांल् लोके ' तम् आहुर् ब्रह्मघातकम् ॥ ९४ ॥

अपरं च ।

अयशः प्राप्यते येन ' येन चाधोगतिर् भवेत् ।
स्वार्थाच् च भ्रश्यते येन ' तत् कर्म न समाचरेत् ॥ ९५ ॥

ति सम्यग् विचार्य स न·तत्सकाशं जगाम । अथ प्राप्तव्यमर्थः र्यटन् धवलगृहपार्श्वे रात्राव् अवलम्बितवरत्रां दृष्ट्वा *कौतुकाद् ृष्टहृदयस् ताम् अवलम्ब्याधिरूढः । तया च राजपुत्र्या ' स एवायम् ' इत्य् आश्वस्तचित्तया स्नानखाद्यपानाच्छादनादिना संमान्य तेन सह शयनतलम् आश्रितया तदङ्गसङ्गसंजातहर्षरोमाञ्चितगात्रयोक्तम् । युष्मद्दर्शनमात्रानुरक्तया मयात्मा तुभ्यं प्रदत्तः । ममान्यो भर्ता मनसापि न भविष्यति ' इति ज्ञात्वा किं मया सह न ब्रवीषि । सो ऽब्रवीत् ।

प्राप्तव्यम् अर्थं लभते मनुष्यः ।

इति । अथ तद् आकर्ण्य स्तम्भितहृदयया त्वरिततरं वरत्रयावतारितः । स तु गत्वा खण्डदेवकुले प्रसुप्तः । अथ तत्र कयाचित् स्वैरिण्या दत्तसंकेतको यावद् दण्डपाशिकः प्राप्तः ' तावद् असौ पूर्वसुप्तस् तेन दृष्टः ' रहस्यसंरक्षणार्थम् अभिहितश् च । को भवान् । सो ऽब्रवीत् ।

प्राप्तव्यम् अर्थं लभते मनुष्यः ।

इति श्रुत्वा दण्डपाशिकेनाभिहितम् । शून्यं देवगृहम् इदम् । तद् अत्र मदीयशयने गत्वा स्वपिहि । तथा प्रतिपद्य स मतिविपर्यासाद् अन्यशयने सुप्तः । अथ तस्यारक्षकस्य बृहत्कन्यका विनयवती नाम रूपयौवनसंपन्ना कस्यापि पुरुषस्यानुरक्ता संकेतकं दत्त्वा तत्र शयने सुप्तासीत् । अथ सा तम् आगतं दृष्ट्वा ' स एवायम् अस्मद्वल्लभः ' इति रात्रौ घनतरान्धकारव्यामोहितोत्थाय गान्धर्वविवाहेनात्मानं विवाहयित्वा तेन समं शयने स्थिता विकसितनयनवदनकमला तम् आह । किम् अद्यापि मया सह विश्रब्धं भवान् न ब्रवीति । सो ऽब्रवीत् ।

प्राप्तव्यम् अर्थं लभते मनुष्यः ।

इति श्रुत्वा तया चिन्तितम् । यत् कार्यम् असमीक्षितं क्रियते । तस्येदृक्फलपाको भवति ।

एवं विमृश्य सविषादया तया निर्भर्त्स्य निःसारितो ऽसौ यावद् वीथीमार्गेण गच्छति । तावद् अन्यविषयवासी वरकीर्तिनामवरो महता वाद्यशब्देनागच्छति । प्राप्तव्यमर्थो ऽपि तैः सह गन्तुम् आरब्धः । अथ यावत् प्रत्यासन्ने लग्नसमये राजमार्गासन्नश्रेष्ठिगृहद्वारि रचितमण्डपवेदिकायां कृतकौतुकमङ्गलवेषा वणिक्कन्या तिष्ठति । तावन् मदमत्तो हस्त्य् आरोहकं हत्वा प्रणश्यज्जनकोलाहलेन लोकम् आकुलयंस् तम् एवोद्देशं संप्राप्तः । तं च दृष्ट्वा सर्वे वरानुयायिनो वरेण सह प्रणश्य दिशो जग्मुः । अथास्मिन्न् अवसरे भयतरललोचनाम् एकाकिनीं कन्याम् अवलोक्य । मा भैषीः । अहं ते परित्राता । इति सुधीरं स्थिरीकृत्य दक्षिणपाणौ संगृह्य महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर् हस्तिनं निर्भर्त्सितवान् । कथम् अपि दैववशाद् अपयाति हस्तिनि यावत् ससुहृद्बान्धवो वरकीर्तिर् अतिक्रान्ते लग्नसमये समागच्छति । तावद् वधूर् अन्येन हस्ते गृहीता तिष्ठति । तं दृष्ट्वा वरकीर्तिनाभिहितम् । भोः श्वशुर । विरुद्धम् इदं त्वयानुष्ठितम् । यन् मह्यं प्रदाय कन्यान्यस्मै प्रदत्ता । इति । सो ऽब्रवीत् । भोः । अहम् अपि *हस्तिभयपलायितो भवद्भिः सहायातो न जाने । किम् इदं वृत्तम् । इत्य् अभिधाय दुहितरं प्रष्टुम् आरब्धः । वत्से । न त्वया सुन्दरं कृतम् । तत् कथ्यताम् । को ऽयं वृत्तान्तः । साब्रवीत् । अहम् एतेन प्राणसंशयाद् रक्षिता । तद् एनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं *ग्रहीष्यति । अनेन वार्ताव्यतिकरेण रजनी व्युष्टा ।

अथ प्रातः संजातमहाजनसमवाये तं वार्त्ताव्यतिकरं श्रुत्वा राजदुहिता तम् उद्देशम् आगता । कर्णपरंपरया श्रुत्वा दण्डपाशिकदुहितापि तत्रैवाजगाम । अथ तं महाजनसमवायं श्रुत्वा राजापि स्वयं तत्रैवागतः प्राप्तव्यमर्थं प्रत्य् आह । विश्रब्धं कथय । कीदृशो ऽसौ वृत्तान्तः ' इति । सो ऽब्रवीत् ।

प्राप्तव्यम् अर्थं लभते मनुष्यः ।

अथ राजकन्या स्मृत्वाब्रवीत् ।

देवो ऽपि तं लङ्घयितुं न शक्तः ।

ततो दण्डपाशिकदुहिताब्रवीत् ।

तस्मान् न शोचामि न विस्मयो मे ।

तद् अखिलम् आकर्ण्य वणिग्दुहिताब्रवीत् ।

यद् अस्मदीयं न हि तत् परेषाम् ।

अथ राजा तेषां सर्वेषाम् अप्य् अभयप्रदानं दत्त्वा पृथक् पृथग् वृत्तान्ताञ् ज्ञात्वावगततत्त्वस् तस्मै स्वदुहितरं सबहुमानं ग्रामसहस्रेण सह पुनर् दत्त्वा ' अपुत्रो ऽस्मि ' इति यौवराज्ये तम् अभिषिक्तवान् । सो ऽपि स्वगोत्रेण सह विविधभोगान उपभुञ्जानः सुखेनावस्थितः ॥

अतो ऽहं ब्रवीमि । प्राप्तव्यम् अर्थं लभते मनुष्यः ' इत्यादि ।
पुनर् अपि हिरण्यो ऽब्रवीत् । सो ऽहम् एवं विचिन्त्य धनव्यामोहात् प्रतिनिवृत्तः । सुष्ठु खल्व् इदम् उच्यते ।

ज्ञानं चक्षुर् न तु दृक् ' शीलं सुकुलीनता न कुलजन्म ।
संतोषश् च समृद्धिः ' पाण्डित्यम् अकार्यविनिवृत्तिः ॥९६॥

तथा ।

सर्वाः संपत्तयस् तस्य । संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य । ननु चर्मावृतैव भूः ॥९७॥
न योजनशतं दूरं । वाह्यमानस्य तृष्णया ।
संतुष्टस्य करप्राप्ते । ऽप्य् अर्थे भवति नादरः ॥९८॥
तृष्णे देवि नमस् तुभ्यं । धैर्यविप्लवकारिणि ।
विष्णुस् त्रैलोक्यनाथो ऽपि । यत् त्वया वामनीकृतः ॥९९॥
न ते किंचिद् अकर्तव्यम् । अपमानकुटम्बिनि ।
*आस्वादयसि यत् तृष्णे । दाक्षिण्यसहितान् अपि ॥१००॥
*असह्यान्य् अपि सोढानि । गदितान्य् अप्रियाण्य् अपि ।
स्थितः परगृहद्वारि । तृष्णे निवृत्तिम् आप्नुहि ॥१०१॥

अपि च ।

पीतं दुर्गन्धि तोयं कुशलवरचिते स्रस्तरे चापि सुप्तं
सोढः कान्तावियोगो निजजठररुजा दीनम् उक्तं परेषाम् ।
पद्भ्यां यातं पयोधेस् तरणम् अपि कृतं धारितं कर्परार्धं
तृष्णे कर्तव्यम् अन्यद् भवति यदि हते क्षिप्रम् आदिश्यतां तत् ॥१०२॥ srag

हेतुप्रमाणयुक्तं । वाक्यं न श्रूयते दरिद्रस्य ।
अगुणं परुषम् अनर्थं । वाक्यं श्रव्यं समृद्धस्य ॥१०३॥ ār
धनवान् दुष्कुलीनो ऽपि । लोके पूज्यतमो नरः ।
शशिनस् तुल्यवंशो ऽपि । निर्धनः परिभूयते ॥१०४॥
गतवयसाम् अपि पुंसां । येषाम् अर्था भवन्ति ते तरुणाः ।
अर्थेन तु हीना ये । वृद्धास् ते यौवने ऽपि स्युः ॥१०५॥ ār

त्यजन्ति मित्राणि धनेन हीनं
पुत्राश् च दाराश् च सहोदराश् च ।
तम् अर्थवन्तं पुनर् एव यान्ति
ह्य् अर्थो ऽत्र लोके पुरुषस्य बन्धुः ॥१०६॥

एवम् अवधार्य स्वभवनम् अहं गतो यावत् । तावद् अत्रान्तर एष लघुपतनको ममान्तिकम् आगत्य पृष्टवान् इहागमनाय । सो ऽहम् अनेनैव सार्धं भवत्सकाशम् आगतः । तद् एतद् भवतां निर्वेदकारणम् आख्यातम् ।

साधु चेदम् उच्यते ।

समृगोरगमातङ्गं । सदेवासुरमानवम् ।
आ मध्याह्नात् कृताहारं । भवतीह जगत्त्रयम् ॥१०७॥
कृत्स्नाम् अपि धरां जित्वा । कष्टां प्राप्याथवा दशाम् ।
वेलायां भोक्तुकामस्य । लभ्या तण्डुलसेतिका ॥१०८॥
तस्याः कृते बुधः को नु । कुर्यात् कर्म विगर्हितम् ।
यस्यानुबन्धात् पापिष्ठां । नरो निष्ठां प्रपद्यते ॥१०९॥

तच् च श्रुत्वा मन्थरकः समाश्वासयितुम् आरब्धः । भद्र । नाधृतिः कार्या । यत् स्वदेशपरित्यागः कृतः । इति । तद् बुध्यमानो ऽप्य् अकार्ये किं मुह्यसि । अपि च ।

शास्त्राण्य् अधीत्यापि भवन्ति मूर्खा
यस् तु क्रियावान् पुरुषः स विद्वान् ।
संचिन्तितं त्व् औषधम् आतुरं हि
किं नाममात्रेण करोत्य् अरोगम् ॥११०॥
को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तम् एव कुरुते बाहुप्रतापार्जितम् ।
यद् दंष्ट्रानखलाङ्गलप्रहरणः सिंहो वनं गाहते
तस्मिन्न् एव हतद्विपेन्द्ररुधिरैस् तृष्णां छिनत्त्य् अर्थिनाम् ॥१११॥

तत् । भद्र । नित्यम् उद्यमपरैर् भाव्यम् । क्व धनं भोगा वा यास्यन्ति । यतः ।

निपानम् इव मण्डूकाः । सरः पूर्णम् इवाण्डजाः ।
सोद्योगं स्वयम् आयान्ति । सहायाश् च धनानि च ॥११२॥

अथवा । उत्साहसंपन्नम् अदीर्घसूत्रं
*क्रियाविधिज्ञं व्यसनेष्व् असक्तम् ।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं मार्गति वासहेतोः ॥ ११३ ॥ upa

अथवा । अकृपणम् अशठम् अचपलं । योगिनम् अविषादिनं बुधं शूरम् ।
यदि नाश्रयति नरं श्रीः । श्रीर् एव हि वञ्चिता भवति ॥ ११४ ॥ ār

अपि च । अव्यवसायिनम् अलसं । दैवपरं साहसाच् च परिहीणम् ।
प्रमदेव हि वृद्धपतिं । नेच्छत्य् अवगूहितुं लक्ष्मीः ॥ ११५ ॥ ār

न स्वल्पम् अप्य् अध्यवसायभीरोः
करोति विज्ञानविधिर् गुणं हि ।
अन्धस्य किं हस्ततलस्थितो ऽपि
निवर्तयेद् अर्थम् इह प्रदीपः ॥ ११६ ॥ upa

दातारो ऽप्य् अत्र याचन्ते । हन्तारो ऽप्य् अबलैर् हताः ।
याचितारो न याचन्ते । नराः कर्मविपर्ययात् ॥ ११७ ॥

न चैतन् मन्तव्यं भवता ।
स्थानभ्रष्टा न शोभन्ते । दन्ताः केशा नखा नराः ।
इदं हि कापुरुषव्रतम् । यत्
स्वं स्थानं न परित्यजेत् ॥ ११८ ॥

इति । न हि शक्तिमतां स्वदेशपरदेशयोः कश्चिद् विशेषः । उक्तं च । यतः ।
शूराश् च कृतविद्याश् च । रूपवत्यश् च योषितः ।
यत्र यत्र हि गच्छन्ति । तत्र तत्र कृतालयाः ॥ ११९ ॥

पटुर् इह पुरुषः पराक्रमे
भवति सदा प्रभुर् अर्थसाधने ।
न हि सदृशमतिर् बृहस्पतेः
शिथिलपराक्रम एष निश्चयः ॥ १२० ॥

तद् यद्य् अर्थरहितो भवान् । तथापि प्रज्ञोत्साहसंपन्नो न सामान्यपुरुषतुल्यः । यतः । āpa
विनाप्य् अर्थैर् धीरः स्पृशति बहुमानोन्नतिपदं
परित्यक्तो ऽप्य् अर्थैः परिभवपदं याति कृपणः ।
स्वभावाद् उद्भूतां गुणसमुदयावाप्तिविपुलां
द्युतिं सैंहीं न श्वा कृतकनकमालो ऽपि लभते ॥ १२१ ॥

किं च । उत्साहशक्तियुतविक्रमधैर्यराशिर् śikha
यो वेत्ति गोष्पदम् इवाल्पतरं समुद्रम् ।

वल्मीकशृङ्गसदृशं च सदा नगेन्द्रं
लक्ष्मीः स्वयं तम् उपयाति न दीनसत्त्वम् ॥ १२२ ॥

रं च । नात्युच्चं मेरुशिखरं । नातिनीचं रसातलम् ।
व्यवसायद्वितीयानां । नात्यपारो महोदधिः ॥ १२३ ॥

थवा । सधन इति को मदस् ते । गतविभवः किं विषादम् उपयासि ।
करकलितकन्दुकसमाः । पातोत्पाता मनुष्याणाम् ॥ १२४ ॥

् सर्वथा जलबुद्बुदा इवास्थिराणि यौवनानि धनानि च । यतः ।
मेघच्छाया खलप्रीतिर् । *नवसस्यानि योषितः ।
किंचित्कालोपभोग्यानि । यौवनानि धनानि च ॥ १२५ ॥

द् बुद्धिमता चञ्चलं धनम् आसाद्य दानभोगाभ्याम् एव सफलतां नेयम् । उक्तं च ।
आयासशतलब्धस्य । प्राणेभ्यो ऽपि गरीयसः ।
गतिर् एकैव वित्तस्य । दानम् अन्या विपत्तयः ॥ १२६ ॥

परं च । न ददाति यो न भुङ्क्ते । सति विभवे नैव तस्य तद् वित्तम् ।
कन्यारत्नम् इव गृहे । तिष्ठत्य् अर्थे परस्यैव ॥ १२७ ॥

था च । अतिसंचयलुब्धानां । वित्तम् अन्यस्य कारणे ।
अन्यैः संचीयते यत्नात् । क्षौद्रम् अन्यैश् च पीयते ॥ १२८ ॥

त् सर्वथा *दैवम् एवात्र कारणम् । उक्तं च ।
संग्रामे प्रहरणसंकटे गृहे वा
द्वीपाग्नौ गिरिविवरे महोदधौ वा ।
सर्पैर् वा सह वसताम् उदीर्णवक्त्रैर्
नाभाव्यं भवति न भाविनो ऽस्ति नाशः ॥ १२९ ॥

तद् भवान् यद् अरोगः संतुष्टश् च । स एव परमो लाभः । उक्तं च ।
सप्तद्वीपाधिपस्यापि । तृष्णा यस्य विसर्पिणी ।
दरिद्रः स तु विज्ञेयः । संतुष्टः परमेश्वरः ॥ १३० ॥

किं च । दानेन तुल्यो निधिर् अस्ति नान्यः
संतोषतुल्यं धनम् अस्ति किं वा ।
विभूषणं शीलसमं कुतो ऽस्ति
लाभो ऽस्ति नारोग्यसमः पृथिव्याम् ॥ १३१ ॥

न चैतन् मन्तव्यम् । अर्थच्युतः कथम् अहं वर्तिष्ये । यतो वित्तं हि विनाशि । स्थिरं पौरुषम् । उक्तं च ।
सद्वत् कन्दुकपातं हि । पतत्य् आर्यः पतन्न् अपि ।
कातरस् तु पतत्य् एव । मृत्पिण्डपतनेन हि ॥ १३२ ॥

किं बहुना । श्रूयतां कार्यतत्त्वम् । केचिद् अत्र पुरुषा धनभोगभोगिनः । केचिच् च धनरक्षितार एव भवन्ति । तथा चोक्तम् ।

अर्थस्योपार्जनं कृत्वा । नैवाभाग्यः समश्नुते ।
अरण्यं महद् आसाद्य । मूढः सोमिलको यथा ॥१३३॥

हिरण्य आह । कथम् एतत् । मन्थरकः कथयति ।

## ॥ कथा ६ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने सोमिलको नाम तन्तुवायः । स चानेकरचनारञ्जितानि पार्थिवजनोचितानि वस्त्राणि सदैव विदधाति । परं भोजनाच्छादनाधिका कथम् अपि नार्थमात्रा संपद्यते । ये चान्ये स्थूलवस्त्रसंपादकाः कौलिकाः ' तान् महर्द्धिसंपन्नान् अवलोक्य स्वभार्याम् आह । प्रिये ' पश्यैतान् स्थूलपटकारान् अप्य् उपार्जितधननिकरान् । तद् अधारणकं ममैतन् नगरम् । अतो ऽहम् अन्यत्र यास्यामि । तद्भार्याब्रवीत् । भोः प्रिय ' मिथ्या प्रजल्पितम् इदम् ' यद् अन्यत्र गतानां धनं *भवति । उक्तं च ।

न हि भवति यन् न भाव्यं ' भवति च भाव्यं विनापि यत्नेन ।
करतलगतम् अपि नश्यति ' यस्य च भवितव्यता नास्ति ॥१३४॥ ār

अपरं च ।

यथा धेनुसहस्रेषु ' वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म ' कर्तारम् अनुगच्छति ॥१३५॥

किं च ।

यथा छायातपौ नित्यं ' सुसंबद्धौ परस्परम् ।
एवं कर्म च कर्ता च ' संश्लिष्टाव् इतरेतरम् ॥१३६॥

तस्माद् अत्रैव स्वकर्मनिष्ठस् तिष्ठ । सो ऽब्रवीत् । प्रिये ' न सम्यग् अभिहितम् । व्यवसायं विना कर्म न फलति । उक्तं च ।

यथैकेन न हस्तेन ' तालिका संप्रपद्यते ।
तथोद्यमपरित्यक्तं ' न फलं कर्मणः स्मृतम् ॥१३७॥

तथा च ।

पश्य कर्मवशात् प्राप्तं ' भोज्यकाले च भोजनम् ।
हस्तोद्यमं विना वक्त्रे ' प्रविशेन् न कथंचन ॥१३८॥

किं च ।

उद्यमेन हि सिध्यन्ति ' कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य ' प्रविशन्ति मुखे मृगाः ॥१३९॥

अपरं च ।

स्वशक्त्या कुर्वतः कर्म ' सिद्धिश् चेन् न भवेद् यदि ।
*नोपालभ्यः पुमांस् तत्र ' दैवान्तरितपौरुषः ॥१४०॥

तद् अवश्यं मया देशान्तरं कर्तव्यम् । इत्य् उक्त्वा वर्धमानपुरं गतः । वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनां कृत्वा भूयो ऽपि स्वगृहं प्रति प्रस्थितः ।

अथार्धमार्गे महाटव्यां गच्छतो ऽस्य भगवान् आदित्यो ऽस्तम् उपागतः । तद् असाव् आत्मभयाद् वटवृक्षस्य स्थूलशाखाम् आरुह्य यावत् प्रसुप्तः ' तावन् निशीथे स्वप्ने द्वौ पुरुषौ क्रोधसंरक्तलोचनौ परस्परं जल्पन्तौ शृणोति । तत्रैकः प्राह । भोः कर्तः ' त्वं बहुधा निवारितः ' यथा । अस्य किल सोमिलकस्य भोजनाच्छादनाधिका समृद्धिर् नास्ति । अतो भवता कदाचिद् अपि नाधेया । तत् कथम् अस्य सुवर्णशतत्रयं प्रदत्तम् । स आह । भोः कर्मन् ' अवश्यं मया व्यवसायिनां व्यवसायानुरूपं फलं

देयम् । तस्य च परिणतिस् त्वदायत्ता ' इति । अतस् त्वम् एवापहर ' इति । तच् छ्रुत्वा यावद् असौ प्रबुद्धः सुवर्णग्रन्थिम् अन्वेषयति ' तावद् रिक्तां दृष्ट्वा चिन्तयाम् आस । 'अहो ' मयैतावता कष्टेनोपार्जितं द्रव्यं कथं हेलया गतम् । तद् व्यर्थश्रमो निष्किंचनः कथं स्वपत्न्या मित्राणां वा मुखं दर्शयिष्यामि । इति निश्चित्य भूयो ऽपि वर्धमानपुरं गतः । तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकम् अर्जयित्वा भूयो ऽपि स्वगृहं प्रत्य् अन्यमार्गेण प्रचलितः ।

यावद् अस्तं गच्छति भानुः ' तावत् तम् एव न्यग्रोधम् आसादितवान् । कष्टं भोः कष्टम् ' किम् एवं प्रारब्धं दैवहतकेन । पुनः स एव न्यग्रोधरूपी राक्षसः संप्राप्तः ' इति । एवं चिन्तयन् स्वप्नायमानस् तस्य शाखायां ताव् एव द्वौ पुरुषाव् अपश्यत् । तयोर् एको ऽब्रवीत् । कर्तः ' किं त्वयैतस्य सोमिलकस्य सुवर्णशतपञ्चकं दत्तम् । किं न वेत्सि भवान् ' यद् भोजनाच्छादनाद् ऋते ऽस्याभ्यधिकं किंचिद् एव नास्ति । सो ऽब्रवीत् । भोः *कर्मन् ' मयावश्यं देयं व्यवसायिनाम् । तस्य परिणामस् त्वदायत्तः । तत् किं माम् उपालम्भयसि । तच् छ्रुत्वा यावद् असौ सोमिलको ग्रन्थिम् अन्वेषयति ' तावद् रिक्तां पश्यति । ततश् च परमवैराग्यसंपन्नो व्यचिन्तयत् । अहो ' किं मम धनरहितस्य जीवितेन । तद् अत्र वटवृक्ष आत्मानम् उद्बध्य प्राणत्यागं करोमि ।

एतन् निश्चित्य दर्भमयीं रज्जुं विधाय ग्रीवायां पाशं नियोज्य शाखाम् आसाद्य यावत् तस्यां निबध्यात्मानं निक्षिपति ' तावद् एकः पुमान् आकाशस्थ इदम् आह । भोः सोमिलक ' मा मैवं साहसं कार्षीः । स एवाहं वित्तापहारकः ' यस् ते भोजनाच्छा-

दनाभ्यधिकां वराटिकाम् अपि न सेहे । तद् गच्छ गृहम् । तथा न मे स्याद् व्यर्थं दर्शनम् । तत् प्रार्थ्यतां वरम् अभीष्टम् ' इति । सोमिलक आह । यद्य् एवम् ' तद् देहि मे प्रभूतं धनम् । सोऽब्रवीत् । भद्र ' किं करिष्यसि भोगत्यागरहितेन धनेन । यतो भोजनाच्छादनाभ्यधिको नास्ति ते भोगः । सोमिलक आह । यद्य् अपि भोगो न भवति ' तथापि तद् भवतु । उक्तं च ।

विरूपो ऽप्य् अकुलीनो ऽपि ' सदाश्रितमानसैः ।
सेव्यते च नरो लोकैर् ' यस्य स्याद् वित्तसंचयः ॥१४१॥

तथा च ।

शिथिलौ च सुबद्धौ च ' पततः पततो न वा ।
निरीक्षितौ मया भद्रे ' दश वर्षाणि पञ्च च ॥१४२॥

पुरुष आह । कथम् एतत् । सोऽब्रवीत् ।

॥ कथा ७ ॥

कस्मिंश्चिद् अधिष्ठाने प्रलम्बवृषणो नाम षण्डः प्रतिवसति स्म । स च मदातिरेकात् परित्यक्तयूथो नदीतटानि शृङ्गाभ्यां विदारयन् स्वेच्छया मरकतसदृशानि शष्पाग्राणि भक्षयन् अरण्यचरो बभूव । अथ तत्रैव वने प्रलोभिको नाम शृगालः प्रतिवसति स्म । स भार्यया सह कदाचिन् नदीपुलिने सुखेनोपविष्ट आस्ते । एतस्मिन्न् अन्तरे प्रलम्बवृषणः षण्डो जलपानार्थं तद् एव पुलिनम अवतीर्णः । तस्य तौ प्रलम्बवृषणाव् अवलोक्य शृगाल्या शृगालोऽभिहितः । स्वामिन् ' पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथावस्थितौ । तद् एतौ क्षणेन प्रहरेण वा पतिष्यतः । एवं ज्ञात्वा भवान् अस्य पृष्ठे यातुम् अर्हति । शृगाल आह । प्रिये '

न ज्ञायते ' कदाचिद् एतयोः पतनं भविष्यति वा ' न वा । तत् किं मां वृथा श्रमाय नियोजयसि । अत्रस्थस् तावज् जलार्थम् आगतांस् त्वत्समेतो मूषकान् भक्षयिष्यामि ' मार्गो ऽयं यतस् तेषाम् । अथवास्य पृष्ठे गमिष्यामि ' तद् अत्रान्यः कश्चिद् एत्य स्थानं समाश्रयिष्यति । तद् एतन् न युज्यते कर्तुम् । उक्तं च ।

यो ध्रुवाणि परित्यज्य ' अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति ' अध्रुवं नष्टम् एव च ॥१४३॥

साब्रवीत् । भोः ' कापुरुषस् त्वम् ' यत् किंचिद् अवाप्य संतोषं करोषि । तन् न युक्तम् । पुरुषेण सदैवोद्योगवता विशेषेण भाव्यम् । उक्तं च ।

यत्रोत्साहसमालम्बो ' यत्रालस्यविहीनता ।
नयविक्रमसंयोगस् ' तत्र श्रीर् अखिला ध्रुवम् ॥१४४॥

तथा च ।

न दैवम् इति संचिन्त्य ' त्यजेन् नोद्योगम् आत्मनः ।
अनुद्योगेन नो तैलं ' तिलेभ्यो ऽपि हि जायते ॥१४५॥

यच् च त्वं वदसि ' एतौ पतिष्यतो वा न वा ' इति ' तद् अप्य् अयुक्तम् । उक्तं च ।

कृतनिश्चयिनो वन्द्यास् ' तुङ्गिमा नोपयुज्यते ।
चातकः को वराको ऽयं ' यस्येन्द्रो वारिवाहकः ॥१४६॥

अपरम् ' तावद् अहं मूषकमांसस्यातीव निर्विण्णा । एतौ च मांसपिण्डौ प्रत्यासन्नपतनौ च दृश्येते । तत् सर्वथा नान्यथा कर्तव्यम् ' इति । अथासौ तद् आकर्ण्य मूषकप्राप्तिस्थानं त्यक्त्वा तस्य प्रलम्बवृषणस्य पृष्ठम् अन्वगच्छत् । अथवा साध्व् इदम् उच्यते ।

तावत् स्यात् सर्वकृत्येषु ' पुरुषो ऽत्र स्वयं प्रभुः ।
*स्त्रीणां वाक्याङ्कुशैः कर्णे ' यावन् न ध्रियते बलात् ॥१४७॥

तथा च ।

अकृत्यं मन्यते कृत्यम् ' अगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं ' स्त्रीवाक्यप्रेरितो नरः ॥१४८॥

एवं तस्य पृष्ठतः सभार्यः परिभ्रमंश् चिरकालम् अनयत् । न च तयोः पतनम् अभूत् । ततश् च पञ्चदशे वर्षे निर्वेदात् स भार्याम् आह ।

शिथिलौ च सुबद्धौ च ' पततः पततो न वा ।
निरीक्षितौ मया भद्रे ' दश वर्षाणि पञ्च च ॥१४९॥

तत् पश्चाद् अपि ' नैतयोः पतनं भविष्यति ' इति तम् एव मूषकमार्गम् अनुसरावः ॥

अतो ऽहं ब्रवीमि । शिथिलौ च सुबद्धौ च ' इति । तद् एवं धनवान् सर्वो ऽपि स्पृहणीयो भवति । अतो देहि मे प्रभूतं धनम् । पुरुष आह । यद्य् एवम् ' तद् गच्छ त्वं भूयो ऽपि वर्धमानपुरम् । तत्र द्वौ वणिक्पुत्रौ धनगुप्तभुक्तधनाख्यौ प्रतिवसतः । तयोश् चेष्टितं बुद्ध्वैकस्य स्वरूपं प्रार्थनीयम् । इत्य् उक्त्वादर्शनं गतः । सोमिलको ऽपि विस्मितमना भूयो ऽपि वर्धमानपुरं गतः ।

अथ संध्यासमये परिश्रान्तो धनगुप्तगृहं पृच्छन् कृच्छ्राल् लब्ध्वा प्रविष्टः । अथ तस्य भार्यया पुत्रादिभिश् च निर्भर्त्स्यमानो ऽपि गृहाजिरं प्राप्योपविष्टः । ततश् च भोजनवेलायां भक्तिवर्जितं भोजनं लब्ध्वा तत्रैव सुप्तः । यावन् निशीथे पश्यति ' तावत् ताव् एव द्वौ पुरुषौ मन्त्रयेते । तत्रैको ऽब्रवीत् । भोः

कर्तः ' किं त्वयास्य धनगुप्तस्याधिको व्ययो निर्मितः ' यत् सोमिलकस्यानेन भोजनं प्रदत्तम् । तद् अयुक्तं कृतं त्वया । द्वितीयः प्राह । भोः कर्मन् ' न ममात्र दोषः । मया लाभः क्षतिश् च कर्तव्या ' तत्परिणतिश् च त्वदायत्ता । अथ यावद् असाव् उत्तिष्ठति ' तावद् धनगुप्तस्य विषूचिकादोषेण द्वितीये ऽह्नि खिद्यमानस्योपवासः संजातः ।

ततः सोमिलको ऽपि तद्गृहान् निष्क्रम्य भुक्तधनगृहं गतः । तेनापि चाभ्युत्थानभोजनाच्छादनादिभिर् विहितबहुमानस् तस्यैव गृहे सुखशय्यायां सुष्वाप । ततश् च निशीथे यावत् पश्यति ' तावत् ताव् एव द्वौ पुरुषौ मिथो मन्त्रयेते । तत्रैको ऽब्रवीत् । भोः कर्तः ' अद्यानेन भुक्तधनेन सोमिलकस्योपचारं कुर्वता प्रभूतो व्ययः कृतः । ततः कुतो ऽयम् उद्धारविधिं दास्यति ' यतः सर्वम् अनेन *व्यवहारकगृहाद् आनीतम् अस्ति । स आह । भोः कर्मन् ' मम कृत्यम् एतत् । परिणतिश् च त्वदायत्ता । अथ प्रभाते को ऽपि राजपुरुषो राजप्रसादजं वित्तम् आदाय समायातो भुक्तधनाय सर्वं समर्पयाम् आस ।

तद् दृष्ट्वा सोमिलकश् चिन्तितवान् । संचयरहितो ऽपि वरम् एष *भुक्तधनः ' न पुनर् असौ कदर्यो गुप्तधनः । उक्तं च ।

अग्निहोत्रफला वेदाः ' शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा ' दत्तभुक्तफलं धनम् ॥१५०॥

तद् भगवान् विधाता मां दत्तभुक्तधनं करोतु । न कार्यं मे *धनगुप्ततया । इत्य् उक्ते विधाता तं तथैव कृतवान् ॥

अतो ऽहं ब्रवीमि । अर्थस्योपार्जनं कृत्वा । इति । तत् । भद्र हिरण्य । एवं ज्ञात्वा धनविषये त्वयासंतोषो न कार्यः । उक्तं च ।

संपत्सु महतां चित्तं । भवत्य् उत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ १५१ ॥

किं च । प्राप्तव्यो नियतिबलाश्रयेण यो ऽर्थो
निश्चेष्टः शयनगतो ऽप्य् उपाश्नुते तम् ।
भूतानां महति कृते ऽपि हि प्रयत्ने
नाभाव्यं भवति न भाविनो ऽस्ति नाशः ॥ १५२ ॥ praha

अपरं च । किं चिन्तितेन बहुना । किं वा शोकेन मनसि निहितेन ।
तन् निश्चितं भविष्यति । विधिना लिखितं ललाटे यत् ॥ १५३ ॥ ar

तथा च । द्वीपाद् अन्यस्माद् अपि । मध्याद् अपि जलनिधेर् दिशो ऽप्य् अन्तात् ।
आनीय झट् इति घटयति । विधिर् अभिमतम् अभिमुखीभूतः ॥ १५४ ॥ a

अपरं च । *अघटितघटितं घटयति । सुघटितघटितानि जर्जरीकुरुते ।
विधिर् एव तानि घटयति । यानि पुमान् नैव चिन्तयति ॥ १५५ ॥ ar

अनिच्छन्तो ऽपि दुःखानि । यथेहायान्ति देहिनः ।
सुखान्य् अपि तथा मन्ये । चिन्तादैन्येन को गुणः ॥ १५६ ॥

अपरं च । अन्यथा शास्त्रगर्भिण्या । धिया धीरो ऽर्थम् ईहते ।
*स्वामीव प्राक्तनं कर्म । विदधाति तद् अन्यथा ॥ १५७ ॥

येन शुक्लीकृता हंसाः । शुकाश् च हरितीकृताः ।
मयूराश् चित्रिता येन । स नो वृत्तिं विधास्यति ॥ १५८ ॥

साधु चेदम् उच्यते ।

भग्नाशस्य करण्डपिण्डिततनोर् ग्लानेन्द्रियस्य क्षुधा
कृत्वाखुर् विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस् तत्पिशितेन सत्वरम् असौ तेनैव यातः पथा
स्वस्थास् तिष्ठत दैवम् एव हि नृणां वृद्धौ क्षये चाकुलम् ॥ १५९ ॥ śardu

तद् इति मत्वा श्रेय एव चिन्तनीयम् । तथा चोक्तम् ।

कर्तव्यः प्रतिदिवसं प्रसन्नचित्तैः
स्वल्पो ऽपि व्रतनियमोपवासधर्मः ।
प्राणेषु प्रहरति नित्यम् एव दैवं
भूतानां महति कृते ऽपि हि प्रयत्ने ॥ १६० ॥ praha

तस्मात् सदैव संतोष एव श्रेयान् ।

संतोषामृततृप्तानां । यत् सुखं शान्तचेतसाम् ।
कुतस् तद् धनलुब्धानाम् । इतश् चेतश् च धावताम् ॥ १६१ ॥

अपरं च । क्षान्तितुल्यं तपो नास्ति । न संतोषसमं सुखम् ।
न मैत्रीसदृशं दानं । न धर्मो ऽस्ति दयासमः ॥ १६२ ॥

किं बहुना प्रलपितेन । स्ववेश्मेदं भवतः । निर्वृतेनानुद्विग्नेन च भूत्वा त्वया मया सह प्रीतिपूर्वं कालो ऽतिवाह्यः । तच् चानेकशास्त्रार्थानुगतं मन्थरोक्तं श्रुत्वा लघुपतनको विकसितवदनः परितोषम् उपगतो ऽब्रवीत् । भद्र मन्थरक । साधुर् आश्रयणीयगुणो ऽसि त्वम् । भवता ह्य् एवं कृतहिरण्याभ्युपपत्तौ मम मनसः परमतुष्टिर् उत्पादिता । उक्तं च ।

सुखस्य सारः परिभुज्यते तैर्
जीवन्ति ते सत्पुरुषास् त एव ।
हृष्टाः सुहृष्टैः सुहृदः सुहृद्भिः
*प्रियाः प्रियैर् ये सहिता रमन्ते ॥ १६३ ॥ upa

अपरं च । ऐश्वर्यवन्तो ऽपि हि निर्धनास् ते
व्यर्थश्रमा जीवितमात्रसाराः ।
कृता न लोभोपहतात्मभिर् यैः
सुहृत्स्वयंग्राहविभूषणा श्रीः ॥ १६४ ॥ upa

तद् अनेन हितोपदेशेन दुःखार्णवनिमग्नो ऽसौ भवतैव समुद्धृतः । युक्तं चैतत् ।

सन्त एव सतां नित्यम् । आपदुद्धरणहेतवः ।
गजानां पङ्कमग्नानां । गजा एव धुरंधराः ॥ १६५ ॥

अन्यच् च । श्लाघ्यः स एको भुवि मानवानां
स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा
नाशाविभङ्गाद् विमुखाः प्रयान्ति ॥ १६६ ॥ india

साध्व् इदम् उच्यते ।

किं पौरुषं रक्षति येन नार्तान्
किं वा धनं नार्थिजनाय यत् स्यात् ।
का सा क्रिया या न हितानुबन्धा
किं जीवितं यद् यशसो विरोधि ॥ १६७ ॥ india

अथैवं जल्पतां तेषां चित्राङ्गो नाम कुरङ्गो लुब्धकबाणपातचकितचित्तस् तृषार्तस् तम् उद्देशम् आगतः । आयान्तं च तम् अवलोक्य लघुपतनको वृक्षम् आरूढः । हिरण्यः शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयम् आस्थितः । चित्राङ्गो ऽप्य् आत्मशङ्कया तटनिकट एव स्थितः । अथ लघुपतनक उत्पत्य योजनमात्रं भूमण्डलम् आलोक्य पुनर् वृक्षम् अधिरुह्य मन्थरकम् आहूतवान् । भद्र मन्थरक । एह्य् एहि । न ते कश्चिद् इहावस्थितस्यापायो विद्यते । सुवीक्षितम् एतद् वनं मया कृतम् । केवलं मृगो ऽयम् उदकार्थी ह्रदम् उपगतः । इत्य् उक्ते त्रयो ऽपि तथैव समागताः । अथाभ्यागतवत्सलतया

मन्थरकस् तं मृगम् आह । भद्र । पीयताम् अवगाह्यतां च । प्रधानम् उदकं शीतलं च । तद्वचनम् आधाय चित्राङ्गश् चिन्तयाम् आस । न ममैतेभ्यः सकाशात् स्वल्पम् अपि भयम् अस्ति । कस्मात् । कच्छपस् तावद् उदकगत एव शक्तिमान् । मूषकवायसाव् अपि मृतम् एव भक्षयतः । तद् एतान् अनुसरामि । इति मत्वा तैः सह संगतः । मन्थरकेण च स्वागताभ्युपचारपुरःसरम् अभिहितश् चित्राङ्गः । अपि शिवं भवतः । कथ्यताम् अस्माकम् । कथम् इदं वनगहनम् आगतो ऽसि । इति । अथासाव् अब्रवीत् । निर्विण्णो ऽस्म्य् अनेनाकामविहारित्वेन । अश्ववारैः सारमेयैर् लुब्धकैर् इतश् चेतश् च संनिरुध्यमानो भयान् महता जवेनातिक्रम्य सर्वान् आगतो ऽत्राहम् उदकार्थी । तद् इच्छामि भवद्भिः सार्धं मैत्रीं कर्तुम् । तच् छ्रुत्वा मन्थरक आह । अल्पकाया वयम् । न युज्यते भवतो ऽस्माभिः सह सख्यं कर्तुम् । यतः प्रत्युपकारसमर्थैः सह सख्यं कर्तुम् उचितम् । तच् छ्रुत्वा चित्राङ्गो ऽब्रवीत् ।

वरं नरकवासो ऽपि । विद्वद्भिः सहितो मम ।
न नीचजनसंपर्कः । सुरेन्द्रभुवनेष्व् अपि ॥१६८॥

अल्पकायो ऽनल्पकाय इति । किम् अनेनात्मनिन्दापूर्वकेणाभिहितेन । अथवा युक्तं सत्पुरुषाणाम् ईदृशं वचनं वक्तुम् । तद् अद्यावश्यं भवद्भिर् मया सह सख्यं कर्तव्यम् । एवं चानुश्रूयते ।

कर्तव्यान्य् एव मित्राणि । सबलान्य् अबलानि च ।
हस्तियूथं वने बद्धं । मूषकैर् यद् विमोचितम् ॥१६९॥

मन्थरकः पृच्छति । कथम् एतत् । चित्राङ्गः कथयति ।

## ॥ कथा ८ ॥

अस्ति कश्चिद् *उत्सन्नजनपदगृहदेवतायतनो भूमिप्रदेशः । तत्र पूर्वोषितमूषकाः संजातपुत्रपौत्रदौहित्रादिभिर् भवनभूभागच्छिद्रवसतयो वेश्मप्रतिवेश्मपरंपरया वासं चक्रिरे । एवं च तेषां विविधोत्सवप्रकरणविवाहखाद्यपानादिना परं सौख्यम् अनुभवतां कालो ऽतिवर्तते । अत्रान्तरे गजपतिर् गजसहस्रपरिवृतः पूर्वोपलब्धोदके सरसि स्वयूथेन सहोदकग्रहणाय गन्तुम् आरब्धवान् । अथ गच्छता तेन गजपतिना मूषकावसथानां मध्येन यथाकालो-

पपन्ना मूषकाः संपिष्टवक्त्रनेत्रशिरोग्रीवाः कृताः ' शेषभूताश् च संप्रहारं चक्रिरे । व्यापादिता वयम् एभिर् दुष्टगजैर् गच्छद्भिः । यदि पुनर् एवैत इहागमिष्यन्ति ' ततो बीजशेषा अपि न भविष्यामः । अपि च ।

स्पृशन् अपि गजो हन्ति ' जिघ्रन् अपि भुजंगमः ।
हसन् अपि नृपो हन्ति ' मानयन् अपि दुर्जनः ॥१७०॥

तद् अत्रान्तरे करणीयेनोपायश् चिन्त्यताम् । अथ विचिन्त्योपायं कतिपये ऽपि गतास् तत् सरो गजपतिं प्रणम्य सविनयम् अब्रुवन् । देव ' इतो नातिदूरे पारंपर्यक्रमायातो ऽस्माकम् आवसथः । तत्र पुत्रपौत्रपरंपरया वृद्धिम् उपागताः । तद् भवद्भिर् इहोदकग्रहणार्थम् आगच्छद्भिः सहस्रशो विनाशिता वयम् । यदि पुनस् तेनैव मार्गेण यास्यथ ' ततो बीजावशेषा अपि न भविष्यामः । तद् यद्य् अस्माकम् उपरि कृपास्ति ' ततो ऽन्येन पथा गच्छत ' इति । यत्कारणम् ' अवश्यम् एवास्मद्विधैर् अपि कदाचित् किंचित् प्रयोजनं भविष्यति । तच् च श्रुत्वा यूथपतिः स्वचित्तेनावधार्य ' यथेमे वदन्ति मूषकाः ' तथैव ' नान्यथा ' इति कृत्वा तम् अर्थं प्रतिपन्नवान् । अथ गच्छति काले केनचिद् राज्ञा हस्तिबन्धकपुरुषा हस्तिनां बन्धनाय समादिष्टाः । तैश् च वारिबन्धं कृत्वा सयूथो यूथाधिपतिर् विधृत्य दिनत्रयानन्तरं महत्या रज्ज्वादियन्त्रणया ततः समाकृष्य तस्मिन् एव वने स्थूलस्कन्धवृक्षेषु बद्धः । अथ गतेषु बन्धकपुरुषेषु स एवं चिन्तयति । केन प्रकारेण कस्य वा सकाशान् मे मोक्षो भविष्यति । स्मृत्वा । तान् मूषकान् विहाय नान्यो ऽस्त्य् अस्माकं मोक्षोपायः । ततो गजबन्धनभूमिबहिःस्थितया पूर्वोपलब्धमूषकावसथया निजप-

रिचारकहस्तिन्या मूषकेभ्यो यथावृत्तं निजबन्धनव्यसनं यूथपतिर् आख्यापितवान्। ते च श्रुत्वा प्रत्युपकारकरणार्थं सहस्रशो मिलित्वा तद्यूथसकाशं गताः। दृष्ट्वा च सयूथं यूथपतिं बद्धं यथास्थानं पाशांश् छित्त्वा वृक्षस्कन्धोपरि समारुह्य स्कन्धबन्धरज्जूंश् च खण्डयित्वा बन्धनान् मोचितवन्तः ॥

अतो ऽहं ब्रवीमि। कर्तव्यान्य् एव मित्राणि। इत्यादि। तच् छ्रुत्वा मन्थरकेणाभिहितम्। भद्र। भवत्व् एवम्। मा भैषीः। स्वगृहम् इदं भवतः। तन् निरुद्वेगमनसा यथेष्टम् अत्रोष्यताम्। ततस् तेषां स्वेच्छया कृताहारविहाराणां मध्याह्नसमये विपुलह्रदसमीपे बहलवृक्षच्छायाधस्तात् कृतसमागमानां विविधधर्मार्थादिशास्त्रविचारेण परस्परं प्रीतिपूर्वकं कालो ऽतिवर्तते। युक्तं चैतत्।

काव्यशास्त्रविनोदेन। कालो गच्छति धीमताम्।
व्यसनेन हि मूर्खाणां। निद्रया कलहेन वा ॥१७१॥

किं च। सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकाः।
विनापि संगमं स्त्रीणां। सुधियः सुखम् आप्नुयुः ॥१७२॥

अथ कदाचित् तस्यां नियतवेलायां चित्राङ्गो नायातः। तं चापश्यन्तस् ते तत्कालसमुपजातविपरीतनिमित्तशङ्कितहृदयास् तस्याकुशलं मन्यमाना धृतिं न लेभिरे। ततो मन्थरकहिरण्यौ लघुपतनकं प्रत्य् उक्तवन्तौ। भद्र। अशक्ताव् आवां मन्दगतितया तं प्रियसुहृदम् अन्वेष्टुम्। तद् भवान् एवान्विष्य जानातु। किम् असौ सिंहेन भक्षितः। अथवा दावानलेनावलीढः। उत लुब्धकादिगोचरे पतितः। इति। उक्तं चैतत्।

लीलोद्यानगते ऽपि हि। सहसा पापं विशङ्कते बन्धौ।
किम् उ दृष्टबहूपायप्रतिभयकान्तारमध्यस्थे ॥१७३॥

तत् सर्वथा गत्वा चित्राङ्गवार्त्तां यथावस्थिताम् अन्विष्य शीघ्रम् आगच्छ। तच छ्रुत्वा लघुपतनको नातिदूरे गत्वा पल्वलसमीपे खादिरकीलकावलम्बितदृढकूटपाशपतितं चित्राङ्गं दृष्ट्वा सविषादम् आह। भद्र। कथम् इमाम् आपदं प्राप्तो ऽसि। सो ऽब्रवीत्। मित्र। नायं विलम्बकालः। श्रूयताम् अस्मद्वचनम्। यथा।

प्राणात्यये समुत्पन्ने। यदा स्यान् मित्रदर्शनम्।
द्वयोः सुखप्रदं तच् च। जीवतो ऽपि मृतस्य च ॥१७४॥

तत् क्षन्तव्यम्। यत् किंचिन् मया प्रणयकुपितेन गोष्ठीष्व् अभिहितम्। तथा हिरण्यमन्थरकाव् अपि मद्वचनाद् वाच्यौ।

अज्ञानाज् ज्ञानतो वापि । यद् दुरुक्तम् उदाहृतम् ।
तत् क्षन्तव्यं युवाभ्यां मे । कृत्वा प्रीतिपरं मनः ॥ १७५ ॥

तच् छ्रुत्वा लघुपतनक आह । भद्र । न भेतव्यम् अस्मद्विधेषु मित्रेषु विद्यमानेषु । तद् अहं हिरण्यं गृहीत्वा त्वत्पाशच्छेदनाय द्रुततरम् आगमिष्यामि । एवम् उक्त्वोद्विग्नहृदयो मन्थरकहिरण्यान्तिके गत्वा चित्राङ्गबन्धनस्वरूपं निवेद्य हिरण्यं चञ्च्वा गृहीत्वा पुनश् चित्राङ्गान्तिकम् आगतः । हिरण्यो ऽपि तं तदवस्थम् अवलोक्य सविषादम् आह । भद्र । त्वं सदा शङ्कितहृदयो ज्ञानचक्षुश् चासि । तत् कथम् इदं ते बन्धनव्यसनम् । सो ऽब्रवीत् । वयस्य । किम् अनेन पृष्टेन । बलवद् धि दैवम् । उक्तं च ।

किं शक्यं सुमतिमतापि तत्र कर्तुं
यत्रासौ व्यसनमहोदधिः कृतान्तः ।
रात्रौ वा दिनसमये ऽथवा समग्रे
यो ऽदृश्यः प्रहरति तेन को विरोधः ॥ १७६ ॥ praha

तत् । साधो । त्वम् अभिज्ञो ऽसि नियतिविलसितानाम् । अतो द्रुतं छिन्धि पाशम् । यावत् क्रूरकर्मा व्याधो नेहागच्छति । हिरण्य आह । मयि पार्श्वस्थे न भेतव्यम् । किं च । मम मनसि महान् संतापो वर्तते । तम् अपनयतु भवान् वृत्तान्तकथनेन । प्रज्ञाचक्षुर् असि । कथम् अस्य बन्धनस्य वशम् उपगतः । सो ऽब्रवीत् । यद्य् अवश्यं त्वया श्रोतव्यम् । तद् आकर्णय । यथाहं पूर्वम् अनुभूतबन्धनव्यसनो ऽपि दैववशात् पुनर् बद्धः । सो ऽब्रवीत् । कथय । कथम् अनुभूतपूर्वं *भवता बन्धनव्यसनम् । तत् सर्वं विस्तरतः श्रोतुम् इच्छामि । चित्राङ्गो ऽब्रवीत् ।

## ॥ कथा ९ ॥

पूर्वम् अहं षण्मासजातः शिशुभावात् सर्वेषाम् अग्रतो विहरामि । लीलया च दूरं गत्वा स्वयूथं प्रतिपालयामि । अस्माकं च द्वे गती । ऊर्ध्वा । अञ्जसा च । तयोर् अहम् अञ्जसां वेद्मि । न चोर्ध्वाम् । अथ कदाचिद् विचरन् यावन् मृगगणान् न पश्यामि । तावत् सुतराम् आविग्नहृदयः । क्व ते गताः । इति दिशो विलोकयन् अग्रतः स्थितान् पश्यामि । ते ह्य् ऊर्ध्वगत्या जालं व्यतिक्रम्य सर्वे ऽपि पुरतः स्थित्वा माम् एव *वीक्षमाणास् तिष्ठन्ति । अथोर्ध्वगतेर् अनभिज्ञतयाहं व्याधपाशजालेन

बद्धो यावत् स्वयूथान्तिकम् उपसर्पितुमना जालम् आकर्षामि ' तावद् व्याधेन सर्वतो नद्धो ऽधःशिरा भूमौ निपतितः । गतं च तन् मृगयूथं मयि निराशतया । अथ व्याधेनागत्य ' शिशुर् अयं क्रीडामात्रयोग्यः ' इति संजातमृदुहृदयेनाहं मृत्युना न संयोजितः । विशेषतश् च गृहं नीत्वा राजपुत्रस्य क्रीडनकार्थं प्रदत्तः । स राजपुत्रो ऽपि मां दृष्ट्वा परितुष्टो व्याधस्य पारितोषिकं ददौ ' मां चाभ्यङ्गोद्वर्तनस्नानभोजनगन्धविलेपनसत्कारैर् अपि समुचितमनोहराहारैर् अतर्पयत् । सो ऽहम् अन्तःपुरिकाजनस्य कुमाराणां च कौतुकपराणां हस्ताद् धस्तं गच्छन् ग्रीवानयनकरचरणकर्णाकर्षणादिभिः परिक्लेशितः । अथ कदाचिद् राजपुत्रस्य शयनीयाधःस्थेन प्रावृट्कालसमये सविद्युन्मेघस्तनितं श्रुत्वोत्कण्ठितहृदयेन मया स्वयूथम् अनुस्मृत्येदम् अभिहितम् ।

यथा वातविधूतस्य ' मृगयूथस्य धावतः ।
पृष्ठतो ऽनुगमिष्यामि ' कदैतन् मे भविष्यति ॥१७१॥

अथासौ राजपुत्रः ' केनेदम् अभिहितम् ' इति संत्रस्तहृदयः समन्ताद् अवलोकयन् माम् अपश्यत् । दृष्ट्वा च ' न मानुषेणेदम् अभिहितम् ' किं तु मृगेण ' अत एतद् औत्पातिकम् ' तत् सर्वथा विनष्टो ऽस्मि ' इति मत्वा ग्रहगृहीत इव कथम् अपि प्रस्खलितवासा राजपुत्रो गृहाद् बहिर् निश्चक्राम । भूताधिष्ठितम् इवात्मानं मन्यमानो मान्त्रिकतान्त्रिकादिपुरुषान् महत्यार्थमात्रया प्रलोभ्याभिहितवान् । यो ममेमां रुजम् अपनयति ' तस्माय् अकृशां पूजां करोमि । अहम् अपि तत्रासमीक्ष्यकारिणा जनेन काष्ठेष्टकालगुडप्रहारैर् हन्यमानः ' अनेन किं पशुना व्यापादितेन ' इति वदतायुःशेषतया केनापि साधुना रक्षितः ।

तेन च मद्विकारोपलब्ध्यार्थेन विज्ञप्तो राजपुत्रः । यथा । भद्र । अनेन प्रावृट्कालसमयोत्सुकेन स्वयूथम् अनुस्मृत्येदम् अभिहितम् ।

यथा वातविधूतस्य । मृगयूथस्य धावतः ।
पृष्ठतो ऽनुगमिष्यामि । कदैतन् मे भविष्यति ॥१७८॥

तद् भवतः किम् असंबद्धं ज्वरकारणम् । तच् छ्रुत्वा राजपुत्रो ऽपगतज्वरविकारः पूर्वप्रकृतिम् आपन्नः स्वपुरुषान् एवम् आह । यथा । अमुं मृगं प्रभूतजलेन शिरसि सिक्त्वा तस्मिन्न् एव वने प्रतिमुञ्चध्वम् । तैश् च तथैवानुष्ठितम् ॥

एवम् अनुभूतपूर्वबन्धनो ऽप्य् अहं पुनर् नियतिवशाद् बद्धः । इति । अत्रान्तरे सुहृत्स्नेहाक्षिप्तचित्तो मन्थरकस् तदनुसारेण शर*क्षुण्टकुशावमर्दनं कुर्वाणस् तेषां सकाशम् आगतः । तं चागतं दृष्ट्वा सुतराम् आविग्नहृदयास् ते संजाताः । अथ हिरण्यो मन्थरकम् आह । भद्र । न त्वया शोभनं कृतम् । यत् स्वदुर्गम् अपहायागतः । यत्कारणम् । अशक्तस् त्वं लुब्धकाद् आत्मानं परित्रातुम् । वयं त्व् अगम्यास् तस्य । यत्कारणम् । छिन्ने पाशे संनिकृष्टे लुब्धके ऽयं चित्राङ्गः प्रणश्य यास्यति । लघुपतनको ऽपि वृक्षम् आरोक्ष्यति । अहम् अप्य् अल्पकायत्वाद् दरीविवरम् *अनुप्रवेक्ष्यामि । भवांस् तु तद्गोचरगतः किं करिष्यति । तच् छ्रुत्वा मन्थरकस् तम् आह । मा मैवं वोचस् त्वम् ।

यतः । दयितजनविप्रयोगो । वित्तवियोगश् च कस्य सह्यः स्यात् ।
यदि सुमहौषधकल्पो । वयस्यजनसंगमो न भवेत् ॥१७९॥

तथा च । अविरलम् अप्य् अनुभूताः । शिष्टेष्टसमागमेषु ये दिवसाः ।
*पथ्यटनसंनिभास् ते । जीवितकान्तारशेषस्य ॥१८०॥

सुहृदि निरन्तरचित्ते । गुणिनि कलत्रे प्रभौ च दुःखज्ञे ।
विश्राम्यतीव हृदयं । दुःखस्य निवेदनं कृत्वा ॥१८१॥

तत् । भद्र । औत्सुक्यगर्भा भ्रमतीव दृष्टिः
पर्याकुलं क्वापि मनः प्रयाति ।
वियुज्यमानस्य गुणान्वितेन
निरन्तरप्रेमवता जनेन ॥१८२॥

अपि च । वरं प्राणपरित्यागो । न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो । न भवन्ति भवद्विधाः ॥१८३॥

अत्रान्तरे लुब्धकः शरासनपाणिः समायातः । तस्य पश्यतो ऽपि हिरण्यः पाशं छित्त्वा यथापूर्वव्याहृतविवरं प्रायात् । लघुपतनको वियत्य् उत्पत्यैव गतः । चित्राङ्गो ऽपि वेगेनापक्रान्तः । लुब्धको ऽपि छिन्नपाशं मृगं दृष्ट्वा विस्मितमनाः प्राह । कथं च न मृगाः पाशांश् छिन्दन्ति । ननु दैवान् मृगः पाशच्छेदं कृतवान् । कच्छपं चासंभाव्यां भूमिम् आगतं दृष्ट्वा साधारणचित्तम् अकरोत् । यद्य् अपि दैववशान् मृग इमान् पाशांश् छित्त्वा गतः । तथाप्य् अयं कच्छपः प्राप्तः । उक्तं च ।

उत्पततो ऽप्य् अन्तरिक्षं । गच्छतो ऽपि महीतलम् ।
धावतः पृथिवीं सर्वां । नादत्तम् उपतिष्ठति ॥ १८४ ॥

एवम् अवधार्य क्षुरिकया कुशान् आदाय दृढां रज्जुं कृत्वा चरणाव् आकृष्य कच्छपं सुबद्धं कृत्वा धनुषः कोट्यां रज्जुम् आलम्ब्य लुब्धको यथागतम् एव गन्तुम् आरब्धः । तं च नीयमानं दृष्ट्वा हिरण्यः सविषादम् आह । कष्टं भोः कष्टम् ।

एकस्य दुःखस्य न यावद् अन्तं
गच्छाम्य् अहं पारम् इवार्णवस्य ।
तावद् द्वितीयं समुपस्थितं मे
छिद्रेष्व् अनर्था बहलीभवन्ति ॥ १८५ ॥ indra

क्षते प्रहाराः प्रपतन्ति तीव्रा
अन्नक्षये दीव्यति जाठराग्निः ।
आपत्सु वैराणि समुच्छलन्ति
छिद्रेष्व् अनर्था बहलीभवन्ति ॥ १८६ ॥ upa

यावद् अस्खलितं तावत् । सुखं याति समे पथि ।
स्खलिते च समुत्पन्ने । विषमं च पदे पदे ॥ १८७ ॥

किं च । यन् नम्रं सगुणं चापि । यच् चापत्सु न सीदति ।
धनुर् मित्रं कलत्रं च । दुर्लभं शुद्धवंशजम् ॥ १८८ ॥
यतो ऽत्र कृत्रिमं मित्रं । लभ्यते न स्वभावजम् ।
स्वभावजं हि यन् मित्रं । तद् भाग्यैर् एव लभ्यते ॥ १८९ ॥
न मातरि न दारेषु । न सोदर्ये न चात्मजे ।
विश्रम्भस् तादृशः पुंसां । यादृङ् मित्रे निरन्तरे ॥ १९० ॥
क्षीयते नोपभोगेन । नाप्य् अनार्यैर् विलुप्यते ।
ह्रियते मृत्युनैकेन । मित्रं सद्भावबन्धुरम् ॥ १९१ ॥

तत् किं ममोपर्य् अनवरतम् एवैतद् दैवं प्रहरति । आदौ तावद् अर्थभ्रंशः । दारिद्र्यदोषात् स्वजनपरिभवः । तन्निर्वेदाद् देशपरित्यागः । सुहृद्वियोगश् चेदानीं दैवेन मे जनितः । उक्तं च ।

सत्यं धने न मम नाशगते ऽपि चिन्ता
भाग्यक्रमेण हि धनानि पुनर् भवन्ति ।
*एतत् तु मां दहति नष्टधनाश्रयस्य
यत् सौहृदानि सुजने शिथिलीभवन्ति ॥ १९२ ॥ vasa

अन्यच् च । स्वकर्मसंतानविचेष्टितानि
लोकान्तरं प्राप्य शुभाशुभानि ।
इहैव दृष्टानि मया चलानि
जन्मान्तराणीव दशान्तराणि ॥ १९३ ॥ upa

साधु चेदम् उच्यते ।
कायः संनिहितापायः । संपदः पदम् आपदाम् ।
समागमाः सापगमाः । सर्वम् उत्पादि भङ्गुरम् ॥ १९४ ॥

तत् कष्टं भोः । मित्रवियोगेन हतो ऽहम् । इति किं निजैर् अपि स्वजनैः । उक्तं च ।
शोकारातिभयत्राणं । प्रीतिविश्रम्भभाजनम् ।
केन रत्नम् इदं सृष्टं । मित्रम् इत्य् अक्षरद्वयम् ॥ १९५ ॥

अपि च । स्वच्छानि सौभाग्यनिरन्तराणि
स्नेहैकपाशाहितयन्त्रणानि ।
स केवलं सज्जनसंगतानि
छिनत्त्य् असह्यो मरणप्रवासः ॥ १९६ ॥ upa

तथा च । संगतानि सुबद्धानि । संपदश् च मनोरमाः ।
छिनत्त्य् एकपदे मृत्युर् । वैराणि च मनस्विनाम् ॥ १९७ ॥

तथा च । यदि जन्मजरामरणं न भवेद्
यदि चेष्टवियोगभयं न भवेत् ।
यदि सर्वम् अनित्यम् इदं न भवेद्
इह जन्मनि कस्य रतिर् न भवेत् ॥ १९८ ॥ tota

एवं शोकगर्भं वदति हिरण्यके चित्राङ्गलघुपतनकाव् आक्रन्दमानौ समेत्य मिलितौ । अथ हिरण्यस् *ताव् अब्रवीत् । यावद् अयं मन्थरको ऽस्मच्चक्षुर्गोचरगतः । तावद् एव मोचनोपायः । तद् गच्छ । चित्राङ्ग । त्वम् अस्य व्याधस्यादृश्यो ऽग्रतो गत्वोदकसंनिकृष्टभूप्रदेशे निपत्य मृतरूपम् आत्मानं दर्शय । लघुपतनक । त्वम् अपि *चित्राङ्गशृङ्गपञ्जरान्तरे वितत्य चरणौ नेत्रोत्पाटनच्छद्मनात्मानं दर्शय । असाव् अपि व्याधाधमो ऽवश्यं लोभात् । सारङ्गो ऽयं मृतः । इति तद्ग्रहणार्थं कूर्मं भूम्यां निक्षिप्य तत्र यास्यति । अहम् अप्य् अपक्रान्ते तस्मिन् निमेषमात्रेणैव मन्थरम् आसन्नजलदुर्गाश्रयणाय बन्धनान् मोचयित्वा शरस्तम्बे प्रवेक्ष्यामि । अन्यच् च । पुनर् अभ्याशगते तस्मिंल् लुब्धकाधमे यथा पलायनं क्रियते । तथा यतितव्यम् । तथैवानुष्ठिते प्रयोगे यावल् लुब्धकः पश्यत्य् उदकतीरे मृतप्रायं

सारङ्गम् । वायसेन भक्ष्यमाणं तं च दृष्ट्वा । भूम्यां सहर्षं कच्छपं निक्षिप्य लगुडम् उद्दिश्य धावितवान् । अत्रान्तरे पादशब्देनाभ्याशम् आगतं व्याधं ज्ञात्वा चित्राङ्ग उत्तमं जवम् आस्थाय वनगहनम् अनुप्रविष्टः । लघुपतनको ऽप्य् उड्डीय वृक्षम् आरूढः । कच्छपो ऽपि हिरण्यखण्डितबन्धनरज्जुः सलिलाशयम् अनुप्रविष्टः । हिरण्यको ऽपि हि शरस्तम्बम् आश्रितः । अथ लुब्धको ऽपि तद् इन्द्रजालम् इव मन्यमानः । किम् इदम् । इति विहताशः कच्छपस्थानम् अगच्छत् । पश्यति च तत्राङ्गुलमात्रप्रमाणेन शतशश् छिन्नां बन्धनरज्जुम् । तं च योगिनम् इव कच्छपम् अदृश्यतां गतम् अवगम्य स्वशरीरे ऽपि संशयम् अचिन्तयत् । संक्षुभितहृदयस् तु तस्माद् वनाद् दिशो ऽवलोकयञ् शीघ्रतरम् एव स्वगृहं जगाम । अथ चत्वारो ऽपि ते कल्याणशरीराः पुनर् एकस्थीभूय परस्परं स्नेहेन वर्तमानाः पुनर्जातम् इवात्मानं मन्यमानाः सुखेन तिष्ठन्ति । तस्मात् ।

तिरश्चाम् अपि यत्रेदृक् । संगतं लोकसंमतम् ।
मर्त्यानां तत्र को नाम । विस्मयो ज्ञानशालिनाम् ॥ १९९ ॥

समाप्तं चेदं मित्रसंप्राप्तिर् नाम द्वितीयं तन्त्रम् । यस्यायम् आद्यश्लोकः ।

असाधना वित्तहीना । बुद्धिमन्तो बहुश्रुताः ।
साधयन्त्य् आशु कार्याणि । काकाखुमृगकूर्मवत् ॥ २ ॥



## ॥ अर्हम् ॥

अथेदम् आरभ्यते संधिविग्रहादिसंबन्धं काकोलूकीयं नाम तृतीयं तन्त्रम् । यस्यायम् आद्यश्लोकः ।

न विश्वसेत् पूर्वविरोधितस्य
शत्रोश् च मित्रत्वम् उपागतस्य ।
दग्धां गुहां पश्यत घूकपूर्णां
काकप्रणीतेन हुताशनेन ॥१॥

राजपुत्राः पृच्छन्ति । कथम् एतत् । विष्णुशर्मा कथयति ।

अस्ति दाक्षिणात्ये जनपदे पृथ्वीप्रतिष्ठानं नाम नगरम् । तस्य समीपस्थो महान् अनेकशाखासनाथो न्यग्रोधपादपस् तिष्ठति । तत्र च मेघवर्णो नाम वायसराजो ऽनेककाकपरिवृतः प्रतिवसति स्म । स तत्र विहितावासः कालं नयति । तथान्यो ऽरिमर्दनो नाम महान् उलूको ऽसंख्योलूकपरिवारो गिरिगुहादुर्गाश्रयः प्रतिवसति स्म । अथोलूकराजः पूर्वविरोधवशात् समन्तात् परिभ्रमन् यं कंचिद् वायसम् आसादयति । तं व्यापाद्य गच्छति । एवं नित्याभिगमाच् छनैः शनैः स न्यग्रोधस् तेन समन्ताद् धतवायसः कृतः । अथवा भवत्य् एवम् । उक्तं च । यतः ।

य उपेक्षेत शत्रुं स्वं । प्रचरन्तं यदृच्छया ।
रोगं चालस्यसंयुक्तः । स शनैस् तेन हन्यते ॥२॥

अथान्येद्युः स मेघवर्णः सर्वान् सचिवान् आहूय प्रोवाच । भोः । उत्कटस् तावद् अयम् अस्माकं शत्रुः । उद्यमसंपन्नः कालविच् च । नित्यम् एव निशागमे समेत्यास्मत्पक्षक्षयं करोति । तत् कथम् अस्य प्रतिविधातव्यम् । वयं तावद् रात्रौ न पश्यामः । न च दिवा तस्य दुर्गं विजानीमः । येन गत्वा प्रहरामः । तत् किम् अत्र युज्यते संधिविग्रहयानासनसंश्रयद्वैधीभावानां मध्यात् । अथ ते प्रोचुः । युक्तम् उक्तं स्वामिना । यद् एष प्रश्नः कृतः । उक्तं च ।

अपृष्टेनापि वक्तव्यं । सचिवेनात्र किंचन ।
पृष्टेन तु विशेषेण । वाच्यं पथ्यं महीपतेः ॥ ३ ॥
यः पृष्टो न ऋतं ब्रूते । परिणामसुखावहम् ।
मन्त्री च प्रियवक्ता च । केवलं स रिपुः स्मृतः ॥ ४ ॥

तत् सांप्रतम् एकान्तम् आसाद्य मन्त्रः कर्तुं युज्यते ।

अथ स मेघवर्णो ऽन्वयागतान् उज्जीविसंजीव्यनुजीविप्रजीविचिरजीविनाम्नः पञ्च सचिवान् प्रत्येकं प्रष्टुम् आरब्धः । तद् एषाम् आदौ तावद् उज्जीविनं पृष्टवान् । भद्र । एवं स्थिते किं मन्यते भवान् । स आह । देव । बलवता सह विग्रहो न कार्यः । स च बलवान् कालप्रहर्ता च । तस्मात् संधानीयः । उक्तं च ।

*बलीयसि प्रणमतां । कालेन महताम् अपि ।
संपदो नापगच्छन्ति । प्रतीपम् इव निम्नगाः ॥ ५ ॥

तथा च । सत्यार्यो धार्मिकश् चाढ्यो । भ्रातृसंघातवान् बली ।
अनेकविजयी चैव । संधेयः स रिपुर् भवेत् ॥ ६ ॥
संधिः कार्यो ऽप्य् अनार्येण । विज्ञाय प्राणसंशयम् ।
प्राणैः संरक्षितैः सर्वं । राज्यं भवति रक्षितम् ॥ ७ ॥

तथा च । अनेकयुद्धविजयी । संधानं यस्य गच्छति ।
तत्प्रभावेन तस्याशु । वशं यान्त्य् अरयः परे ॥ ८ ॥
संधिम् इच्छेत् समेनापि । संदिग्धो विजयो युधि ।
न हि सांशयिकं कुर्याद् । इत्य् उवाच बृहस्पतिः ॥ ९ ॥
संदिग्धो विजयो युद्धे । समेनापि हि योधिनाम् ।
उपायत्रितयाद् ऊर्ध्वं । तस्माद् युद्धं समाचरेत् ॥ १० ॥

तथा च । असंदधानो मानान्धः । समेनापि हतो भृशम् ।
आमकुम्भम् इवाभित्त्वा । नावतिष्ठेत शक्तिमान् ॥ ११ ॥
भूमिर् मित्रं हिरण्यं च । विग्रहस्य फलत्रयम् ।
नास्त्य् एकम् अपि यद्य् एषां । विग्रहं न समाचरेत् ॥ १२ ॥
खनन्न् आखुबिलं सिंहः । पाषाणशकलाकुलम् ।
प्राप्नोति नखभङ्गं वा । फलं वा मूषको भवेत् ॥ १३ ॥
तस्मान् न स्यात् फलं यत्र । पुष्टं युद्धं तु केवलम् ।
ततः स्वयं तद् उत्पाद्य । कर्तव्यं न कथंचन ॥ १४ ॥
बलीयसा समाक्रान्तो । वैतसीं वृत्तिम् आश्रयेत् ।
वाञ्छन्न् अभ्रंशिनीं लक्ष्मीं । न भौजंगीं कथंचन ॥ १५ ॥
कुर्वन् हि वैतसीं वृत्तिं । प्राप्नोति महतीं श्रियम् ।
भुजंगवृत्तिम् आपन्नो । वधम् अर्हति केवलम् ॥ १६ ॥

कूर्मसंकोचम् आसाद्य । प्रहारान् अपि मर्षयेत् ।
काले काले च मतिमान् । उत्तिष्ठेत् कृष्णसर्पवत् ॥ १७ ॥

तथा च । बलिना सह योद्धव्यम् । इति मे नास्ति दर्शनम् ।
प्रतिवातं न हि घनः । कदाचिद् उपसर्पति ॥ १८ ॥

अथ तच् छ्रुत्वा संजीविनम् आह । भद्र । तवाभिप्रायम् अपि श्रोतुम् इच्छामि । स आह । देव । न ममैतत् प्रतिभाति । यतः स क्रूरो लुब्धो धर्मरहितः । तत् ते विशेषाद् असंधेयः । उक्तं च ।

*धर्मसत्यविहीनेन । संदध्यान् न कथंचन ।
सुसंधितो ऽप्य् असाधुत्वाद् । अचिराद् याति विक्रियाम् ॥ १९ ॥

तस्मात् । तेन सह योद्धव्यम् । इति मे मतिः । उक्तं च ।

क्रूरो लुब्धो ऽलसो ऽसत्यः । प्रमादी भीरुर् अस्थिरः ।
मूढो योधावमन्ता च । सुखोच्छेद्यो भवेद् रिपुः ॥ २० ॥

अपरम् । तेन पराभूता वयम् । तद् यदि संधानकीर्तनं करिष्यथ । तद् भूयो ऽपि सकोपो बलं करिष्यति । उक्तं च ।

चतुर्थोपायसाध्ये तु । रिपौ सान्त्वम् अपक्रिया ।
स्वेद्यम् आमज्वरं प्राज्ञः । को ऽम्भसा परिषिञ्चति ॥ २१ ॥
शमोपायाः सकोपस्य । तस्य प्रत्युत दीपकाः ।
सुतप्तस्येव सहसा । सर्पिषस् तोयबिन्दवः ॥ २२ ॥

*यच् चैष वदति । बलवान् रिपुः । तद् अप्य् अकारणम् ।

उत्साहशक्तिसंपन्नो । हत्वा शत्रुं लघुर् गुरुम् ।
यथा कण्ठीरवो नागं । सुसाम्राज्यं प्रपद्यते ॥ २३ ॥

अन्यच् च । मायया शत्रवः साध्या । अवध्याः स्वबलेन ये ।
यथा स्त्रीरूपम् आसाद्य । हता भीमेन कीचकाः ॥ २४ ॥

तथा च । मृत्योर् इवोग्रदण्डस्य । राज्ञो यान्ति द्विषो वशम् ।
सर्वे ते हन्तुम् इच्छन्ति । दयालुं रिपवश् च तम् ॥ २५ ॥
प्रयात्य् उपशमं यस्य । तेजस् तेजस्वितेजसा ।
वृथा जातेन किं तेन । मातुर् यौवनहारिणा ॥ २६ ॥
या लक्ष्मीर् नानुलिप्ताङ्गी । वैरिशोणितकुङ्कुमैः ।
कान्तापि मनसः प्रीतिं । न सा धत्ते मनस्विनाम् ॥ २७ ॥
रिपुरक्तेन संसिक्ता । वैरिस्त्रीनेत्रवारिणा ।
न भूमिर् यस्य भूपस्य । का श्लाघा तस्य जीविते ॥ २८ ॥

तच् छ्रुत्वानुजीविनम् अपृच्छत् । भद्र । त्वम् अप्य् आत्माभिप्रायं वद । स आह ।

देव । दुष्टः स बलाधिको निर्मर्यादश् च । तन् न तेन संधिर् विग्रहो वा युक्तः । केवलं यानम् अर्हं स्यात् । उक्तं च । यतः ।

बलोत्कटेन दुष्टेन । मर्यादारहितेन च ।
न संधिर् विग्रहो नैव । विना यानं प्रशस्यते ॥२९॥
द्विधाकारं भवेद् यानं । भये प्राणप्ररक्षणम् ।
एकम् अन्यज् जिगीषोश् च । यात्रालक्षणम् उच्यते ॥३०॥
कार्त्तिके वाथ चैत्रे वा । विजिगीषोः प्रशस्यते ।
यानम् उत्कृष्टवीर्यस्य । शत्रुदेशे न चान्यदा ॥३१॥
अवस्कन्दप्रदानस्य । सर्वे कालाः प्रकीर्तिताः ।
व्यसने वर्तमानस्य । शत्रोश् छिद्रान्वितस्य च ॥३२॥
स्वस्थानं सुदृढं कृत्वा । शूरैश् चाप्तैर् महाबलैः ।
परदेशं ततो गच्छेत् । प्रणिधिव्याप्तम् अग्रतः ॥३३॥
तत्र युक्तं प्रभो कर्तुं । द्वितीयं यानम् अद्य वः ।
न विग्रहो न संधानं । बलिना तेन पापिना ॥३४॥

अपरम् । कार्यकारणापेक्षयापसरणं क्रियते । इति नीतिः । उक्तं च ।

यद् अपसरति मेषः कारणं तत् प्रहर्तुं
मृगपतिर् अतिकोपात् संकुचत्य् उत्पतिष्णुः ।
हृदयनिहितवैरा गूढमन्त्रप्रचाराः
किम् अपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥३५॥ māli

अन्यच् च । बलवन्तं रिपुं दृष्ट्वा । देशत्यागं करोति यः ।
युधिष्ठिर इवाप्नोति । पुनर् जीवन् स मेदिनीम् ॥३६॥

तथा । युध्यते ऽहंकृतिं कृत्वा । दुर्बलो यो बलीयसा ।
स तस्य वाञ्छितं कुर्याद् । आत्मनश् च कुलक्षयम् ॥३७॥

तद् बलवताभियुक्तस्यापसरणसमयो ऽयम् । न संधिविग्रहकालः । इति ।

अथ तस्य वचनम् आकर्ण्य प्रजीविनम् आह । भद्र । त्वम् अप्य् आत्माभिप्रायं वदस्व । इति । सो ऽब्रवीत् । देव । मम संधिविग्रहयानानि त्रीण्य् अपि न प्रतिभान्ति । विशेषतश् च यानम् । यतः ।

नक्रः स्वस्थानम् आसाद्य । गजेन्द्रम् अपि कर्षति ।
स एव प्रच्युतस् तस्माच् । शुनापि परिभूयते ॥३८॥

अन्यच् च । अभियुक्तो बलवता । दुर्गे तिष्ठेत् प्रयत्नवान् ।
तत्रस्थः सुहृदाह्वानं । प्रकुर्वीतात्ममुक्तये ॥३९॥
यो रिपोर् आगमं श्रुत्वा । भयसंत्रस्तमानसः ।
स्वस्थानं संत्यजेत् तत्र । न भूयो ऽपि विशेच् च सः ॥४०॥

निजस्थानस्थितो ऽप्य् एकः । शतं योद्धुं सहो नरः ।
शक्तानाम् अपि शत्रूणां । तस्मात् स्थानं न संत्यजेत् ॥४१॥
तस्माद् दुर्गं दृढं कृत्वा । वीवधासारसंयुतम् ।
यन्त्रप्राकारपरिखाशरादिभिर् अलंकृतम् ॥४२॥
तिष्ठन् यो मध्यगो नित्यं । युद्धाय कृतनिश्चयः ।
जीवन् स लप्स्यते कीर्तिं । मृतः स्वर्गम् अवाप्स्यति ॥४३॥

उक्तं च । बलिनापि न बाध्यन्ते । लघवो ऽप्य् एकसंश्रयात् ।
विपक्षेणापि मरुता । यथैकस्थानवीरुधः ॥४४॥
महान् अप्य् एकको वृक्षः । सर्वतः सुप्रतिष्ठितः ।
प्रसह्यैव हि वातेन । शक्यो धर्षयितुं यतः ॥४५॥
अथ ये संहता वृक्षाः । सर्वतः सुप्रतिष्ठिताः ।
न ते शीघ्रेण वातेन । हन्यन्ते ह्य् एकसंश्रयात् ॥४६॥
एवं मनुष्यम् अप्य् एकं । शौर्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते । हिंसन्ति च ततः परम् ॥४७॥

तस्माद् अप्य् आकर्ण्य चिरंजीविनम् आह । भद्र । त्वम् अप्य् आत्माभिप्रायं वद । सो ऽब्रवीत् । देव । षाड्गुण्यमध्ये मे संश्रयः प्रतिभाति । तत् तस्यानुष्ठानं कार्यम् । उक्तं च ।

यतः । असहायः समर्थो ऽपि । तेजस्व्य् अपि करोति किम् ।
निवाते पतितो वह्निः । स्वयम् एवोपशाम्यति ॥४८॥

तद् अत्रस्थितेनैव त्वया कश्चित् समर्थः समाश्रयणीयः । यो विपक्षप्रतीकारं करोति । यदि पुनस् त्वं स्थानं त्यक्त्वा प्रयास्यसि । तत् को ऽपि न वाङ्मात्रेणापि सहायत्वं करिष्यति । उक्तं च ।

वनानि दहतो वह्नेः । सखा भवति मारुतः ।
स एव दीपनाशाय । कृशे कस्यास्ति गौरवम् ॥४९॥

अथवा नायम् एकान्तः । यद् बलिनं समाश्रयेत् । लघूनाम् अपि संश्रयो रक्षायै भवति । उक्तं च ।

संपातवान् यथा वेणुर् । निबिडो वेणुभिर् वृतः ।
न हि शक्यः समुच्छेत्तुं । दुर्बलो ऽपि तथा नृपः ॥५०॥

यदि पुनर् उत्तमसंश्रयो भवति । तत् किम् उच्यते । उक्तं च ।

महाजनस्य संपर्कः । कस्य नोन्नतिकारकः ।
पद्मपत्रस्थितं वारि । धत्ते मुक्ताफलश्रियम् ॥५१॥

तत् । देव । संश्रयं विना न कश्चित् प्रतीकारो भवति । तस्मात् संश्रयः कार्यः । इति मे ऽभिप्रायः ।

अथैवम् अभिहिते मेघवर्णश् चिरंतनं पितृसचिवं दीर्घदर्शिनं सकलनीतिशास्त्रपारगं

*स्थिरजीव्यभिधानं प्रणम्योवाच। तात। एते यन् मया पृष्टास् तवात्रस्थितस्यापि। तत् परीक्षार्थम्। येन त्वं सकलम् अपि श्रुत्वा यद् उचितम्। तन् मे समादिशसि। तद् यद् युक्तं भवति। तत् समादिश्यताम्। इति। सो ऽब्रवीत्। वत्स। एतैर् अपि नीतिशास्त्राश्रितं सर्वम् अभिहितम्। तच् च युक्तम् एव स्वस्वकाले। परम् एष द्वैधीभावस्य कालः। उक्तं च।

अविश्वासं सदा तिष्ठेत्। संधिना विग्रहेण च।
द्वैधीभावं समाश्रित्य। पापे शत्रौ बलीयसि ॥५२॥

ततः स्वयम् अविश्वस्तैर् लोभं दर्शयद्भिः शत्रुर् विश्वास्य सुखेनोच्छिद्यते। उक्तं च।

उच्छेद्यम् अपि विद्वांसो। वर्धयन्त्य् अरिम् एकदा।
गुडेन वर्धितः श्लेष्मा। यतो निःशेषतां व्रजेत् ॥५३॥

तथा च। स्त्रीणां शत्रोः कुमित्रस्य। पण्यस्त्रीणां विशेषतः।
यो भवेद् एकभावो ऽत्र। न स जीवति मानवः ॥५४॥
कृत्यं देवद्विजातीनाम्। आत्मनश् च गुरोस् तथा।
एकभावेन कर्तव्यं। शेषं भावद्वयाश्रितैः ॥५५॥
एको भावः सदा शस्तो। यतीनां भावितात्मनाम्।
श्रीलुब्धानां न लोकानां। विशेषेण महीभुजाम् ॥५६॥

ततः। द्वैधीभावसंश्रितस् त्वं। स्वस्थाने वासम् आप्स्यसि।
*लोभाश्रयाद् द्रुतं मृत्युः शत्रुम् उच्चाटयिष्यति ॥५७॥

अपरम्। यदि किंचिच् छिद्रं तस्योत्पद्यते। तज् ज्ञात्वा व्यापादयिष्यसि। इति। मेघवर्ण आह। तात। अहम् अविदितसंश्रयस् तस्य। तत् कथं छिद्रं ज्ञास्यामि। स्थिरजीव्य् आह। वत्स। न केवलं स्थानम्। छिद्रम् अपि प्रकटीकरिष्यामि प्रणिधिभिः। यतः।

गन्धेन गावः पश्यन्ति। वेदैः पश्यन्ति ब्राह्मणाः।
चरैः पश्यन्ति राजानश्। चक्षुर्भ्याम् इतरे जनाः ॥५८॥

तथा चोक्तम् अत्र विषये।

यस् तीर्थानि निजे पक्षे। परपक्षे विशेषतः।
आप्तैश् चरैर् नृपो वेत्ति। न स दुर्गतिम् आप्नुयात् ॥५९॥

मेघवर्ण आह। तात। कानि तानि तीर्थानि। कतिसंख्यानि। कीदृशाश् च गुप्तचराः। सर्वं निवेद्यताम्। स आह। अथात्र विषये युधिष्ठिरेण प्रोक्तो नारदः प्रोवाच। यथा। शत्रुपक्षे ऽष्टादश तीर्थानि। स्वपक्षे पञ्चदश। त्रिभिस् त्रिभिर् गुप्तचरैस् तानि ज्ञेयानि। तैश् च स्वपरपक्षौ वश्यौ भवतः। उक्तं च।

रिपोर् अष्टादशैतानि। स्वपक्षे दश पञ्च च।
त्रिभिस् त्रिभिर् अविज्ञातैर्। वेत्सि तीर्थानि चारकैः ॥६०॥

तीर्थशब्देनात्रायुक्तकर्माभिधीयते। तद् यदि कुत्सितं भवति। तत् स्वामिनो ऽपघाताय।

प्रधानं चेद् भवति । तदा नृपस्याभ्युदयाय । तद् यथा । मन्त्रिपुरोहितसेनापतियुवराज-दौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसंनिधातृप्रदेष्ट्रश्वाध्यक्षकोशाध्यक्षगजाध्यक्षपारिषद्ब-लाध्यक्षदुर्गपालप्रोत्कटभृत्याटविकादयः परपक्षे । एतेषां भेदेन रिपुः साध्यते । स्वपक्षे । यथा । देवीजननी*कञ्चुकिमालिकशय्यापालकस्पशाध्यक्षसांवत्सरिकभिषग्जलवाहकताम्बूल-वाहकाचार्याङ्गरक्षकस्थानचिन्ताकरच्छत्रधारविलासिन्यश् च । इति । एतेषां द्वारेण स्वपक्षे विघातः । ततश् च ।

*वैद्यसांवत्सराचार्याः । स्वपक्षे ऽधिकृताश् चराः ।
तथाहितुण्डिकोन्मत्ताः । सर्वं जानन्ति शत्रुषु ॥६१॥

मेघवर्ण आह । तात । किंनिमित्तम् एवं प्राणान्तकरं वैरं वायसोलूकानाम् । स आह । श्रूयताम् ।

॥ कथा १ ॥

कदाचित् पूर्वं हंससारसकोकिलमयूरचातकोलूककपोतपाराप-ततित्तिरचाषभासभारद्वाजकराञ्जिकाश्यामकाष्ठकूटप्रभृति*पक्षिगणैः समेत्य मन्त्रयितुम् आरब्धम् । अस्माकं तावद् वैनतेयः स्वामी । परम् असौ श्रीमन्नारायणपरिचर्यापरवशो ऽस्माकं चिन्तां न करोति । तत् किं तेन वृथास्वामिना ' यो ऽस्माकं पाशबन्धना-दिव्यसनव्याकुलितानां रक्षां न विधत्ते । उक्तं च ।

एको ऽपि को ऽपि सेव्यो यः ' क्षीणं क्षीणं पुनर् नवम् ।
अनुद्विग्नं करोत्य् एव ' सूर्यश् चन्द्रमसं यथा ॥६२॥

अन्यस् तु स्वामी नाममात्रेणैव ' यथाह ।

यो न रक्षति वित्रस्तान् ' पीड्यमानान् परैः सदा ।
जनान् पार्थिवरूपेण ' स कृतान्तो न संशयः ॥६३॥

तथा च ।

षड् इमान् पुरुषो जह्यात् ' भिन्नां नावम् इवाम्भसि ।
अप्रवक्तारम् आचार्यम् ' अनधीयानम् ऋत्विजम् ॥६४॥

अरक्षितारं राजानं ' भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं ' धनकामं च नापितम् ॥६५॥ युग्मम्॥

तच् चिन्तनीयो ऽन्यः कश्चिद् विहंगमानां राजा । अथ तैर् भद्राकारम् उलूकम् अवलोक्य सर्वैर् अभिहितम् । एष कौशिको ऽस्माकं राजा भवतु ' इति । तद् आनीयतां नृपाभिषेकोचितः समस्तवस्तुसंभारसारः । अथानीतेषु तीर्थोदकेषु ' प्रगुणीकृते च चक्राङ्कितासहदेवीप्रभृत्यष्टोत्तरशतमूलिकासंघाते ' स्थिरीकृते च सिंहासने ' वर्तिते च *सप्तद्वीपसमुद्रभूधरविचित्रे धरणीमण्डले ' प्रसारिते च व्याघ्रचर्मणि ' पञ्चपल्लवकुसुमाक्षतापूरितेषु कनककलशेषु ' सज्जीकृतेष्व् अर्घेषु ' पठत्सु वन्दिमुख्येषु ' चतुर्वेदोच्चारणचतुरेषु पठत्सु विप्रेषु ' कलमङ्गलगीतप्रधाने युवतीजने ' सितसिद्धार्थलाजाक्षतरोचनाग्रथितकुसुमशङ्खादिविचित्रे पुरः सज्जीकृते ऽक्षतपात्रे ' उपढौकिते नीराजनादिविधौ ' निनदत्सु मङ्गलतूर्येषु ' यवारकालंकृतवेदिकामध्ये तिष्ठन्तं सिंहासनम् अभिषेकार्थम् उलूको यावत् समलंकरोति ' तावत् कुतो ऽपि क्रूरक्रेङ्कारसंसूचितनिजप्रवेशो वायसस् तं समाजं समाजगाम । अचिन्तयच् च । अहो ' किम् एष सकलपक्षिसमागमो महोत्सवश् च । अथ ते पक्षिणस् तं दृष्ट्वा मिथः प्रोचुः । अयं पक्षिणां मध्ये ऽतिचतुरः श्रूयते । तद् अस्यापि वचनसमवायो गृह्यते । उक्तं च ।

नराणां नापितो धूर्तः ' पक्षिणां चैव वायसः ।
चतुष्पदां शृगालस् तु ' श्वेतभिक्षुस् तपस्विनाम् ॥६६॥

अन्यच् च ।

बहुधा बहुभिः सार्धं ' चिन्तिताः सुनिरूपिताः ।
न कथंचिद् विलीयन्ते ' विद्वद्भिर् योजिता नयाः ॥६७॥

इति विचिन्त्य पक्षिणस् तं वायसं प्रत्य् आहुः । भोः ' नास्ति कश्चिद् विहंगमानां राजा । तद् अस्यैवोलूकस्य सकलविहगराज्याभिषेकः समस्तपक्षिभिर् निरूपित आस्ते । तत् त्वम् अपि स्वमतं देहि । समये प्राप्तो ऽसि । अथासौ विहस्य प्राह । भोः ' न युक्तम् एतत् । हंसमयूरकोकिलचकोरचक्रवाकहारीतसारसादिषु प्रधानेषु विद्यमानेष्व् अस्य दिवान्धस्य करालवदनस्य यद् अभिषेकः क्रियते ' तन् न मम मतम् । यतः ।

*वक्रनासं सुजिह्माक्षं ' क्रूरम् अप्रियदर्शनम् ।
अक्रुद्धस्यैदृशं वक्त्रं ' भवेत् क्रुद्धस्य कीदृशम् ॥६८॥

तथा ।

स्वभावरौद्रम् अत्युग्रं ' क्रूरम् अप्रियवादिनम् ।
उलूकं नृपतिं कृत्वा ' का नु सिद्धिर् भविष्यति ॥६९॥

अपरम् ' वैनतेये स्वामिनि सति किम् अनेन प्रयोजनम् । यद्य् अपि गुणवान् भवति ' तथाप्य् एकस्मिन् सति नान्यो भूपः प्रशस्तः । उक्तं च ।

एक एव हितार्थाय ' तेजस्वी पार्थिवो भुवः ।
युगान्त इव भास्वन्तो ' बहवो ऽत्र विपत्तये ॥७०॥

तत् तस्यैव नाम्ना यूयं परेषाम् अगम्याः । उक्तं च ' यतः ।

गुरूणां नाममात्रे ऽपि ' गृहीते स्वामिसंभवे ।
दुष्टानां पुरतः क्षेमं ' तत्क्षणाद् एव जायते ॥७१॥

उक्तं च ।

व्यपदेशेन महतां । सिद्धिः संप्राप्यते परा ।
शशिनो व्यपदेशेन । वसन्ति शशकाः सुखम् ॥७२॥

पक्षिणः पृच्छन्ति । कथम् एतत् । वायसः कथयति ।

॥ कथा २ ॥

*कस्मिंश्चिद् वनोद्देशे चतुर्दन्तो नाम हस्तिराजो ऽनेकगजैः परिवृतः प्रतिवसति स्म । तस्य च गजयूथं परिपालयतः कालो ऽतिवर्तते । अथ कदाचिद् द्वादशवार्षिक्य् अवृष्टिः संजाता । यया तडागह्रदपल्वलसरांसि शोषम् उपगतानि । अथ तैः समस्तगजैः स यूथाधिपतिः प्रोक्तः । देव । पिपासाकुलाः कलभाः केचिन् मृतावस्थाः सन्ति । मृताश् चापरे । तच् चिन्त्यतां कश्चित् पिपासापनयनायोपायः । ततस् तेनाष्टास्व् अपि दिक्षूदकान्वेषणाय वेगचण्डानुचराः प्रेषिताः । अथ ये पूर्वदिग्भागे गताः । तैर् उपलब्धं मुनिनिचयसंनिकृष्टे ऽध्वनि हंससारसकुररकारण्डवचक्रवाकबलाकाजलचरोपशोभितं विविधतरुकुसुमभरावनतशाखाकिसलयनिकरान्वितं पादपैर् अलंकृतोभयतटं पवनतरलतटस्खलितविमलजलोर्मिसंघट्टजायमानफेननिकरोपसेवितपारं गजपतिसलिलावगाहनोत्पतितमधुपनिर्धौतकरटतटच्युतमदसलिलवासितजलं तटरुहतरुदलनिकरातपत्रशतसततनिवारिततरणितापं मज्जत्पुलिन्दयुवतिपृथुजघननितम्बस्तनतटाघातव्यावर्तितवीचिनिचयविरचितगम्भीररवं विमलजलसंपूर्णं प्रोत्फुल्लकमलवनगहनोपशोभितम् । किं बहुना । व्योमैकदेशपरिमाणं चन्द्रसरो नाम सरः । तच् च दृष्ट्वा त्वरिततरम् आगत्य निवेदितं हस्तिराजाय ।

अथ तच् छ्रुत्वा चतुर्दशनस् तैः सह क्रमेण प्राप्तश् चन्द्रसरः। अवतरद्भिश् च तैः समन्तात् सुखावतारे सरसि तत्तटपूर्वकृतालयाः संपिष्टशिरोग्रीवाकरचरणाः सहस्रशः शशकाः कृताः। पीत्वावगाह्य च पयः सपरिवार एव द्विरदपतिर् अपक्रम्य स्ववनगहनम् अनुप्रविवेश। अथ ते हतशेषाः शशकाः परं संप्रहारं चक्रुः। किम् अधुनास्माभिः कर्तव्यम्। दृष्टमार्गाः प्रत्यहम् अमी समागमिष्यन्ति। यावच् च पुनर् इह नायान्ति' तावन् निवारणोपायश् चिन्त्यताम्। अथ तत्र विजयो नाम शशकस् तान् भीतान् प्रपिष्टपुत्रकलत्रबान्धवान् सुदुःखितान् वीक्ष्यानुकम्पयेदम् आह। न भेतव्यं भवद्भिः। न ते पुनर् इहागमिष्यन्ति' इति मे प्रतिज्ञा। यतो मम कर्मसाक्षिणा प्रसादः कृतो ऽस्ति। तच् च श्रुत्वा शिलीमुखो नाम शशकराजो विजयम् अब्रवीत्। भद्र' असंशयम् एतत्। यत्कारणम्।

नीतिशास्त्रार्थतत्त्वज्ञो' देशकालविभागवित्।
विजयः प्रेष्यते यत्र' तत्र सिद्धिर् अनुत्तमा॥७३॥

अपि च।

हितवक्ता मितवक्ता' संस्कृतवक्ता न चापि बहुवक्ता।
अर्थान् विमृश्य वक्ता' स हि वक्ता सर्वकार्यकरः॥७४॥

भवतो बुद्धिप्रागल्भ्यम् उपलभ्य मम दूरस्थस्यापि शक्तित्रयं हस्तिनो ज्ञास्यन्ति' यतः।

दूतं वा लेखं वा' दृष्ट्वाहं नरपतेर् अदृष्टस्य।
जानामि तं नरेन्द्रं' प्राज्ञं प्रज्ञाविहीनं वा॥७५॥

उक्तं च ।

दूत एव हि संदध्याद् । दूतो भिन्द्याच् च संहतान् ।
दूतस् तत् कुरुते कर्म । येन सिध्यन्ति शत्रवः ॥७६॥

त्वयि च गते स्वयम् एवाहं गत इव । इति । यत्कारणम् ।

यद् व्याकरणसंयुक्तं । यच् च मन्येत साधुभिः ।
ब्रूयाद् अनुमतः सर्वम् । अस्मद्वचनम् एव तत् ॥७७॥

किं च ।

अयं दूतार्थसंक्षेपः । प्रत्यर्थनियता गिरः ।
प्रयोजनं क्रियोत्पादि । कियच् छक्येत भाषितुम् ॥७८॥

तत् । भद्र । गम्यताम् । अयम् एव ते द्वितीयः कर्मसाक्षी भवतु । इति ।

अथ स गत्वा पुष्पितकर्णिकारशाखाग्रकिसलयरचितस्रस्तररजःपुञ्जपिञ्जरितशरीरं विद्युत्प्रभापटलसंश्लिष्टसजलजलदसदृशं प्रावृट्कालप्रबलचपलमरीचिविद्युन्निवहसंघट्टगम्भीरभैरवरवं विमलकुवलयपटलदलच्छविं प्रवरभुजगेन्द्राकारसंवेष्टितकरम् ऐरावतसममहिमानं मधुवर्णसुजातस्निग्धोपचितोभयविषाणं कटतटोद्भ्रान्तमदजलसुरभिपरिमलाकृष्टभ्रमरगणगीतरमणीयमुखमण्डलं ताण्डवितकर्णपल्लवानां यूथपतीनां च सहस्रैः परिवृतं तं गजेन्द्रं तस्यैव सरसो ऽभिमुखम् आयान्तं दृष्ट्वा विजयश् चिन्तयाम् आस । अशक्यो ऽनेन सहास्मद्विधानां समागमः । यत्कारणम् ।

स्पृशन् अपि गजो हन्ति । इत्य् उक्तम् एव । (viz. II 170)

तत् सर्वथाप्रधृष्यायां भूमौ संदर्शनम् अस्य प्रयच्छामि । इति विचिन्त्योच्चैस्तरविषमशिलासंघातोपरि स्थित्वाब्रवीत् । द्विरदपते । अपि भवतः शिवम् । तच् छ्रुत्वा सुनिपुणं वीक्ष्य गजपतिर्

ब्रवीत् । को भवान् । शशक आह । दूतो ऽहम् ' इति । स आह । केन भवान् प्रेषितः । दूत आह । भगवता चन्द्रेण । जपतिः पृष्टवान् । कथय कार्यम् ' इति । शशकः कथयति । नात् *एव भवान् ' यथार्थवादिनो दूतस्य न दोषः करणीयः । तमुखा हि राजानः सर्व एव । उक्तं च ।

उद्धृतेष्व् अपि शस्त्रेषु ' बन्धुवर्गवधेष्व् अपि ।
परुषाण्य् अपि जल्पन्तो ' वध्या दूता न भूभुजा ॥७९॥

तो ऽहं भवन्तं चन्द्राज्ञया ब्रवीमि । कथं नाम ' मनुष्य ' आत्मानं रं चापरिच्छिद्य शक्तितः परापकारैर् वर्तितः ' इति । उक्तं च ।

परेषाम् आत्मनश् चैव ' यो ऽविचार्य बलाबलम् ।
कार्यायोत्तिष्ठते मोहाद् ' आपदः स समीहते ॥८०॥

तत् त्वयास्मन्नामप्रसिद्धं चन्द्रसरो ऽन्यायेन धर्षितम् ' तत्र चास्मदीयाङ्कलालितशशकेन्द्रजातीया अस्मत्संरक्षणीयाः शशका व्यापादिताः । तद् एतद् अयुक्तम् । अन्यच् च । किं न ज्ञातवान् असि ' यल् लोके प्रख्यातनामास्मि ' शशाङ्कः ' इति । तत् किं बहुना प्रलपितेन । यदि त्वम् अस्माद् व्यापारान् न निवर्तसे ' ततो ऽस्मत्सकाशान् महान्तम् अनर्थं प्राप्स्यसि ' इति । यदि त्वम् अद्यदिवसाद् आरभ्य निवर्तसे ' तत् ते महान् विशेषो भविष्यति । यत्कारणम् ' अस्मत्सत्कया ज्योत्स्नयाप्यायितशरीरः सपरिवारः सुखेनास्मिन् वने यथेष्टचेष्टं विहरिष्यसि । अन्यथास्मत्कृतरश्मिसंरोधाद् घर्मेण परितापितशरीरः सपरिवारो विनाशम् एष्यसि । इति श्रुत्वा हस्तिराजो ऽतीवक्षुभितहृदयश् चिरं विचिन्त्याब्रवीत् । भद्र ' सत्यम् । मयापकृतं भगवतश् चन्द्रमसः । सो ऽहम् अधुना तेन सह विरोधं न करिष्यामि । तद् आशु

[da]र्शय पन्थानम् ' येनाहं तत्र गत्वा भगवन्तं चन्द्रमसं क्षमयामि । शशको ऽब्रवीत् । आगच्छतु भवान् एकाकी ' येनाहं तं दर्शयामि । इत्य् उक्त्वा चन्द्रसरो गत्वा स्फुरितप्रभामण्डलं रुचिरच्छायं विपुलगगनतलोल्लासितग्रहसप्तर्षितारकागणपरिवृतं संपूर्णकलाकलापाखण्डमण्डलम् उदकप्रतिबिम्बितं रात्रौ चन्द्रमसम् अदर्शयत् । असाव् अपि दृष्ट्वा ' शुचिर् भूत्वा देवताप्रणामं करोमि ' इति पुरुषद्वयबाहुग्राह्यप्रमाणं करम् अम्भसि क्षिप्तवान् । अथ संक्षुभितोदकवशाद् इतश् चेतश् च चक्रारूढ इव भ्रमति चन्द्रमण्डले चन्द्रसहस्रम् अपश्यत् । अथ विजयः सुतराम् उद्विग्नहृदयः प्रतिनिवृत्य हस्तिराजम् अब्रवीत् । देव ' कष्टं कष्टम् । भवता * द्विगुणम् आरोषितश् चन्द्रः । स आह । केन हेतुना भगवांश् चन्द्रो मयि प्रकुपितः । विजयो ऽब्रवीत् । स्पर्शनाद् अस्य पानीयस्य । अथ तच् छ्रुत्वा संलीनकर्णो गजपतिर् अवनितलनतशिरसा प्रणम्य भगवन्तं चन्द्रमसं क्षमयाम् आस ' भूयश् च विजयं प्रत्य् एवम् आह । भद्र ' अशेषकार्येष्व् अपि मद्वचनाद् भगवांश् चन्द्रो ममोपरि प्रसादयितव्यः ' न चाहं पुनर् इहागमिष्यामि ' इति । एवम् उक्त्वा यथागतम् एव प्रायात् ॥

अतो ऽहं ब्रवीमि । व्यपदेशेन महताम् ' इति । अपि च ' क्षुद्रो ऽयं दुरात्मा पापबुद्धिः ' अशक्तश् च प्रजां पालयितुम् । तद् दूरे तावद् अस्माद् रक्षणम् ' यावद् इत एव भयम् अपि संभाव्यते । उक्तं च ।

क्षुद्रम् अर्थपतिं प्राप्य ' कुतो विवदतां सुखम् ।
उभाव् अपि क्षयं प्राप्तौ ' मार्जाराच् छशतित्तिरी ॥ ८१॥

पक्षिण ऊचुः । कथय ' कथम् एतत् । वायस आह ।

॥ कथा ३ ॥

अस्ति ' कस्मिंश्चिद् वृक्षे पुरा स्वयम् अहम् अवसम् । अथ तस्यैव वृक्षस्याधस्तात् तित्तिरिपक्षी प्रतिवसति । तत आवयोर् एकावासगुणाद् अभेद्या प्रीतिर् उत्पन्ना । प्रतिदिनं च कृताहारविहारयोः प्रदोषसमये ऽनेकसुभाषितपुराणादिकथाप्रश्नप्रहेलिकादानादिभिर् विनोदैः कालो ऽतिवर्तते । अथ कदाचिद् अन्यैः पक्षिभिः सह तित्तिरिः पक्वशालिप्रायं कम् अपि देशं प्राणयात्रार्थं गतो वेलायां न समायातः । तद् अहम् अपि तद्वियोगदुःखितश् चिन्तितवान् । अहो ' किम् अद्य मम मित्रं तित्तिरिर् नायातः । तत् किं केनापि पाशेन बद्धो व्यापादितो वा भविष्यति । इति मम व्याकुलितमनसो बहूनि दिनानि व्यतिचक्रमुः । अथ कदाचित् तत्रैव कोटरे ऽस्तसमये शीघ्रगो नाम शशकः प्रविष्टः ' मयापि तित्तिरिसमागमनिराशेन न निवारितः । अथान्यस्मिन् अहनि स तित्तिरिः शालिभक्षणाद् अतीव पीवरतनुः स्वाश्रयं संस्मृत्य तत्रैव समायातः । युक्तं चैतत् ।

न तादृग् जायते सौख्यम् ' अपि स्वर्गे शरीरिणाम् ।
दारिद्र्ये ऽपि हि यादृक् स्यात् ' स्वदेशे स्वगृहे पुरे ॥८२॥

अथासौ कोटरगतं शशकं दृष्ट्वा साक्षेपम् इदम् आह । भो भोः शशक ' न त्वया सुन्दरं कृतम् ' यन् ममावसथे प्रविष्टो ऽसि । तच् छीघ्रम् अपगम्यताम् । सो ऽब्रवीत् । मूर्ख ' किं न ते विदितम् ' यद् उपस्थानमात्रभोग्य एवावासः । तित्तिरिर् अब्रवीत् । यद्य् एवम् ' तर्हि ' प्रातिवेश्मिकाः पृच्छ्यन्ताम् । उक्तं च धर्मशास्त्रे ।

वापीकूपतडागानां ' गृहस्योपवनस्य च ।
सामन्तप्रत्यया सिद्धिर् ' इत्य् एवं मनुर् अब्रवीत् ॥८३॥

तथा च ।

गृहक्षेत्रविवादेषु ' कूपोपवनभूमिषु ।
समुत्पन्ने विवादे तु ' सामन्तात् प्रत्ययो भवेत् ॥८४॥

अथ शशकः प्राह । मूर्ख ' किं त्वया न श्रुतं स्मृतिवचः ' यद् आह ।

प्रत्यक्षं यस्य यद् भुक्तं ' क्षेत्राद्यं दश वत्सरान् ।
प्रमाणं नाक्षराण्य् अत्र ' साक्षी वा तस्य तद् भवेत् ॥८५॥

तथा ' मूर्ख ' त्वया न श्रुतं नारदस्य मतम् ।

मानुषाणां प्रमाणं स्याद् ' भुक्तिर् वै दशवार्षिकी ।
विहगानां तिरश्चां च ' यावद् एव समाश्रयः ॥८६॥

तद् यद्य् अपि तवायम् आश्रयः ' तथापि शून्यः सन् मयाश्रितः । इति मदीय एवायम् । तित्तिरिः प्राह । भोः ' यदि स्मृतिं प्रमाणीकरोषि ' तद् आगच्छ मया सह । स्मार्तान् पृच्छावः । तैर् दत्तं तव मम वा भवतु । तथा ' इति प्रतिपद्य व्यवहारप्रत्ययार्थम् अभिप्रस्थितौ । अहम् अपि कौतुकात् तयोर् एव पृष्ठतो लग्नः ' पश्याम्य् अत्र किं भविष्यति ' इति । अथ नातिदूरं गत्वा शशकस् तित्तिरिम् अपृच्छत् । भद्र ' को नामावयोर् व्यवहारं द्रक्ष्यति । सो ऽब्रवीत् । नन्व् अयं प्रबलमारुतोद्धूतसलिलचलतरङ्गभङ्गसंघट्टजनितकलकलारवाया भगवत्या गङ्गायाः पुलिने गतस् तपोनियमव्रतयोगसंस्थितः सत्त्वजातानुकम्पो दधिकर्णो नाम मार्जारः ' इति । अथ दृष्ट्वा च तं भयप्रणोदितान्तरात्मा शशकः पुनर् अब्रवीत् । अलम् अनेन क्षुद्रेण । उक्तं च ।

न हि विश्वसनीयं स्यात् ' तपश्छद्मस्थिते ऽधमे ।
दृश्यन्ते चैव तीर्थेषु ' *गलवातास् तपस्विनः ॥८७॥

तदुक्तं श्रुत्वा सुखोपायवृत्तिप्रसाधनच्छद्मरूपो दधिकर्णस् तयोः विश्वासनार्थं सुतराम् आदित्याभिमुखो भूत्वा द्विपादावस्थित ऊर्ध्वबाहुर् निमीलितनयनः शुभबुद्ध्या तयोर् वञ्चनार्थम् एवं धर्मदेशनाम् अकरोत् । अहो ' असारो ऽयं संसारः । क्षणभङ्गुराः प्राणाः । स्वप्नसदृशाः प्रियसमागमाः । इन्द्रजालवत् कुटम्बपरिग्रहः । तद् धर्मं मुक्त्वान्या गतिर् नास्ति । उक्तं च ।

यस्य धर्मविहीनानि ' दिनान्य् आयान्ति यान्ति च ।
स लोहकारभस्त्रेव ' श्वसन्न् अपि न जीवति ॥८८॥

तथा च ।

नाच्छादयति कौपीनं ' न दंशमशकापहम् ।
शुनः पुच्छम् इवानर्थं ' पाण्डित्यं धर्मवर्जितम् ॥८९॥

अनु च ।

पुलाका इव धान्येषु ' कूतिका इव पक्षिषु ।
मशका इव मर्त्येषु ' येषां धर्मो न कारणम् ॥९०॥
श्रेयः पुष्पफलं वृक्षाद् ' दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस् तैलं च पिण्याकाच् ' छ्रेयो धर्मश् च मानुषात् ॥९१॥
स्थैर्यं सर्वेषु कृत्येषु ' शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य ' धर्मस्य त्वरिता गतिः ॥९२॥
संक्षेपात् कथ्यते धर्मो ' जनाः किं विस्तरेण वः ।
परोपकारः पुण्याय ' पापाय परपीडनम् ॥९३॥

अथ तस्य तां धर्मदेशनां श्रुत्वा शशक आह । भोस् तित्तिरे । एष नदीतीरे तपस्वी धर्मवादी तिष्ठति । तद् एनं पृच्छावः । तित्तिरिः

प्राह् । ननु स्वभावशत्रुभूतो ऽयम् अस्माकम् । तद् दूरे स्थितौ पृच्छावः । तत उभाव् अपि तं प्रष्टुम् आरब्धौ । भोस् तपस्विन् धर्मदेशक ' आवयोर् विवादो वर्तते । तद् धर्मशास्त्रेणावयोर् निर्णयं देहि । यो हि मिथ्यावादी भवति ' स ते भक्ष्यः ' इति । सो ऽब्रवीत् । भद्रौ ' मा मैवं वदतम् । निर्विण्णो ऽहं नरकमार्ग-प्रदर्शयितुर् हिंसाकर्मणः । उक्तं च ।

अहिंसापूर्वको धर्मो ' यस्मात् सर्वहिते रतः ।
यूकामत्कुणदंशादींस् ' तस्मात् तान् अपि रक्षयेत् ॥९४॥

हिंसकान्य् अपि भूतानि ' यो हिनस्ति स निर्घृणः ।
स याति नरकं घोरं ' किं पुनर् यः शुभानि च ॥९५॥

ते ऽपि ' ये यज्ञकर्मणि पशून् व्यापादयन्ति ' ते ऽपि मुग्धाः रमार्थं श्रुतेर् न जानन्ति । यच् च केनचिद् उक्तम् ' अजैर् ष्टव्यम् ' इति ' तत्राजाः व्रीहयः सप्तवार्षिका उच्यन्ते ' न जायन्ते ' त्य् अन्वर्थबलात् । उक्तं च ।

वृक्षांश् छित्वा पशून् हत्वा ' कृत्वा रुधिरकर्दमम् ।
यद्य् एवं गम्यते स्वर्गे ' नरके केन गम्यते ॥९६॥

तन् नाहं भक्षयिष्यामि । किं त्व् अहं वृद्धो दूराद् युवयोर् भाषा-न्तरं न सम्यक् शृणोमि । तत् कथं जयपराजयं करिष्यामि । एवं ज्ञात्वा *समीपवर्तिनौ भूत्वा मम न्यायं निवेदयतम् ' येन विज्ञा-तविवादपरमार्थं *वचो वदतो मे परलोकबाधा न भवति । उक्तं च ।

मानाद् वा यदि वा लोभात् ' क्रोधाद् वा यदि वा भयात् ।
यो न्यायम् अन्यथा ब्रूते ' स याति नरकं नरः ॥९७॥

तथा च ।

पञ्च पश्वनृते हन्ति ' दश हन्ति गवानृते ।
शतं कन्यानृते हन्ति ' सहस्रं पुरुषानृते ॥९८॥

तस्माद् विश्रब्धौ भूत्वा मम कर्णोपान्तिके स्फुटम् आवेदयतम् । किं बहुना ' तथा तेन क्षुद्रेण तौ विश्वासितौ ' यथा तदन्तिकम् उपगतौ । ततश् च समकालम् एकः पादेनाक्रान्तः ' द्वितीयो दंष्ट्राक्रकचेन । एवं द्वाव् अपि गतप्राणौ भक्षितौ ॥

अतो ऽहं ब्रवीमि । क्षुद्रम् अर्थपतिं प्राप्य ' इत्यादि । तद् भवन्तो ऽप्य् एनं दिवान्धं क्षुद्रम् अधिपतिं कृत्वा * राश्यन्धाः सन्तः शशतित्तिरिमार्गेण यास्यन्ति । इति विचार्य यद् उचितम् ' तद् विधीयताम् । अथ तस्य वचनम् आकर्ण्य ' साध्व् अनेनाभिहितम् ' इत्य् उक्त्वा ' भूयो ऽपि नृपार्थे समेत्यान्योन्यं मन्त्रयिष्यामहे ' इति ब्रुवाणाः सर्वपक्षिणो यथागतं जग्मुः । केवलं भद्रासनोपविष्टो ऽभिषेकाभिमुखो दिवान्धः कृकालिकया सहास्ते ' आह च । कः को ऽत्र ' भोः । किम् अद्याप्य् अभिषेको न क्रियते । इति श्रुत्वा कृकालिकयाभिहितम् । भद्र ' कृतस् ते ऽभिषेकविघ्नोपायो वायसेन ' गताश् च ते विहगा यथेष्टं दिक्षु । केवलम् अयम् एव वायस एकाकी केनापि हेतुना तिष्ठति । तत् त्वरितम् उत्तिष्ठ ' येन त्वां स्वाश्रयं प्रापयामि । तच् छ्रुत्वा सविषादम् उलूकः प्राह । भो दुष्टात्मन् ' किं मया ते ऽपकृतम् ' येन राज्याभिषेको विघ्नितस् त्वया । तद् अद्यप्रभृत्य् आवयोर् वैरम् । उक्तं च ।

रोहति सायकविद्धं ' वनं परशुना हतम् ।
वाचा *दुरुक्तं बीभत्सं ' न प्ररोहति वाक्कृतम् ॥९९॥

अथ कृकालिकया सह तस्मिन् स्वाश्रयं गते वायसो ऽप्य् अचिन्तयत् । अहो । अकारणवैरम् आसादितम् । यद् इदं व्याहृतं मया । उक्तं च ।

अदेशकालज्ञम् अनायतिक्षमं
यद् अप्रियं लाघवकारि चात्मनः ।
यो भाषते कारणवर्जितं वचो
न तद् वचः स्याद् विषम् एव तद् भवेत् ॥१००॥ upa

तथा ।

बलोपपन्नो ऽपि हि बुद्धिमान् नरः
परं नयेन् न स्वयम् एव वैरिताम् ।
भिषग् ममास्तीति विचिन्त्य भक्षयेद्
अकारणे को हि विचक्षणो विषम् ॥१०१॥ vaṃśa

परपरिवादः परिषदि । न कथंचित् पण्डितेन कर्तव्यः ।
सत्यम् अपि तन् न वाच्यं । यद् उक्तम् असुखावहं भवति ॥१०२॥ ār

किं च ।

सुहृद्भिर् आप्तैर् असकृद् विचारितं
स्वयं च बुद्ध्या प्रविचारिताश्रयम् ।
करोति कार्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसां च भाजनम् ॥१०३॥ vaṃśa

एवं विचिन्त्य काको ऽपि ततः स्थानात् प्रायात् ॥

तत् । वत्स । अस्माकम् इत्थं कौशिकैः सहान्वयवैरम् । इति । मेघवर्ण आह । तात । एवं गते किं कृत्यम् अस्माभिः । स प्राह । एवं गते ऽपि षाड्गुण्याद् अपरः स्थूलो ऽभिप्रायो ऽस्ति । तम् अङ्गीकृत्य स्वयम् एवाहं तद्विजयाय यास्यामि । वञ्चयित्वा तान् रिपून् वध्यान् करिष्यामि । उक्तं च ।

बकबुद्धिसमायुक्ताः ' सुविज्ञाना बलोत्कटाः ।
शक्ता वञ्चयितुं धूर्ताश् ' छागकब्राह्मणं यथा ॥१०४॥

मेघवर्ण आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा ४ ॥

कस्मिंश्चिद् अधिष्ठाने मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्रपरिश्रमः प्रतिवसति स्म । तेन कदाचिन् माघमासे प्रवाति सौम्यानिले मेघाच्छादितगगने मन्दं मन्दं वर्षति पर्जन्ये पशुयाचनार्थं किंचिद्ग्रामान्तरं गत्वा कश्चिद् यजमानो याचितः । भो यजमान ' आगामिन्याम् अमावास्यायाम् अहं यक्ष्यामि यज्ञम् । तद् देहि पशुम् एकम् । अथ तेनापि तस्य शास्त्रोक्तः पीवरः पशुर् दत्तः । तम् अपि समर्थम् इतश् चेतश् च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे । अथ तस्य मार्गेण गच्छतस् त्रयो धूर्ताः क्षुत्क्षामकण्ठाः संमुखा बभूवुः । तैश् च तं पीवरपशुं स्कन्धारूढम् अवलोक्य मिथो ऽभिहितम् । अहो ' अस्य पशोर् भक्षणाद् अद्यदिनजो हिमपातो व्यर्थतां नीयते । तद् एनं वञ्चयित्वा पशुम् आदाय शीतत्राणं कुर्मः । अथ तेषाम् एकतमो वेषप्रावर्तनं विधाय संमुखो भूत्वापमार्गेण तम् आहिताग्निम् ऊचे । भो भो अग्निहोत्रिन् ' किम् एवं जनविरुद्धं हास्यकरम् अनुष्ठीयते ' यद् एष सारमेयो ऽपवित्रः *स्कन्धाधिरूढो नीयते । उक्तं च ' यतः ।

श्वानकुक्कुटचाण्डालाः ' समस्पर्शाः प्रकीर्तिताः ।
रासभोष्ट्राविशेषेण ' तस्मात् तान् न तु संस्पृशेत् ॥१०५॥

ततश् च तेन कोपाभिभूतेनाभिहितम् । किम् अन्धो भवान् ' यत् पशोः सारमेयत्वं प्रतिपादयसि । सो ऽब्रवीत् । ब्रह्मन् '

कोपस् त्वया न कार्यः। यथेच्छं गम्यताम्' इति। अथ यावत् किंचिद् अध्वान्तरं गच्छति' तावद् द्वितीयो धूर्तः संमुखम् अभ्येत्योवाच। अहो कष्टं कष्टम्। भगवन्' यद्य् अपि वल्लभो ऽयं ते मृतवत्सः' तद् अपि स्कन्धम् आरोपयितुं न युक्तः। उक्तं च' यतः।

तिर्यञ्चं पुरुषं वापि' यो मृतं संस्पृशेत् कुधीः।
पञ्चगव्येन शुद्धिः स्यात्' तस्य चान्द्रायणेन च ॥१०६॥

अथासौ सकोपम् आह। अहो' किम् अन्धो भवान्' यत् पशुं वत्सं वदसि। सो ऽब्रवीत्। भगवन्' मा कोपं कुरु। अज्ञानान् मयाभिहितम्। तत् त्वम् आत्मरुचितं समाचर' इति। अथ यावत् स्तोकं वनान्तरं गच्छति' तावत् तृतीयो धूर्तो वेषपरिवर्तं कृत्वा संमुखम् उपेत्योवाच। भोः' अयुक्तम् एतत्' यत् त्वं रासभं स्कन्धारूढं नयसि। उक्तं च।

यः स्पृशेद् रासभं मर्त्यस्' त्व् अज्ञानाज् ज्ञानतो ऽपि वा।
सचेलं स्नानम् उद्दिष्टं' तस्य पापस्य शान्तये ॥१०७॥

तत् त्यज्यताम् अयम्' यावद् अन्यः कश्चिन् न पश्यति। अथासौ तं पशुरूपं राक्षसं मत्वा भूमौ प्रक्षिप्य भयाद् गृहम् उद्दिश्य प्रपलायितः। ते ऽपि च त्रयो ऽपि मिलित्वा तं पशुम् आदाय यथाचिन्तितं कृतवन्तः॥

अतो ऽहं ब्रवीमि। बहुबुद्धिसमायुक्ताः। इति। अथवा साध्व् इदम् उच्यते।

अभिनवसेवकविनयैः। प्राघुणकोक्तैर् विलासिनीरुदितैः।
धूर्तजनवचननिकरैर्। इह कश्चिद् अवञ्चितो नास्ति ॥१०८॥

किं च। दुर्बलैर् अपि बहुभिः सह विरोधो न कार्यः। उक्तं च।

बहवो न विरोद्धव्या। दुर्जयो हि महाजनः।
स्फुरन्तम् अपि नागेन्द्रं। भक्षयन्ति पिपीलिकाः ॥१०९॥

मेघवर्ण आह। कथम् एतत्। स्थिरजीवी कथयति।

## ॥ कथा ५ ॥

अस्ति कस्मिंश्चिद् वल्मीके महाकायः कृष्णसर्पो ऽतिदर्पो नाम। स कदाचिद् बिलानुसारमार्गम् उत्सृज्यान्येन लघुद्वारेण निष्क्रमितुम् आरब्धः। निष्क्रामतश् च तस्य महाकायत्वाद् दैववशाच् च लघुविवरतया शरीरे व्रणः समुत्पन्नः। अथ व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश् च। कति व्यापादयति। कति वा ताडयति। अतिप्रभूतत्वाद् विस्तारितबहुव्रणाभिः क्षतसर्वाङ्गो ऽतिदर्पः पञ्चत्वम् उपगतः॥

अतो ऽहं ब्रवीमि। बहवो न विरोद्धव्याः। इति। अपरं च। देव। अस्ति किंचिन् मे वक्तव्यम्। तच् चावधार्य विचार्य चानुष्ठेयम्। मेघवर्ण आह। तात। ब्रूहि। यत् ते हृदि स्थितम्। स्थिरजीव्य् आह। वत्स। आकर्णय। तर्हि। सामादीन् अतिक्रम्य यः पञ्चमोपायो मया निरूपितः। यथा। मां विपक्षीकृत्यातिनिष्ठुरवचनैर् निर्भर्त्स्य विपक्षप्रयुक्त*प्रणिधीनां प्रत्ययार्थम् आहृतरुधिरैर् आलिप्यास्यैव न्यग्रोधस्याधस्तात् प्रक्षिप्य*र्ष्यमूकपर्वते गम्यताम्। तत्रैव च सपरिवारेण भवता स्थातव्यम्। यावद् अहं समस्तान् रिपून् सुप्रणीतेन विधिना विश्वास्य ज्ञाततद्दुर्गमध्यो दिवसान्धान् व्यापादयामि। अनुमानतो ऽपि ज्ञातं मयेदम्। यत् तदीयदुर्गम् अपसाररहितं केवलं भविष्यति। उक्तं च।

अपसारसमायुक्तं। नयज्ञैर् दुर्गम् उच्यते।
अपसारपरित्यक्तं। दुर्गव्याजेन बन्धनम्॥ ११०॥

न च त्वया मां प्रति कृपा कार्या। उक्तं च।

अपि प्राणसमान् इष्टान्। पालितांल् लालितान् अपि।
भृत्यान् युद्धे समुत्पन्ने। पश्येच् छुष्कम् इवेन्धनम्॥ १११॥

तत् त्वयात्र विषये नाहं निषेधनीयः। यतः।

रक्षेद् भृत्यान् यथा प्राणान्। स्वकायम् इव पोषयेत्।
सदैकदिवसस्यार्थे। यत्र स्याद् रिपुसंगमः॥ ११२॥

इत्य् उक्त्वा तेन सह शुष्ककलहं कर्तुम् आरब्धः। अथान्ये तस्य भृत्याः स्थिरजीविनम् उच्छृङ्खलतया राजानं प्रति जल्पन्तम् आलोक्य तद्वधाय समुद्यता मेघवर्णेनाभिहिताः। अहो। अपसर्पत यूयम्। अहम् एवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करि-

ष्यामि । इत्य् अभिधाय तस्योपरि समारुह्य लघुभिश् चञ्चुप्रहारैः प्रहृत्याहतरुधिरालोडितं कृत्वा तदुपदिष्टम् ऋष्यमूकपर्वतं सपरिवारो जगाम ।

एतस्मिन्न् अन्तरे कृकालिकया *शत्रुप्रणिधिभूतया तत् सर्वं मेघवर्णस्यामात्यव्यसनम् उलूकाधिपतेर् गत्वा निवेदितम् । अथोलूकाधिपो ऽपि तद् आकर्ण्यास्तमनवेलायां सपरिवारो वायसवधार्थं कृतप्रयाणकः प्रोवाच । अहो । त्वर्यतां त्वर्यताम् । भीतः शत्रुः पलायनपरः पुण्यैर् लभ्यते । उक्तं च ।

शत्रोः पलायने छिद्रम् । एकम् अन्यत्र संश्रयम् ।
कुर्वाणो जायते वश्यो । व्यग्रत्वे राजसेविनाम् ॥ ११३ ॥

एवं ब्रुवाणाः समन्तान् न्यग्रोधपादपाभिमुखं प्रस्थिताः । यावन् न कश्चिद् वायसो दृश्यते । तावद् वृक्षशाखाम् अधिरुह्य *हृष्टमना वन्दिभिः स्तूयमानो ऽरिमर्दनः प्रोवाच । अहो । ज्ञायते तेषां मार्गक्रमणम् । कतमेन मार्गेण ते नष्टाः । यावद् दुर्गं नाश्रयन्ति । तावद् एव पृष्ठतो गत्वा व्यापादयामि ।

अथैतस्मिन् प्रस्तावे स्थिरजीवी चिन्तयाम् आस । यद्य् एते शत्रवो ऽनुपलब्धास्मद्वृत्तान्ता यथागतम् एव यान्ति । ततो मया न किंचित् कृतं भवति । उक्तं च ।

अनारम्भो हि कार्याणां । प्रथमं बुद्धिलक्षणम् ।
प्रारब्धस्यान्तगमनं । द्वितीयं बुद्धिलक्षणम् ॥ ११४ ॥

तद् वरम् अनारम्भः । न चारम्भविघातः । तद् अहम् एतान् शब्दं संश्राव्यात्मानं दर्शयामि । इति विचार्य मन्दं मन्दं शब्दम् अकरोत् । तं च श्रुत्वा त उलूकास् तद्वधार्थम् अभ्युद्यताः । स्थिरजीविनाभिहितम् । अहो । अहं मेघवर्णमन्त्री स्थिरजीवी नाम मेघवर्णेनैवेदृशीम् अवस्थां नीतः । तन् निवेद्यताम् आत्मस्वामिनः । तेन सह बहु वक्तव्यम् अस्ति । अथ तैर् आवेदित उलूकराजः सविस्मयो बहुव्रणकिणाङ्कितस्य समीपं गत्वा प्रोवाच । भोः । कथम् एतां दशां गतो ऽसि । तत् कथ्यताम् । स्थिरजीवी प्राह । देव । श्रूयताम् । अतीतदिवसे युष्माभिर् व्यापादितान् अनेकवायसान् दृष्ट्वा कोपशोकाकुलमतिः स दुरात्मा मेघवर्णो युष्मद्दुर्गं प्रति चलितः । ततो मयाभिहितम् । न युक्तं भवतस् तं प्रति गन्तुम् । यतो बलवन्त एते । हीनबलाश् च वयम् । उक्तं च ।

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि कुर्यात् ।
न वध्यते ऽत्यन्तबलो हि यस्माद्
एकान्तनाशो ऽस्ति पतङ्गवृत्तेः ॥ ११५ ॥ upa

तत् तस्योपप्रदानेन संधिर् एव युक्तः । तच् छ्रुत्वा दुर्जनजनप्रकोपितेन त्वत्पक्षपातिनं माम् आशङ्कमानेनेयं दशा मे विहिता । तत् तव पादाः सांप्रतं शरणं मे । किं बहुना । यावद् अहं प्रचलितुं शक्तः । तावत् त्वां तस्यावासे नीत्वा सर्ववायसक्षयं विधास्यामि ।

इति श्रुत्वारिमर्दनः पितृपितामहक्रमागतमन्त्रिभिः सार्धं मन्त्रयां चक्रे । तस्य च पञ्च

मन्त्रिणः । तद् यथा । रक्ताक्षः । क्रूराक्षः । दीप्ताक्षः । वक्रनासः । प्राकारकर्णश् च । इति ।

तत्रादौ रक्ताक्षं पृष्टवान् । भद्र । किम् एवं गते कार्यम् । सो ऽब्रवीत् । देव । किम् अत्र चिन्त्यते । अविचारम् अयं हन्तव्यः । यतः ।

हीनः शत्रुर् निहन्तव्यो । यावन् न बलवान् भवेत् ।
संजातपौरुषबलः । पश्चाद् भवति दुर्जयः ॥११६॥

किं च । स्वयम् उपगता श्रीस् त्यज्यमाना शपति । इति लोकप्रवादः । उक्तं च ।

कालो हि सकृद् अभ्येति । यन् नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस् तेन । कालः कर्म *चिकीर्षता ॥११७॥

श्रूयते च । यथा ।

चितिकां दीपितां पश्य । स्फुटां भग्नां ममैव च ।
भिन्नश्लिष्टा तु या प्रीतिर् । न सा स्नेहेन वर्धते ॥११८॥

अरिमर्दन आह । कथम् एतत् । रक्ताक्षः कथयति ।

## ॥ कथा ६ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने को ऽपि ब्राह्मणः । तस्य च कृषिं कुर्वतः सदैव निष्फल एव कालो ऽतिवर्तते । अथैकस्मिन् दिवसे ब्राह्मण उष्णकालावसाने घर्मार्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तः । अनतिदूरे वल्मीकोपरि प्रसारितबृहत्फटाटोपं भीषणं भुजंगमं दृष्ट्वा चिन्तयाम् आस । नूनम् एषा क्षेत्रदेवता मया कदाचिद् अपि न पूजिता । तेनेदं मे कृषिकर्म विफलीभवति । तद् अस्याः पूजाम् अहं करिष्यामि । इत्य् अवधार्य कुतो ऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकम् उपगम्योवाच । भोः क्षेत्रपाल ' मयैतावन्तं कालं न ज्ञातम् ' यत् त्वम् अत्र वससि । तेन पूजा न कृता । तत् सांप्रतं क्षमस्व ' इति । एवम् उक्त्वा दुग्धं च निवेद्य गृहाभिमुखं प्रायात् । अथ प्रातर् यावद् आगत्य पश्यति ' तावद् दीनारम् एकं शरावे दृष्टवान् ।

एवं प्रतिदिनम् एकाकी समागत्य तस्मै क्षीरं ददाति ' एकैक-दीनारं च गृह्णाति । अथैकस्मिन् दिवसे वल्मीके क्षीरानयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामं जगाम । पुत्रो ऽपि तत्र क्षीरं नीत्वा संस्थाप्य च पुनर् गृहं समायातः । दिनान्तरे तत्र गत्वा दीनारम् एकं च दृष्ट्वा चिन्तितवान् । नूनं दीनारपूर्णो ऽयं वल्मीकः । तद् एनं हत्वा सर्वं *ग्रहीष्यामि । एवं संप्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः । कथम् अपि दैव-वशाद् अमुक्तजीव एव रोषात् तम् एव तीक्ष्णाग्रदशनैस् तथा-दशत् ' यथा सद्यः पञ्चत्वम् उपगतः । स्वजनैश् च नातिदूरे क्षेत्रस्य काष्ठसंचयैः संस्कृतः । अथ द्वितीयदिने तस्य पिता समायातः । स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थित-वान् । अब्रवीच् च । ४

भूतान् यो नानुगृह्णाति ' गृह्णाति शरणागतम् ।
भूतार्थास् तस्य नश्यन्ति ' हंसाः पद्मवने यथा ॥११९॥

मानुषैर् उक्तम् । कथम् एतत् । ब्राह्मणः कथयति ।

॥ कथा ७ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने राजा चित्ररथो नाम । तस्य योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस् तिष्ठति । तत्र च प्रभूता जाम्बू-नदमया हंसास् तिष्ठन्ति । षण्मासे षण्मासे पिच्छम् एकैकं त्यजन्ति । अथ तत्र सरसि सौवर्णो बृहत्पक्षी समायातः ' तैश् चोक्तः । अस्माकं मध्ये त्वया न वास्तव्यम् ' येन कारणेनास्माभिः षण्मासान्तपिच्छैकदान*दात्या गृहीतम् एतत् सरः । एवं च '

किं बहुना ' परस्परं द्वैधम् उत्पन्नम् । स च राज्ञः शरणं गतो ऽब्रवीत् । देव ' एते पक्षिण एवं वदन्ति ' यद् अस्माकं राजा किं करिष्यति । न कस्याप्य् आवासं दद्मः । मया चोक्तम् । न शोभनं युष्माभिर् अभिहितम् । अहं गत्वा राज्ञे निवेदयिष्यामि । एवं स्थिते देवः प्रमाणम् । ततो राजा भृत्यान् अब्रवीत् । भोः ' गच्छत । सर्वान् पक्षिणो गतासून् कृत्वा शीघ्रम् आनयत । राजादेशानन्तरम् एव प्रचेलुस् ते । अथ लगुडहस्तान् राजपुरुषान् दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम् । भोः स्वजनाः ' न शोभनम् आपतितम् । ततः सर्वैर् एकमतीभूय शीघ्रम् उत्पतितव्यम् । तैश् च तथानुष्ठितम् ॥

अतो ऽहं ब्रवीमि । भूतान् यो नानुगृह्णाति । इत्य् उक्त्वा पुनर् अपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा सर्पप्रत्यायनार्थं निवेदितवान् ' यन् मदीयपुत्रः स्वबुद्ध्या पञ्चत्वम् उपगतः । ततो भुजंगो ऽब्रवीत् । चितिकां दीपितां पश्य ' इत्यादि ॥

तद् अस्मिन् हते ऽयत्नाद् एव राज्यम् अकण्टकं भवतो भवति ।

तस्यैतद् वचनं श्रुत्वा क्रूराक्षं पप्रच्छ । भद्र ' त्वं तु किं मन्यसे । सो ऽब्रवीत् । देव । निर्दयम् एतत् । यद् अनेनाभिहितम् । यत्कारणम् । शरणागतो न वध्यते । सुष्ठु खल्व् इदम् आख्यानम् ।

श्रूयते हि कपोतेन । शत्रुः शरणम् आगतः ।
पूजितश् च यथान्यायं । स्वैश् च मांसैर् निमन्त्रितः ॥१२०॥

अरिमर्दनो ऽब्रवीत् । कथम् एतत् । क्रूराक्षः कथयति ।

॥ कथा ८ ॥

कश्चित् *क्षुद्रसमाचारः ' प्राणिनां कालसंमितः ।
विचचार महारण्ये ' घोरः शकुनिलुब्धकः ॥१२१॥

नैव कश्चित् सुहृत् तस्य ' न संबन्धी न बान्धवः ।
स तैः सर्वैः परित्यक्तस् ' तेन रौद्रेण कर्मणा ॥१२२॥

अथवा ।

ये नृशंसा दुरात्मानः ' प्राणिनां प्राणनाशकाः ।
उद्वेजनीया भूतानां ' व्याला इव भवन्ति ते ॥१२३॥
स पञ्जरकम् आदाय ' पाशं च लगुडं तथा ।
नित्यम् एव वनं गच्छेत् ' सर्वप्राणिविहिंसकः ॥१२४॥
अथ कृष्णा दिशः सर्वा ' वनस्थस्याभवन् घनैः ।
वातवृष्टिश् च महती ' क्षयकाल इवाभवत् ॥१२५॥
ततः संत्रस्तहृदयः ' कम्पमानो मुहुर् मुहुः ।
अन्वेषयन् परित्राणम् ' आससाद वनस्पतिम् ॥१२६॥
यावद् आस्ते मुहूर्तकं ' वियद् विमलतारकम् ।
स तु प्राप्यावदद् बुद्ध्या ' देवता शरणं मम ॥१२७॥
अथ तस्य तरोः स्कन्धे ' कपोतः सुचिरोषितः ।
भार्याम् अपश्यन् सुचिराद् ' विललाप सुदुःखितः ॥१२८॥
वातवर्षो महान् आसीन् ' न चागच्छति मे प्रिया ।
तया विरहितं ह्य् एतच् ' छून्यम् अद्य गृहं मम ॥१२९॥
न गृहं गृहम् इत्य् आहुर् ' गृहिणी गृहम् उच्यते ।
गृहं च गृहिणीहीनम् ' अरण्यसदृशं मम ॥१३०॥
पतिव्रता पतिप्राणा ' पत्युः प्रियहिते रता ।
यस्य स्याद् ईदृशी भार्या ' धन्यः स पुरुषो भुवि ॥१३१॥
पञ्जरस्था ततः श्रुत्वा ' भर्तुर् दुःखान्वितं वचः ।
कपोतिका सुसंतुष्टा ' वाक्यं चेदम् अथाह च ॥१३२॥

न सा स्त्रीत्य् अभिमन्तव्या ' यस्या भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां ' तुष्टाः स्युः सर्वदेवताः ॥१३३॥
दावाग्निनेव निर्दग्धा ' सपुष्पस्तबका लता ।
भस्मीभवतु सा नारी ' यस्या भर्ता न तुष्यति ॥१३४॥

पुनश् चाब्रवीत् ।

शृणोत्व् अवहितः कान्तो ' यत् ते वक्ष्याम्य् अहं हितम् ।
प्राणैर् अपि त्वया नित्यं ' संरक्ष्यः शरणागतः ॥१३५॥
एष शाकुनिकः शेते ' तवावासं समाश्रितः ।
शीतार्तश् च क्षुधार्तश् च ' पूजाम् अस्मै समाचर ॥१३६॥

श्रूयते च ।

यः सायम् अतिथिं प्राप्तं ' यथाशक्ति न पूजयेत् ।
तस्यासौ दुष्कृतं दत्त्वा ' सुकृतं चापकर्षति ॥१३७॥
मा चास्मै त्वं कृथा द्वेषं ' बद्धानेनेति मत्प्रिया ।
स्वकृतैर् एव बद्धाहं ' प्राक्तनैः कर्मबन्धनैः ॥१३८॥

यतः ।

दारिद्र्यरोगदुःखानि ' बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य ' फलान्य् एतानि देहिनाम् ॥१३९॥
तस्मात् त्वं द्वेषम् उत्सृज्य ' मद्बन्धनसमुद्भवम् ।
धर्मे मनः समाधाय ' पूजयैनं यथाविधि ॥१४०॥
ततस् तद्वचनं श्रुत्वा ' धर्मयुक्तिसमन्वितम् ।
उपगम्य ततो धृष्टः ' कपोतः प्राह लुब्धकम् ॥१४१॥
भद्र सुस्वागतं ते ऽस्तु ' ब्रूहि किं करवाणि ते ।
संतापश् च न कर्तव्यः ' स्वगृहे वर्तते भवान् ॥१४२॥

तस्य तद् वचनं श्रुत्वा ' प्रत्युवाच विहंगहा ।
कपोत खलु शीतं मे ' हिमत्राणं विधीयताम् ॥१४३॥
स गत्वाङ्गारकर्मान्तम् ' आनयाम् आस पावकम् ।
ततः शुष्केषु पर्णेषु ' तम् आशु समदीपयत् ॥१४४॥
प्रतापयस्व विश्रब्धं ' स्वगात्राण्य् अत्र निर्भयः ।
न चास्ति विभवः कश्चिद् ' येन ते *नाशये क्षुधम् ॥१४५॥
सहस्रं बिभर्ति कश्चिच् ' छतम् अन्यो दशापरः ।
मम त्व् अकृतपुण्यस्य ' क्षुद्रस्यात्मापि दुर्भरः ॥१४६॥
एकस्याप्य् अतिथेर् अन्नं ' यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे ' गृहे किं वसतः फलम् ॥१४७॥
तत् तथा साधयाम्य् एतच् ' छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि ' नास्तीत्य् अर्थिसमागमे ॥१४८॥
स निनिन्द किलात्मानं ' न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां ' मुहूर्तं प्रतिपालय ॥१४९॥
एवम् उक्त्वा स धर्मात्मा ' प्रहृष्टेनान्तरात्मना ।
तम् अग्निं संपरिक्रम्य ' प्रविवेश स्ववेश्मवत् ॥१५०॥
ततस् तं लुब्धको दृष्ट्वा ' कृपया भृशपीडितः ।
कपोतम् अग्नौ पतितं ' वाक्यम् एतद् अभाषत ॥१५१॥
यः करोति नरः पापं ' न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापम् ' आत्मनैव हि भुज्यते ॥१५२॥
सो ऽहं पापमतिश् चैव ' पापकर्मरतिः सदा ।
पतिष्यामि महाघोरे ' नरके नात्र संशयः ॥१५३॥
नूनं मम नृशंसस्य ' प्रत्यादर्शस् तु दर्शितः ।
प्रयच्छता स्वमांसानि ' कपोतेन महात्मना ॥१५४॥

अद्यप्रभृति देहं स्वं । सर्वभोगविवर्जितम् ।
तोयं स्वल्पम् इव *ग्रीष्मे । शोषयिष्याम्य् अहं ततः ॥१५५॥
शीतवातातपसहः । कृशाङ्गो मलिनस् तथा ।
उपवासैर् बहुविधैश् । चरिष्ये धर्मम् उत्तमम् ॥१५६॥
ततो *यष्टिं शलाकां च । जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां । कपोतीं च मुमोच ताम् ॥१५७॥
लुब्धकेन ततो मुक्ता । दृष्ट्वाग्नौ पतितं पतिम् ।
कपोती विललापार्ता । शोकसंत्रस्तमानसा ॥१५८॥
न कार्यम् अद्य मे नाथ । जीवितेन त्वया विना ।
दीनायाः पतिहीनायाः । किं नार्या जीविते फलम् ॥१५९॥
मानो दर्पस् त्व् अहंकारः । कुलपूजा च बन्धुषु ।
दासभृत्यजनेष्व् आज्ञा । वैधव्येन प्रणश्यति ॥१६०॥
एवं विलप्य बहुशः । कृपणं भृशदुःखिता ।
पतिव्रता सुसंदीप्तं । तम् एवाग्निं विवेश सा ॥१६१॥
ततो दिव्याम्बरधरा । दिव्याभरणभूषिता ।
भर्तारं सा विमानस्थं । ददर्श च कपोतिका ॥१६२॥
सो ऽपि दिव्यतनुर् भूत्वा । यथार्थम् इदम् अब्रवीत् ।
अहो ममानुगच्छन्त्या । कृतं साधु शुभे त्वया ॥१६३॥
तिस्रः कोट्यो ऽर्धकोटी च । यानि रोमाणि मानवे ।
तावत्कालं वसेत् स्वर्गे । भर्तारं यानुगच्छति ॥१६४॥

एवं हर्षाविष्टस् तां विमानम् आरोप्य परिष्वज्य च सुखेन तस्थौ । लुब्धको ऽपि परमनिर्वेदं कृत्वा मरणाभिमुखो महद् वनं विवेश ।

तत्र दावानलं दृष्ट्वा । निविष्टो विरताशयः ।
निर्दग्धकल्मषो भूत्वा । देववद् दिवि मोदते ॥१६५॥

अतो ऽहं ब्रवीमि । श्रूयते च कपोतेन । इति ।

तच् छ्रुत्वारिमर्दनो दीप्ताक्षं पृष्टवान् । एवम् अवस्थिते किं भवान् मन्यते । सो ऽब्रवीत् ।

या ममोद्विजते नित्यं । सा माम् अद्यावगूहते ।
प्रियकारक भद्रं ते । यन् ममास्ति हरस्व तत् ॥१६६॥

चौरेणाप्य् उक्तम् ।

हर्तव्यं ते न पश्यामि । हर्तव्यं चेद् भविष्यति ।
पुनर् अप्य् आगमिष्यामि । यदीयं नावगूहते ॥१६७॥

अरिमर्दनः पृष्टवान् । का च नावगूहते । कश् चायं चौरः । इति विस्तरतः श्रोतुम् इच्छामि । दीप्ताक्षः कथयति ।

## ॥ कथा ९ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने कामातुरो नाम वृद्धवणिक् । तेन च कामोपहतचेतसा मृतभार्येण काचिन् निर्धनवणिक्सुता प्रभूतधनं दत्त्वोद्वाहिता । अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुम् अपि न शशाक । युक्तं चैतत् ।

श्वेतं पदं शिरसि यत् तु शिरोरुहाणां
स्थानं परं परिभवस्य तद् एव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपम् इव दूरतरं तरुण्यः ॥१६८॥ vasa

तथा च ।

गात्रं संकुचितं गतिर् विगलिता दन्ताश् च नाशं गता
दृष्टिर् भ्रश्यति रूपम् अप्य् उपहतं वक्त्रं च लालायते ।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
हा कष्टं जरसाभिभूतपुरुषं पुत्रो ऽप्य् अवज्ञायते ॥१६९॥ śārdū

अथ कदाचित् सा तेन सहैकशयने पराङ्मुखी यावत् तिष्ठति ।

तावत् तद्गृहे चौरः प्रविष्टः। सापि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धम् अपि तं पतिं समालिलिङ्ग। सो ऽपि विस्मयात् पुलकाञ्चितसर्वगात्रश् चिन्तयाम् आस। अहो ' किम् एषा माम् अद्यावगूहते। यावन् निपुणतया पश्यति ' तावद् गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्। नूनम् एषास्य भयान् *माम् आलिङ्गति। इति ज्ञात्वा तं चौरम् आह। या ममोद्विजते नित्यं ' सा *माम् अद्यावगूहते ' इति। तच् छ्रुत्वा चौरो ऽप्य् आह। हर्तव्यं ते न पश्यामि ' इति॥

तस्माच् चौरस्याप्य् उपकारिणः श्रेयश् चिन्त्यते। किं पुनर् न शरणागतस्य। अपि च। अयं तैर् विप्रकृतो ऽस्माकम् एव पुष्टये भविष्यति तदीयरन्ध्रदर्शनाय वा। इति। अनेन कारणेनायम् अवध्यः। इति।

एतद् आकर्ण्यारिमर्दनो ऽन्यं सचिवं वक्रनासं पप्रच्छ। भद्र। सांप्रतम् एवं स्थिते किं कर्तव्यम्। सो ऽब्रवीत्। देव। अवध्यो ऽयम्। यतः।

शत्रवो ऽपि हितायैव। विवदन्तः परस्परम्।
चौरेण जीवितं दत्तं। राक्षसेन तु गोयुगम्॥१७०॥

अरिमर्दनः प्राह। कथम् एतत्। वक्रनासः कथयति।

## ॥ कथा १० ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने दरिद्रो ब्राह्मणः प्रतिग्रहधनः सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालंकारताम्बूलादिभोगपरिवर्जितः प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवर्षादिभिः परिशोषितशरीरः। तस्य च केनाप्य् अनुकम्पया शिशुगोयुगं दत्तम् ' ब्राह्मणेन च बालत्वाद् आरभ्य याचितघृततैलयवसादिभिः संवर्ध्य सुपुष्टं कृतम्। तच् च दृष्ट्वा सहसैव कश्चिच् चौरश् चिन्तितवान्। अहम् अस्य ब्राह्मणस्य गोयुगम् इदम् अपहरिष्यामि। इति निश्चित्य

तशायां बन्धनपाशं गृहीत्वा यावत् प्रस्थितः ' तावद् अर्धमार्गे विरलतीक्ष्णदन्तपङ्क्तिर् उन्नतनासावंशविषमीकृतनयन *उप-चितस्नायुसंततगात्रः शुष्ककपोलः सुहुतहुतवहपिङ्गश्मश्रुशरीरः कश्चिद् दृष्टः । दृष्ट्वा च तं तीव्रभयोत्त्रस्तश् चौरो ऽब्रवीत् । को भवान् ' इति । स आह । सत्यवचनो ऽहं ब्रह्मराक्षसः । भवान् अप्य् आत्मानं निवेदयतु । सो ऽब्रवीत् । अहं क्रूरकर्मा चौरः । दरिद्रब्राह्मणगोयुगं हर्तुं प्रस्थितो ऽस्मि ।

अथ जातप्रत्ययो राक्षसो ऽब्रवीत् । भद्र ' षष्ठान्नकालिको ऽहम् । अतस् तम् एव ब्राह्मणम् अद्य भक्षयिष्यामि । तत् सुन्दरम् इदम् । एककार्याव् एवावाम् । अथ तौ तत्र गत्वैकान्ते कालम् अन्वेषयन्तौ स्थितौ । प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरो ऽब्रवीत् । भद्र ' नैष न्यायः ' यतो गोयुगे मयापहृते पश्चात् त्वम् एनं ब्राह्मणं भक्षय । सो ऽब्रवीत् । कदाचिद् अयं प्रतिशब्देन ब्राह्मणो बुध्येत । तदानर्थको ऽयं ममारम्भः स्यात् । चौरो ऽब्रवीत् । तवापि यदि भक्षणायोपस्थितस्यान्तरा को ऽप्य् अन्तरायः स्यात् ' तदाहम् अपि न शक्नोमि गोयुगम् अपहर्तुम् । अतः प्रथमं मयापहृते गोयुगे पश्चात् त्वया ब्राह्मणो भक्षयितव्यः । इत्थं चाहमहमिकया तयोर् विवदतोः समुत्पन्ने द्वैधे प्रतिरववशाद् ब्राह्मणो जजागार । अथ तं चौरो ऽब्रवीत् । ब्राह्मण ' त्वाम् अयं राक्षसो भक्षयितुम् इच्छति । राक्षसो ऽप्य् आह । ब्राह्मण ' चौरो ऽयं गोयुगं ते ऽपहर्तुम् इच्छति । एवं श्रुत्वोत्थाय ब्राह्मणः सावधानो भूत्वेष्टदेवतामन्त्रध्यानेनात्मानं राक्षसाद् उद्गूर्णलगुडेन च चौराद् गोयुगं ररक्ष ॥

अतो ऽहं ब्रवीमि । शत्रवो ऽपि हितायैव । इति । अपि च ।

शिबिनापि स्वमांसानि । कपोतार्थे महात्मना ।
श्येनाय किल दत्तानि । श्रूयन्ते पुण्यकाम्यया ॥१७१॥

तन् नायं धर्मः । यच् छरणागतो हन्यते । इति ॥

अथ तस्य वचनम् अवधार्य प्राकारकर्णम् अपृच्छत् । कथय । किम् अत्र मन्यते भवान् । सो ऽब्रवीत् । देव । अवध्य एवायम् । यतो रक्षितेनानेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति । उक्तं च ।

परस्परस्य मर्माणि । ये न रक्षन्ति जन्तवः ।
त एव निधनं यान्ति । वल्मीकोदरसर्पवत् ॥१७२॥

अरिमर्दनो ऽब्रवीत् । कथम् एतत् । प्राकारकर्णः कथयति ॥

## ॥ कथा ११ ॥

अस्ति कस्मिंश्चिन् नगरे राजा देवशक्तिर् नाम । तस्य च पुत्रो जठरवल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते । अथासौ राजपुत्रो निर्वेदाद् देशान्तरं गतः । कस्मिंश्चिन् नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति । अथ तत्र नगरे बलिर् नाम राजास्ते । तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः । अथ तयोर् एका प्रतिदिवसं पितुः पादान्तिकम् आगत्य । विजयस्व महाराज । द्वितीया तु । विहितं भुङ्क्ष्व महाराज । इति ब्रवीति । तच् छ्रुत्वा प्रकुपितो राजाब्रवीत् । भो मन्त्रिणः । एनां दुष्टभाषिणीं कुमारिकां कस्यचिद् वैदेशिकस्य प्रयच्छत । येन विहितम् इयम् एव भुङ्क्ते । अथ । तथा । इति प्रतिपद्याल्पपरिवारा सा कुमारिका मन्त्रिभिस् तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता ।

सापि हृष्टमानसा तं पतिं देववत् प्रतिपद्यादाय चान्यविषयं गता । ततः कस्मिंश्चिद् दूरतरनगरप्रदेशे तडागतटे राजपुत्रम्

आवासरक्षणे निरूप्य स्वयं च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता । कृत्वा च क्रयविक्रयं यावद् आगच्छति ' तावत् स राजपुत्रो वल्मीकोपरिकृतमूर्धा प्रसुप्तः ' तस्य च मुखाद् भुजगफणा निष्क्रम्य वायुम् अश्नाति । तत्रैव च वल्मीके ऽपरः सर्पो निष्क्रम्य तथैवासीत् । अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोर् मध्याद् वल्मीकस्थेन सर्पेणोक्तम् । भो दुरात्मन् ' कथं सुन्दरसर्वाङ्गं राजपुत्रम् इत्थं कदर्थयसि । मुखस्थो ऽब्रवीत् । त्वयापि दुरात्मना कथम् इदं दूषितं हाटकपूर्णं कलशयुगलम् ' इति । एवं परस्परमर्माण्य् उद्घाटितवन्तौ । पुनर् वल्मीकस्थो ऽब्रवीत् । भो दुरात्मन् ' किं को ऽपि भेषजम् इदं न जानाति ' यद् राजिकापानेन भवान् विनाशम् उपयाति । अथोदरस्थो ऽब्रवीत् । तथाप्य् एतद् भेषजं किं कश्चिद् अपि न वेत्ति ' यथोष्णोदकेन तव विनाशः स्यात् ' इति । एवं च सा राजकन्या विटपान्तरिता तयोः परस्परालापम् आकर्ण्य तथैवानुष्ठितवती । विधायाव्यङ्गं भर्तारम् ऋद्धिं च पराम् आसाद्य स्वदेशाभिमुखं प्रायात् । पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता ॥

अतो ऽहं ब्रवीमि । परस्परस्य मर्माणि । इत्यादि ।

तच् च श्रुत्वारिमर्दनो ऽप्य् एवं समर्थितवान् । तथा चानुष्ठितं दृष्ट्वान्तर्लीनम् अवहस्य रक्ताक्षः पुनर् अब्रवीत् । कष्टं कष्टम् । विनाशितो ऽयं भवद्भिर् अन्यायेन स्वामी । उक्तं च ।

अपूज्या यत्र पूज्यन्ते । पूज्यानां तु विमानना ।
त्रीणि तत्र प्रवर्तन्ते । दुर्भिक्षं मरणं भयम् ॥ १७३ ॥

तथा च । प्रत्यक्षे ऽपि कृते पापे । मूर्खः साम्ना प्रतुष्यति ।
रथकारः स्वकां भार्यां । सजारां शिरसावहत् ॥ १७४ ॥

मन्त्रिणः प्राहुः । कथम् एतत् । रक्ताक्षः कथयति ।

॥ कथा १२ ॥

अस्ति कस्मिंश्चित् स्थाने रथकारः । तस्य भार्या पुंश्चली जनापवादसंयुक्ता च । सो ऽपि तस्याः परीक्षणार्थम् अचिन्तयत् । कथं मयास्याः परीक्षणं कर्तव्यम् । उक्तं च । यतः ।

यदि स्यात् पावकः शीतः । प्रोष्णो वा शशलाञ्छनः ।
स्त्रीणां च तत् सतीत्वं स्याद् । यदि स्याद् दुर्जनो हितः ॥१७५॥

जानामि चैनां लोकवचनाद् असतीम् । उक्तं च ।

यच् च वेदेषु शास्त्रेषु । न दृष्टं न च संश्रुतम् ।
तत् सर्वं वेत्ति लोको ऽयं । यत् स्याद् ब्रह्माण्डमध्यगम् ॥१७६॥

एवं संप्रधार्य भार्याम् अवोचत् । प्रिये । प्रभाते ऽहं ग्रामान्तरं यास्यामि । तत्र दिनानि कतिचिल् लगिष्यन्ति । तत् त्वया किंचित् पाथेयं मम योग्यं विधेयम् । तस्य वचनं श्रुत्वा हर्षितचित्ता सोत्सुका सर्वकार्याणि संत्यज्य सिद्धम् अन्नं घृतशर्कराप्रायम् अकरोत् । अथवा साध्व् इदम् उच्यते ।

दुर्दिवसे घनतिमिरे । दुःसंचारेषु नगरमार्गेषु ।
पत्युर् विदेशगमने । परमसुखं जघनचपलायाः ॥१७७॥ ār

अथासौ प्रत्यूष उत्थाय स्वगृहान् निर्गतः । सापि तं प्रस्थितं विज्ञाय प्रहसितवदनाङ्गसंस्कारकर्म कुर्वाणा कथंचिद् दिनम् अत्यवाहयत् । अथ पूर्वपरिचितविटगृहे गत्वा तं प्रत्य् उक्तवती । स दुरात्मा मे पतिर् ग्रामान्तरं गतः । तत् त्वयास्मद्गृहे प्रसुप्ते जन आगन्तव्यम् । तथानुष्ठिते स रथकारो ऽरण्ये दिनम् अतिवाह्य प्रदोषे स्वगृहे ऽपद्वारेण प्रविश्य शय्याधस्तले निभृतो

भूत्वा स्थितः । एतस्मिन् अन्तरे स देवदत्तः समागत्य तत्र शयन उपविष्टः । तं दृष्ट्वा कोपाविष्टचित्तो रथकारो व्यचिन्तयत् । किम् एनम् उत्थाय हन्मि ' अथ हेलयैव प्रसुप्तौ द्वाव् अपि व्यापादयामि । यद् वा ' पश्यामि तावद् अस्याश् चेष्टितम् ' शृणोम्य् अनेन सहालापान् । एतस्मिन् अन्तरे सा गृहद्वारं निभृतं *पिधाय शयनतलम् आरूढा ।

अथारोहन्त्या रथकारशरीरे पादौ विलग्नः । ततो व्यचिन्तयत् । नूनम् एतेन दुरात्मना रथकारेण मत्परीक्षार्थं भाव्यम् । तत् स्त्रीचरितविज्ञानं किम् अपि करोमि । एवं तस्याश् चिन्तयन्त्या देवदत्तः स्पर्शोत्सुको बभूव । अथ तया कृताञ्जलिपुटयाभिहितम् । भो महानुभाव ' मे शरीरं त्वयास्पर्शनीयम् । स आह । यद्य् एवम् ' तर्हि ' किम् अहं त्वयाहूतः । साब्रवीत् । भोः ' अहं प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता । तत्राकस्मिकी खे वाचा संजाता । पुत्रि ' किं करोमि । भक्तासि मे त्वम् । परं षण्मासाभ्यन्तरे विधिनियोगाद् विधवा भविष्यसि । ततो मयाभिहितम् । भगवति ' यथा त्वम् आपदं वेत्सि ' तथा प्रतीकारम् अपि जानासि । तद् अस्ति कश्चिद् उपायः ' येन मे पतिः शतसंवत्सरजीवी भवति । ततस् तयाभिहितम् । अपि चास्ति ' यतस् तवायत्तः स प्रतीकारः । तच् छ्रुत्वा मयाभिहितम् । देवि ' यदि मम प्राणैर् भवति ' तद् आदिश ' येन करोमि । अथ देव्याभिहितम् । यद्य् *अन्येन पुरुषेण सहैकस्मिञ् शयनीय आरुह्यालिङ्गनं करोषि ' तत् तव भर्तुः सक्तो ऽपमृत्युर् अस्य संचरति ' भर्ता च पुनर् वर्षशतं जीवति । तेन त्वं मयाभ्यर्थितः । तद् यत् किंचित् कर्तुमनाः ' तत् कुरु । न हि देवतावचनम् अन्यथा

भविष्यति । इति निश्चयः । ततो ऽन्तर्हासविकाशमुखः स तदुचितम् आचचार ।

सो ऽपि रथकारो मूर्खस् तस्या वचनम् आकर्ण्य पुलकिततनुः शय्याधस्तलान् निष्क्रम्योवाच । साधु । पतिव्रते । साधु । कुलनन्दनि । अहं दुर्जनवचनशङ्कितहृदयस् त्वत्परीक्षानिमित्तं ग्रामव्याजं कृत्वात्र खट्वाधस्तले निभृतं लीनः स्थितः । तद् एहि । आलिङ्ग माम् । एवम् उक्त्वा ताम् आलिङ्ग्य स्कन्धे कृत्वा तम् अपि देवदत्तम् उवाच । भो महानुभाव । मत्पुण्यैस् त्वम् इहागतः । त्वत्प्रसादान् मया प्राप्तं वर्षशतप्रमाणम् आयुः । तत् त्वम् अपि स्कन्धे समारुह । अनिच्छन्तम् अपि तं बलात् स्कन्ध आरोपितवान् । ततश् च नृत्यन् सकलस्वजनगृहद्वारेषु बभ्राम ॥

अतो ऽहं ब्रवीमि । प्रत्यक्षे ऽपि कृते *दोषे । इत्यादि । तत् सर्वथा मूलोत्खाता वयं विनष्टाः स्मः । सुष्ठु खल्व् इदम् उच्यते ।

मित्ररूपा हि रिपवः । संभाव्यन्ते विचक्षणैः ।
ये हितं वाक्यम् उत्सृज्य । विपरीतोपसेविनः ॥ १७८ ॥

तथा च ।

सन्तो ऽप्य् अर्था विनश्यन्ति । देशकालविरोधिताः ।
अप्राज्ञान् मन्त्रिणः प्राप्य । तमः सूर्योदये यथा ॥ १७९ ॥

ततस् तद्वचो ऽनादृत्य सर्वे ते स्थिरजीविनम् उत्क्षिप्य स्वदुर्गम् आनेतुम् आरब्धाः । अथानीयमानः स्थिरजीव्य् आह । देव । अद्याकिंचित्करेणैतदवस्थेन किं मयोपसंगृहीतेन । यत्कारणम् । इच्छामि दीप्तं वह्निम् अनुप्रवेष्टुम् । तद् अर्हसि माम् उद्धर्तुम् अग्निदानेन । इति । अथ रक्ताक्षस् तस्यान्तर्गतभावं ज्ञात्वाब्रवीत् । किमर्थम् अग्निपतनम् इच्छसि । सो ऽब्रवीत् । अहं *भवदर्थं इमाम् आपदां मेघवर्णेन प्रापितः । तद् इच्छामि तेषां *वैरयातनार्थम् उलूकत्वम् । इति । तच् च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह । भद्र । कुटिलस् त्वं कृतकवचनचतुरश् च । तत् त्वम् उलूकयोनिगतो ऽपि स्वकीयाम् एव वायसयोनिं बहु मन्यसे । श्रूयते चैतद् आख्यानकम् ।

सूर्यं भर्तारम् उत्सृज्य । पर्जन्यं मारुतं गिरिम् ।
स्वयोनिं मूषिकी प्राप्ता । स्वजातिर् दुरतिक्रमा ॥ १८० ॥

सो ऽब्रवीत् । कथम् एतत् । रक्ताक्षः कथयति ।

॥ कथा १३ ॥

अस्ति विषमशिलातटस्खलिताम्बुनिर्घोषश्रवणसंत्रस्तमत्स्यपरिवर्तनासंजनितसितफेनशबलतरङ्गाया गङ्गायास् तटे जपनियमतपःस्वाध्यायोपवाससंयागक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः कन्दमूलफल*शैवालाभ्यवहारकदर्थितशरीरैर् वल्कलकृतकौपीनमात्रप्रच्छादनैस् तपस्विभिर् आकीर्णम् आश्रमपदम्। तत्र याज्ञवल्क्यो नाम कुलपतिः। तस्य जाह्नव्यां स्नात्वोपस्प्रष्टुम् आरब्धस्य करतले श्येनमुखात् परिभ्रष्टा मूषिकी पतिता। तां दृष्ट्वा न्यग्रोधपत्त्रे ऽवस्थाप्य पुनः स्नात्वोपस्पृश्य च प्रायश्चित्तादिक्रियां कृत्वा च तां मूषिकीं स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रमम् आशिश्राय ' अनपत्यां च जायाम् आह। भद्रे ' गृह्यताम् ' इयं तव दुहितोत्पन्ना प्रयत्नेन संवर्धनीया ' इति। ततस् तया संवर्धिता लालिता च ' यावद् द्वादशवर्षा संजज्ञे। अथ विवाहयोग्यां दृष्ट्वा भर्तारम् एवम् ऊचे। भो भर्तः ' किम् इदं नावबुध्यसे ' यथास्याः स्वदुहितुर् विवाहसमयातिक्रमो भवति। असाव् आह। प्रिये ' साधूक्तम्। उक्तं च।

स्त्रियः पूर्वं सुरैर् भुक्ताः ' सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चात् ' तस्माद् दोषो न विद्यते ॥१८१॥
सोमस् तासां ददौ शौचं ' गन्धर्वाः शिक्षितां गिरम्।
पावकः सर्वमेध्यत्वं ' तस्मान् निष्कल्मषाः स्त्रियः ॥१८२॥
असंप्राप्तरजा गौरी ' प्राप्ते रजसि रोहिणी।
अव्यञ्जना भवेत् कन्या ' कुचहीना च नग्निका ॥१८३॥

व्यञ्जनैस् तु समुत्पन्नैः । सोमो भुङ्क्ते हि कन्यकाम् ।
पयोधरेषु गन्धर्वा । रजस्य् अग्निः प्रतिष्ठितः ॥१८४॥
तस्माद् विवाहयेत् कन्यां । यावन् नर्तुमती भवेत् ।
विवाहश् चाष्टवर्षायाः । कन्यायास् तु प्रशस्यते ॥१८५॥
व्यञ्जनं हन्ति वै पूर्वं । परं चैव पयोधरौ ।
रतिर् इष्टांस् तथा लोकान् । हन्याच् च पितरं रजः ॥१८६॥
ऋतुमत्यां तु तिष्ठन्त्यां । स्वेच्छादानं विधीयते ।
तस्माद् उद्वाहयेन् नग्नां । मनुः स्वायंभुवो ऽब्रवीत् ॥१८७॥
पितृवेश्मनि या कन्या । रजः पश्यत्य् असंस्कृता ।
अविवाह्या तु सा कन्या । जघन्या वृषली स्मृता ॥१८८॥
श्रेष्ठेभ्यः सदृशेभ्यश् च । जघन्येभ्यो रजःस्वला ।
पित्रा देया विनिश्चित्य । यतो दोषो न विद्यते ॥१८९॥

अतो ऽहम् एनां सदृशाय प्रयच्छामि । उक्तं च ।

ययोर् एव समं वित्तं । ययोर् एव समं कुलम् ।
तयोर् विवाहः सख्यं च । न तु पुष्टविपुष्टयोः ॥१९०॥

तथा ।

कुलं च शीलं च सनाथता च
विद्या च वित्तं च वपुर् वयश् च ।
एतान् गुणान् सप्त विचिन्त्य देया
कन्या बुधैः शेषम् अचिन्तनीयम् ॥१९१॥ upa

तद् यद्य् *अस्या रोचते । तदा भगवन्तम् आदित्यम् आहूय तत् तस्मै प्रदीयते । साह । को दोषः । क्रियताम् एतत् । अथ मुनिना सवितृाहूतः । तत्क्षणाद् एवाभ्युपगत्य प्रोवाच । भगवन् । किम् अहम् आहूतः । सो ऽब्रवीत् । एषा मदीया कन्यका तिष्ठति ।

तत् त्वम् उद्वहस्व ' इति । एवम् उक्त्वा स्वदुहितरम् उवाच । पुत्रि ' किं तव रोचत एष भगवांस् त्रैलोक्यदीपकः । पुत्रिकाब्रवीत् । तात ' अतिदहनात्मको ऽयम् । नाहम् एनम् अभिलषामि । तद् अस्माद् अन्यः कश्चिद् उत्कृष्टतर आहूयताम् । अथ तस्यास् तद् वचनं श्रुत्वा मुनिर् भास्करम् उवाच । भगवन् ' त्वद् अधिको ऽस्ति कश्चित् । भास्करः प्राह । अस्ति मद् अप्य् अधिको मेघः ' येनाच्छादितो ऽहम् अदृश्यो भवामि । अथ मुनिना मेघम् अप्य् आहूय कन्याभिहिता । पुत्रिके ' अस्मै प्रयच्छामि । साह । कृष्णवर्णो ऽयं जडात्मा च । तद् अस्य सकाशाद् अन्यस्य प्रधानस्य मां प्रयच्छ । अथ मुनिना मेघः पृष्टः । भो मेघ ' त्वद् अप्य् अधिको ऽस्ति कश्चित् । मेघेनोक्तम् । मत्तो ऽप्य् अधिको ऽस्ति वायुः । अथ तेन वायुर् आहूतः । पुत्रिके ' अस्मै प्रयच्छामि । साब्रवीत् । तात ' अतिचंपलो ऽयम् । तद् अस्माद् अप्य् अधिकः कश्चिद् आनीयताम् । मुनिर् आह । भो वायो ' त्वत्तो ऽप्य् अधिको ऽस्ति कश्चित् । पवनेनोक्तम् । मत्तो ऽप्य् अधिको ऽस्ति पर्वतः । अथ मुनिः पर्वतम् आहूय कन्याम् उवाच । पुत्रिके ' अस्मै त्वां प्रयच्छामि । साह । तात ' कठिनात्मको ऽयं स्तब्धश् च । तद् अन्यस्मै देहि माम् । मुनिना पर्वतः पृष्टः । भोः पर्वतराज ' त्वद् अप्य् अधिको ऽस्ति कश्चित् । गिरिणोक्तम् । मत्तो ऽप्य् अधिकाः सन्ति मूषकाः । मुनिना मूषकम् आहूय तस्या अदर्शयत् ' आह च । पुत्रिके ' एष प्रतिभाति ते मूषकः । सापि तं दृष्ट्वा ' स्वजातीयः ' इति मन्यमाना पुलकोद्भूषितशरीरोवाच । तात ' मां *मूषिकीं कृत्वास्मै प्रयच्छ ' येन

स्वजातिविहितं *गृहिणीधर्मम् अनुतिष्ठामि। सो ऽपि स्वतपो-
बलेन तां मूषिकीं कृत्वा तस्मै प्रादात् ॥

अतो ऽहं ब्रवीमि। सूर्यं भर्तारम् उत्सृज्य। इत्यादि। अथ रक्ताक्षवचनम् अनादृत्य ।: स्ववंशविनाशाय स स्वदुर्गम् उपनीतः। नीयमानश् चान्तर्लीनम् अवहस्य स्थिरजीवी ग्रचिन्तयत्।

हन्यताम् इति येनोक्तं। स्वामिनो हितवादिना।
स एवैको ऽत्र सर्वेषां। नीतिशास्त्रार्थतत्त्ववित् ॥ १९२ ॥

ाद् यदि तस्य वचनम् *अकरिष्यन्न् एते। ततो न स्वल्पो ऽप्य् अनर्थो ऽभविष्यद् तेषाम्। अथ दुर्गद्वारं प्राप्यारिमर्दनो ऽब्रवीत्। भो भो हितैषिणो ऽस्य स्थिरजीविनो थासमीहितं स्थानं प्रयच्छत। तच् च श्रुत्वा स्थिरजीवी व्यचिन्तयत्। मया तावद् तेषां वधोपायश् चिन्तनीयः। स च मध्यस्थेन न साध्यते। यतो मदीयम् इङ्गितादिकं वचारयन्तस् ते ऽपि सावधाना भविष्यन्ति। दुर्गद्वारम् एवाश्रितो ऽभिप्रेतं साधयामि। ति निश्चित्योलूकपतिम् आह। देव। युक्तम् इदम्। यत् स्वामिना प्रोक्तम्। परम् अहम् अपि नीतिज्ञस् ते हितश् च। यद्य् अप्य् अनुरक्तः शुचिः। तथापि दुर्गमध्य आवासो नार्हः। तद् अत्रैव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करोमि। तथा। इति प्रतिपन्ने प्रतिदिनम् उलूकपतिसेवकास् ते प्रकामम् आहारं कृत्वोलूकराजादेशात् प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति। अथ कतिपयैर् एवा-होभिर् मयूर इव स बलवान् संवृत्तः। अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानं च प्रत्य् आह। अहो। मूर्खो ऽयं मन्त्रिजनो भवांश् चेति। एवम् अहम् अवगच्छामि। उक्तं च।

पूर्वं तावद् अहं मूर्खो। द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च। सर्वं वै मूर्खमण्डलम् ॥ १९३ ॥

ते प्राहुः। कथम् एतत्। रक्ताक्षः कथयति।

## ॥ कथा १४ ॥

अस्ति कस्मिंश्चित् पर्वतैकदेशे महावृक्षः। तत्र च को ऽपि पक्षी प्रतिवसति। यस्य पुरीषे सुवर्णम् उत्पद्यते। अथ कदाचित् तम् उद्देशं व्याधः को ऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषम् उत्ससर्ज। अथ पातसमकालम् एव तत् सुवर्णीभूतं दृष्ट्वा

व्याधो विस्मयम् अगमत् । अहो ' मम शिशुकालाद् आरभ्य शकुनिबन्धव्यसनिनो ऽशीति वर्षाणि समभूवन् ' न च कदाचिद् अपि पक्षिपुरीषे सुवर्णं दृष्टम् । इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध । अथासाव् अपि पक्षी मूर्खो विश्वस्तचित्तो यथापूर्वम् उपविष्टः । तत्कालम् एव पाशेन बद्धः । व्याधस् तु तं पाशाद् उन्मुच्य पञ्जरके संस्थाप्य निजावासं नीत्वा चिन्तयाम् आस । किम् अनेन सापायेनाहं करिष्यामि । यदि कदाचित् को ऽप्य् अमुम् ईदृशं ज्ञात्वा राज्ञे निवेदयिष्यति ' तन् नूनं मम प्राणसंशयो ऽपि भवेत् । अतः स्वयम् एव पक्षिणं राज्ञे निवेदयामि । इति विचार्य तथैवानुष्ठितवान् । अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनकमलः परां तुष्टिम् उपागतः प्राह । हंहो ' आरक्षकपुरुषाः । एनं पक्षिणं यत्नेन रक्षत ' अशनपानादिकं चास्य यथेच्छं प्रयच्छत । अथ मन्त्रिणाभिहितम् । किम् अनेनाश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन । किं कदाचित् पक्षिपुरीषे सुवर्णं संभवति । तन् मुच्यतां पञ्जरबन्धनाद् अयं पक्षी । इति मन्त्रिवचनाद् राज्ञा मोचितो ऽसौ पक्ष्य् उन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्ठां कृत्वा ' पूर्वं तावद् अहं मूर्खो ' इति श्लोकं पठित्वा यथासुखम् आकाशमार्गेण प्रायात् ॥

अतो ऽहं ब्रवीमि । पूर्वं तावद् अहम् । इत्यादि । अथ ते पुनर् अपि प्रतिकूलदैवतया हितम् अपि रक्ताक्षवचनम् अनादृत्य भूयस् तं प्रभूतमांसादिविविधाहारेण पोषयाम् आसुः ।

अथ रक्ताक्षः स्ववर्ग्यान् आहूय रहः प्रोवाच । अहो । एतावद् एवास्मद्भूपतेः कुशलं दुर्गं च । तद् उपदिष्टं मया । यत् कुलक्रमागतः सचिवो ऽभिधत्ते । तद् वयम् अन्यत् पर्वतदुर्गं संप्रति समाश्रयामः । उक्तं च । यतः ।

अनागतं यः कुरुते स शोभते
स *शोचते यो न करोत्य् अनागतम् ।
वने वसन्न् एव जराम् उपागतो
बिलस्य वाचा न कदापि हि श्रुता ॥१९४॥ vaṃśa

ते प्रोचुः । कथम् एतत् । रक्ताक्षः कथयति ।

॥ कथा १५ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे खरनखरो नाम सिंहः । कदाचिद् इतश् चेतश् च परिभ्रमन् क्षुत्क्षामकण्ठो न किंचिद् अपि सत्त्वम् आससाद । ततो ऽस्तसमये महतीं गिरिगुहाम् आसाद्य प्रविष्टश् चिन्तयाम् आस । नूनम् एतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम् । तन् निभृतो भूत्वा तिष्ठामि । अथ गुहास्वामी दधिमुखो नाम शृगालो द्वारि *फूत्कर्तुम् आरेभे । अहो *बिला३ । अहो *बिला३ । इत्य् उक्त्वा तूष्णीभूय भूयो ऽपि तथैव प्रत्यभाषत । भोः, किं न स्मरसि, यन् मया त्वया सह समयः कृतो ऽस्ति, यन् मया बाह्यायातेन त्वं वक्तव्यः, त्वया चाहम् आकारणीयः, इति । तद् अद्य मां नाह्वयसि । ततो ऽहं द्वितीयं तद् एव बिलं यास्यामि, यत् पश्चान् माम् आह्वास्यति । अथ तच् छ्रुत्वा सिंहश् चिन्तितवान् । नूनम् अस्यायातस्यैषा गुहा सदा समाह्वानं करोति, परम् अद्य मद् भयान् न किंचिद् ब्रूते । युक्तं चैतत् ।

भयसंत्रस्तमनसां, हस्तपादादिका क्रिया ।
प्रवर्तते न वाणी च, वेपथुश् चाधिको भवेत् ॥१९५॥

तद् अहम् अस्याह्वानं करोमि, येन तदनुसारेण प्रविष्टो ऽयं मे भोज्यताम् एति । एवं संप्रधार्य सिंहस् तस्याह्वानम् अकरोत् ।

अथ सिंहशब्देन सा गुहा प्रतिरवपूर्णदिगाभोगान्यान् अपि दूरस्थान् अरण्यजीवांस् चासंयाम् आस। शृगालो ऽपि पलायमान इमं श्लोकम् अपठत्। अनागतं यः कुरुते स शोभते। इत्यादि॥

तद् एवं मत्वा युष्माभिर् मया सहागम्यताम्। इत्य् अवधार्यात्मानुयायिपरिवारानुगतो रक्ताक्षो दूरदेशान्तरं जगाम।

अथ रक्ताक्षे गते स्थिरजीव्य् अतिहृष्टमना व्यचिन्तयत्। अहो। कल्याणम् अस्माकम् उपस्थितम्। यद् रक्ताक्षो गतः। यतः स दीर्घदर्शी। एते च मूढमनसः। ततो मम सुखघात्याः संजाताः। उक्तं च। यतः।

न दीर्घदर्शिनो यस्य। मन्त्रिणः स्युर् महीपतेः।
क्रमायाता ध्रुवं तस्य। न चिरात् स्यात् परिक्षयः॥१९६॥

अथवा साध्व् इदम् उच्यते।

मन्त्रिरूपा हि रिपवः। संभाव्यन्ते विचक्षणैः।
ये सन्तं नयम् उत्सृज्य। सेवन्ते प्रतिलोमतः॥१९७॥

एवं विचिन्त्य स्वकुलाय *एकैकां वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका जानन्ति। यद् एष कुलायम् अस्मद्घाताय वृद्धिं नयति। अथवा साध्व् इदम् उच्यते।

अमित्रं कुरुते मित्रं। मित्रं द्वेष्टि हिनस्ति यः।
मित्राणि तस्य नश्यन्ति। अमित्रं नष्टम् एव च॥१९८॥

अथ कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये संजाते सूर्योदये ऽन्धतां प्राप्तेषूलूकेषु स्थिरजीवी शीघ्रं गत्वा मेघवर्णम् आह। स्वामिन्। दाहसाध्या कृता मया रिपुगुहा। तत सपरिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारे ऽस्मत्कुलाये प्रक्षिप। येन सर्वशत्रवः कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते। तच्च कृत्वा प्रहृष्टो मेघवर्ण आह। तात। कथयात्मवृत्तान्तम्। चिराद् दृष्टो ऽसि। स आह। वत्स। नायं वक्तव्यस्य कालः। कदाचित् तस्य रिपोः कश्चित् *प्रणिधिर् ममेहागमनं निवेदयिष्यति। तज्ज्ञानाद् अन्धो ऽन्यत्रापसरणं करिष्यति। तत् त्वर्यतां त्वर्यताम्। उक्तं च।

शीघ्रकृत्येषु कार्येषु। विलम्बयति यो नरः।
तत् कृत्यं देवतास् तस्य। कोपाद् विघ्नन्त्य् असंशयम्॥१९९॥

तथा च।

यस्य तस्य हि कार्यस्य। फलितस्य विशेषतः।
क्षिप्रम् अक्रियमाणस्य। कालः पिबति तद्रसम्॥२००॥

तद् *गृहायातस् ते हतशत्रोः सर्वं निर्व्याकुलतया कथयिष्यामि।

अथासौ तद्वचनम् आकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलायै प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तः कुम्भीपाकन्यायम् आपन्नाः। एवं शत्रून् निःशेषतां नीत्वा भूयो ऽपि मेघवर्णस् तद् एव न्यग्रोधपादपदुर्गं जगाम।

ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनम् अपृच्छत्। तात। कथं त्वया शत्रुमध्ये गतेन कालो यापितः। यतः।

वरम् अग्नौ प्रदीप्ते *तु। प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो। मुहूर्तम् अपि सेवितः॥ २०१॥

तद् आकर्ण्य स्थिरजीव्य् आह। भद्र।

उपनतभयैर् यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान् कृपणो ऽपि वा।
करिकरनिभौ ज्याघाताङ्कौ महास्त्रविशारदौ
रचितवलयैः स्त्रीवद् बद्धौ करौ हि किरीटिना॥ २०२॥ hari

शक्तेनापि सदा नरेन्द्र विदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रे ऽपि पापे जने।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च
भीमेनातिबलेन *मत्स्यभवने किं नोषितं सूदवत्॥ २०३॥ śārdū

यद् वा तद् वा विषमपतितं साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्यात्।
किं गाण्डीवस्फुरदुरुगुणास्फालनक्रूरपाणिर्
नासील् लीलानटनविलसन्मेखलः सव्यसाची॥ २०४॥ mandā

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं समीक्ष्य क्रमम्।
देवेन्द्रद्रविणेश्वरान्तकसमैर् अप्य् अर्चितो भ्रातृभिः
किं क्लिष्टं सुचिरं त्रिदण्डम् अवहच् छ्रीमान् न धर्मात्मजः॥ २०५॥ śārdū

रूपाभिजनसंपन्नौ *कुन्तीपुत्रौ बलान्वितौ।
गोकर्मसंख्याव्यापारे विराटप्रेष्यतां गतौ॥ २०६॥

रूपेणाप्रतिमेन यौवनगुणैर् वंशे शुभे जातया
कान्त्या श्रीर् इव याच सापि विदशां कालक्रमाद् आगता।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपम् आज्ञप्तया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम्॥ २०७॥ śārdū

मेघवर्ण आह। तात। असिधाराव्रतम् इव मन्ये। यद् अरिणा सह संवासः। सो ऽब्रवीत्। एवम् एतत्। परं न तादृङ् मूर्खसमागमः क्वापि मया दृष्टः। न च महाप्राज्ञम्

अनेकशास्त्रेष्व् अप्रतिहतबुद्धिं रक्ताक्षं विना धीमान्। यत्कारणम्। तेन मदीयं यथावस्थितं चित्तं ज्ञातम्। ये पुनस् त्व् अन्ये मन्त्रिणः। ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनो ऽतत्त्वकुशलाः। यैर् इदम् अपि न ज्ञातम्।

अरितो ऽभ्यागतो भृत्यो। दुष्टस् तत्सङ्गतत्परः।
अपसर्प्य सधर्मत्वान्। नित्योद्वेगी च दूषितः ॥२०८॥
आसने शयने याने। पानभोजनवस्तुषु।
दृष्टादृष्टाः प्रमत्तेषु। प्रहरन्त्य् अरयो ऽरिषु ॥२०९॥
तस्मात् सर्वप्रयत्नेन। त्रिवर्गनिलयं बुधः।
आत्मानम् आदृतो रक्षेत्। प्रमादाद् धि विनश्यति ॥२१०॥

साधु चेदम् उच्यते।

दुर्मन्त्रिणं कम् उपयान्ति न नीतिदोषाः
संतापयन्ति कम् अपथ्यभुजं न रोगाः।
कं श्रीर् न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ॥२११॥ vasa
लुब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टक्रियस्य कुलम् अर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥२१२॥ vasa

तत्। राजन्। असिधाराव्रतं मयाचरितम् अरिसंसर्गात्। इति यद् भवतोक्तम्। तन् मया साक्षाद् एवानुभूतम्। उक्तं च।

स्कन्धेनापि वहेच् छत्रुं। कालम् आसाद्य बुद्धिमान्।
महता कृष्णसर्पेण। मण्डूका बहवो हताः ॥२१३॥

मेघवर्ण आह। कथम् एतत्। स्थिरजीवी कथयति।

## ॥ कथा १६ ॥

अस्ति कस्मिंश्चित् प्रदेशे परिणतवया मन्दविषो नाम कृष्णसर्पः। स एवं चित्तेन समर्थितवान्। कथं नाम मया सुखोपायवृत्त्या वर्तितव्यम्। इति। ततो बहुमण्डूकं ह्रदम् उपगम्याधृतिपरीतम् इवात्मानं दर्शितवान्। अथ तथा स्थिते तस्मिन्न् उदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः। माम। किम् अद्य यथापूर्वम् आहारार्थं

न विहरसि । सो ऽब्रवीत् । भद्र ' कुतो मे मन्दभाग्यस्याहारे ऽभिलाषः । यत्कारणम् ' अद्य रात्रौ प्रदोष एव मयाहारार्थं विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया क्रमः सज्जितः । सो ऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां ब्राह्मणानाम् अन्तर् अपक्रान्तो न विभावितो मया क्वापि गतः । तत्सादृश्यमोहितचित्तेन मया कस्यचिद् ब्राह्मणसूनोर् ह्रदतट*जलान्तःस्थो ऽङ्गुष्ठो दष्टः । ततो ऽसौ सपदि पञ्चत्वम् उपगतः । अथ तत्पित्रा दुःखितेनाहं शप्तः ' यथा । दुरात्मन् ' त्वया निरपराधो यन् मत्सुतो दष्टः ' तद् अनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि । तत्प्रसादलब्धजीविकया वर्तिष्यसे ' इति । ततो ऽहं युष्माकं वाहनार्थम् आजगाम ।

तेन च सर्वमण्डूकानाम् इदम् आवेदितम् । ततस् तैः प्रहृष्टमनोभिः सर्वैर् एव गत्वा जलपादनाम्नो *दर्दुरराजस्य विज्ञप्तम् । अथासाव् अपि मन्त्रिपरिवृतः ' अत्यद्भुतम् ' इति मन्यमानः ससंभ्रमं ह्रदाद् उत्तीर्य मन्दविषस्य फणप्रदेशम् अधिरूढः । शेषा अपि यथाज्येष्ठं तत्पृष्ठोपरि समारुरुहुः । किं बहुना । तदपरे स्थानम् अनाप्नुवन्तस् तस्यानुपदम् एव धावन्ति । मन्दविषो ऽप्य् आत्मपुष्ट्यर्थम् अनेकप्रकारगतिविशेषान् अदर्शयत् । अथ जलपादो लब्धतदङ्गसंस्पर्शसुखस् तम् आह ।

न तथा करिणा यानं ' तुरगेण रथेन वा ।
नरयानेन वा यानं ' यथा मन्दविषेण मे ॥२१४॥

अथान्येद्युर् मन्दविषश् छद्मना मन्दं मन्दं विसर्पति । तद् दृष्ट्वा जलपादो ऽब्रवीत् । भद्र मन्दविष ' यथापूर्वं किम् अद्य न साधूह्यते । मन्दविषो ऽब्रवीत् । देव ' अद्याहारवैकल्यान् न मे

वोढुं शक्तिर् अस्ति । अथासाव् अब्रवीत् । भद्र, भक्षय क्षुद्रमण्डूकान् । तच् छ्रुत्वा प्रहर्षितसर्वगात्रो मन्दविषः ससंभ्रमम् अब्रवीत् । ममायम् एव *विप्रशापो ऽस्ति । तत् तवानेनाज्ञावचनेन प्रीणितो ऽस्मि । ततो ऽसौ नैरन्तर्येण मण्डूकान् भक्षयन् कतिपयैर् एवाहोभिर् बलवान् संवृत्तः, प्रहृष्टश् चान्तर्लीनम् अवहस्येदम् अब्रवीत् ।

मण्डूका विविधा ह्य् एतच्छलपूर्वोपसाधिताः ।
कियन्तं कालम् अक्षीणा भवेयुः खादतो मम ॥२१५॥

जलपादो ऽपि मन्दविषेण कृतकवचनव्यामोहितचित्तः किम् अपि नावबुध्यते । अत्रान्तरे ऽन्यो महाकायः कृष्णसर्पस् तम् उद्देशम् आयातः । तं च मण्डूकैर् वाह्यमानं दृष्ट्वा स विस्मयम् अगमत्, आह च । वयस्य, यद् अस्माकम् अशनम्, तैर् वाह्यसे । विरुद्धम् एतत् । मन्दविषो ऽब्रवीत् ।

सर्वम् एतद् विजानामि, यथावाह्यो ऽस्मि *दर्दुरैः ।
किंचित्कालं प्रतीक्षे ऽहं, घृतान्धो ब्राह्मणो यथा ॥२१६॥

सो ऽब्रवीत् । कथम् एतत् । मन्दविषः कथयति ।

## ॥ कथा १७ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः । तस्य भार्या पुंश्चल्य् अन्यासक्तमना अजस्रं विटाय सखण्डघृत*पूरान् कृत्वा भर्तुश् चौरिकया प्रयच्छति । अथ कदाचिद् भर्त्रा दृष्टा, उक्ता च । भद्रे, किम् एतत् परिपच्यते, कुत्र वाजस्रं नयसि । कथय सत्यम् । सा चोत्पन्नप्रतिभा कृतकवचनैर् भर्तारम् अब्रवीत् ।

अस्त्य् अत्र नातिदूरे भगवत्या देव्या आयतनम् । तत्राहम् उपोषिता सती बलिं भक्ष्यविशेषांश् चापूर्वान् नयामि । अथ तस्य पश्यतो गृहीत्वा देव्यायतनाभिमुखी प्रतस्थे । यत्कारणम् , देव्या निवेदितेनानेन मदीयो भर्तैवं मंस्यते , यन् मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान् नित्यम् एव नयति , इति । अथ देव्यायतने गत्वा स्नानार्थं नद्याम् अवतीर्य यावत् स्नानक्रियां करोति , तावद् भर्ता मार्गान्तरेणागत्य देव्याः पृष्ठतो ऽदृश्यो ऽवतस्थे । अथ सा ब्राह्मणी स्नात्वा देव्यायतनम् आगत्य स्नानानुलेपनधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत् । भगवति , केन प्रकारेण मम भर्तान्धो भविष्यति । तच् छ्रुत्वा स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद । यदि तस्य त्वम् अजस्रं घृतघृतपूरादि भक्ष्यं प्रयच्छसि , ततः शीघ्रम् अन्धो भविष्यति । सा तु बन्धुकी कृतकवचनवञ्चितमनास् तस्मै ब्राह्मणाय तद् एव नित्यं प्रददौ । अथान्येद्युर् ब्राह्मणेनाभिहितम् । भद्रे , नाहं सुतरां पश्यामि । तच् छ्रुत्वा चिन्तितम् अनया । देवीप्रसादो ऽयम् , इति । अथ *तस्या हृदयवल्लभो विटस् तत्सकाशम् , अन्धीभूतो ऽयं ब्राह्मणः किं मम करिष्यति , इति निःशङ्कं प्रतिदिनम् अभ्येति । अथान्येद्युस् तं प्रविशन्तम् अभ्याशगतं दृष्ट्वा केशेर् गृहीत्वा लगुडपार्ष्णिप्रहारैस् तावद् अताडयत् , यावद् असौ पञ्चत्वम् आप । ताम् अपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज ॥

अतो ऽहं ब्रवीमि । सर्वम् एतद् विजानामि , इत्यादि । अथ मन्दविषो ऽन्तर्लीनम् अवहस्य पुनर् अपि , मण्डूका विविधाः स्वादाय , इति तद् एवाब्रवीत् । अथ जलपादस्

तच् छ्रुत्वा सुतराम् आविग्नहृदयः । किम् अनेनाभिहितम् । इति तम् अपृच्छत् । भद्र । किं त्वयाभिहितम् इदं विरुद्धवचः । अथासाव् आकारप्रच्छादनार्थम् । न किंचित् । इत्य् अब्रवीत् । तथैव कृतकवचनव्यामोहितचित्तो जलपादस् तस्य दुष्टाभिसंधिं नावबुध्यते । किं बहुना । तथा तेन ते सर्वे ऽपि भक्षिताः । यथा बीजमात्रम् अपि नावशिष्टम् ॥

अतो ऽहं ब्रवीमि । स्कन्धेनापि वहेच् छत्रुम् । इति । तथा । राजन् । यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः । तथा मयापि सर्वे वैरिणः । इति । साधु चेदम् उच्यते ।

वने प्रज्वलितो वह्निर् । दहन् मूलानि रक्षति ।
समूलोन्मूलनं कुर्याद् । वायुर्यो मृदुशीतलः ॥ २१७ ॥

मेघवर्णो ऽब्रवीत् । एवम् एतत् । अपि च ।

महत्त्वम् एतन् महतां । नयालंकारधारिणाम् ।
न मुञ्चन्ति यद् आरब्धं । कृच्छ्रे ऽपि व्यसनोदये ॥ २१८ ॥

सो ऽब्रवीत् । एवम् एतत् । उक्तं च ।

ऋणशेषम् अग्निशेषं । शत्रुशेषं तथैव च ।
व्याधिशेषं च निःशेषं । कृत्वा प्राज्ञो न सीदति ॥ २१९ ॥

देव । भाग्यवांस् त्वम् एवासि । यस्यारब्धं सर्वम् अपि संसिध्यति । तन् न केवलं शौर्यं कृत्यं साधयति । किं तु प्रज्ञया यत् क्रियते । तद् एव विजयाय भवति । उक्तं च ।

शस्त्रैर् हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास् तु रिपवः सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरम् एकं
प्रज्ञा कुलं च विभवं च यशश् च हन्ति ॥ २२० ॥ vasa

तद् एवं प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः संभवन्ति । यतः ।

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयम् उपनमन्त्य् अर्था मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस् तर्कश् चित्तं समुन्नतिम् अश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ २२१ ॥ hari 27

तथा नयत्यागशौर्यसंपन्ने पुरुषे राज्यम् । इति । उक्तं च ।

त्यागिनि शूरे विदुषि च । संसर्गरुचिर् जनो गुणी भवति ।
गुणवति धनं धनाच् छ्रीः । श्रीमत्य् आज्ञा ततो राज्यम् ॥ २२२ ॥ ar 39

मेघवर्ण आह । नूनं सद्यःफलानि नीतिशास्त्राणि । यत् त्वयानुकूल्येनानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः । स्थिरजीव्य् आह ।

तीक्ष्णोपायप्राप्तिगम्यो ऽपि यो ऽर्थस्
तस्याप्य् आदौ संश्रयः साधु युक्तः ।
उत्तुङ्गाग्रः सारभूतो वनानां
नानभ्यर्च्य च्छिद्यते पादपेन्द्रः ॥२२३॥ śāli

अथवा । स्वामिन् । किं तेनाभिहितेन । यद् अनन्तरकाले क्रियारहितम् असुखसाध्यं वा भवति । साधु चेदम् उच्यते ।

अनिश्चितैर् अध्यवसायभीरुभिः
पदे पदे दोषशतानि दर्शिभिः ।
फलैर् विसंवादम् उपागता गिरः
प्रयान्ति लोके परिहास्यवस्तुताम् ॥२२४॥ vaṃśa

न च लघुष्व् अपि कर्तव्येषु धीमद्भिर् अनादरः कार्यः । यतः ।

*शक्ष्यामि कर्तुम् इदम् अल्पम् अयत्नसाध्यम्
अत्रादरः क इति कृत्यम् *उपेक्षमाणाः ।
केचित् प्रमत्तमनसः परितापदुःखम्
आपत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥२२५॥ vasa

तद् अद्य जितारेर् मद्विभोर् यथापूर्वं निद्रालाभो भविष्यति । उच्यते चैतत् ।

निःसर्पे बद्धसर्पे वा । भवने सुप्यते सुखम् ।
दृष्टनष्टभुजंगे तु । निद्रा दुःखेन लभ्यते ॥२२६॥

तथा च । विस्तीर्णव्यवसायसाध्यमहतां स्निग्धैः प्रयुक्ताशिषां
कार्याणां नयसाहसोन्नतिमताम् इच्छापदारोहिणाम् ।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद् गताः
सामर्षे हृदये ऽवकाशविषया तावत् कथं निर्वृतिः ॥२२७॥ śārdū

तद् अवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयम् । तद् इदम् अधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेणाचलच्छत्रासनश्रीश् चिरं भुङ्क्ष्व । अपि च ।

प्रजा न रञ्जयेद् यस् तु । राजा रक्षादिभिर् गुणैः ।
अजागलस्तनस्येव । तस्य राज्यं निरर्थकम् ॥२२८॥

किं च । गुणेषु रागो व्यसनेष्व् अनादरो
रतिः सुनीतेषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम् ॥२२९॥ vaṃśa

न च त्वया । प्राप्तराज्यो ऽहम् । इति मत्वा श्रीमदेनात्मा व्यंसयितव्यः । यत्कारणम् ।

चला हि राज्ञां विभूतयः। वंशारोहणवद् राज्यलक्ष्मीर् दुरारोहा। क्षणविनिपातरता प्रयत्नशतैर् अपि धार्यमाणा दुर्धरा। स्वाराधिताप्य् अन्ते विप्रलम्भिनी। वानरजातिर् इवानेकचित्ता। पद्मपत्त्रोदकम् इवाघटितसंश्लेषा। पवनगतिर् इवातिचपला। *अनार्यसंगतम् इवास्थिरा। आशीविष इव दुरुपचारा। संध्याभ्ररेखेव मुहूर्तरागा। जलबुद्बुदावलीव स्वभावभङ्गुरा। शरीरप्रकृतिर् इव कृतघ्ना। स्वप्नलब्धद्रव्यराशिर् इव क्षणदृष्टनष्टा।

अपि च।
यदैव राज्ये क्रियते ऽभिषेकस्
तदैव बुद्धिर् व्यसनेषु योज्या।
घटा हि राज्ञाम् अभिषेककाले
सहाम्भसैवापदम् उद्गिरन्ति॥२३०॥

न च कश्चिद् अनधिगमनीयो नामास्त्य् आपदाम्। उक्तं च।

रामस्य व्रजनं बलेर् नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात परिभ्रंशनम्।
नाट्याचार्यकम् अर्जुनस्य पतनं संचिन्त्य लङ्केश्वरे
सर्वं कालवशाज् जनो ऽत्र सहते कः कं परित्रायते॥२३१॥

क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद् गतः
क्व स जलनिधेर् वेलां बद्ध्वा नृपः सगरस् तथा।
क्व स करतलाज् जातो वैन्यः क्व सूर्यतनुर् मनुर्
ननु बलवता कालेनैते प्रबोध्य निमीलिताः॥२३२॥

अपि च।
मान्धाता क्व गतस् त्रिलोकविजयी राजा क्व सत्यव्रतो
देवानां नृपतिर् गतः क्व नहुषः सच्छास्त्रवित केशवः।
मन्ये ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः
कालेनैव महात्मना ननु कृताः कालेन निर्वासिताः॥२३३॥

अपि च।
स च नृपतिस् ते सचिवास् ताः प्रमदास् तानि काननवनानि।
स च ते च ताश् च तानि च। कृतान्तदृष्टानि नष्टानि॥२३४॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीम् अवाप्य न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व॥

समाप्तं चेदं

संधिविग्रहादिषाड्गुण्यसंबद्धं काकोलूकीयं नाम तृतीयं तन्त्रम्। यस्यायम् आद्यश्लोकः।

न विश्वसेत् पूर्वविरोधितस्य
शत्रोस् तु मित्रत्वम् उपागतस्य।
दग्धां गुहां पश्यत घूकपूर्णां
काकप्रणीतेन कृताशनेन॥३॥



## ॥ अर्हम् ॥

अथेदम् आरभ्यते लब्धप्रणाशं नाम चतुर्थं तन्त्रम्। यस्यायम् आद्यश्लोकः।

प्राप्तम् अर्थं तु यो मोहात्। सान्त्वनैः प्रतिमुञ्चति।
स तथा वञ्च्यते मूढो। मकरः कपिना यथा॥१॥

राजपुत्राः पृच्छन्ति। कथम् एतत्। विष्णुशर्मा कथयति।

अस्ति समुद्रोपकण्ठे महान् सदाफलो जम्बूपादपः। तत्र रक्तमुखो नाम वानरः प्रतिवसति स्म। अथ कदाचित् तस्य तरोर् अधस्तात् समुद्रसलिलान् निष्क्रम्य विकरालमुखो नाम मकरः सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत। ततश् च रक्तमुखेन प्रोक्तः। भवान् अतिथिः। तद् भक्षय मया दत्तान्य् अमृततुल्यानि जम्बूफलानि। उक्तं च।

प्रियो वा यदि वा द्वेष्यो। मूर्खः पण्डित एव वा।
वैश्वदेवे तु संप्राप्ते। सो ऽतिथिः स्वर्गसंक्रमः॥२॥
न पृच्छेद् गोत्रचरणं। स्वाध्यायं देशम् एव वा।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुर् अब्रवीत्॥३॥

तथा च। दूराधातं पथश्रान्तं। वैश्वदेवान्तम् आगतम्।
अतिथिं पूजयेद् यस् तु। स याति परमां गतिम्॥४॥

अन्यच् च। अपूजितो ऽतिथिर् यस्य। गृहाद् याति विनिःश्वसन्।
गच्छन्ति पितरस् तस्य। विमुखाः सह दैवतैः॥५॥

एवम् उक्त्वा जम्बूफलानि तस्मै प्रददौ। सो ऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखम् अनुभूय भूयो ऽपि स्वगृहम् अध्यास्ते। एवं नित्यम् एव तौ वानरमकरौ जम्बूच्छायाश्रितौ विविधसाधुगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सो ऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति। अथ तयान्यतमस्मिन्न् अहनि स पृष्टः। नाथ। क्वैवंविधान्य् अमृतमयफलानि प्राप्नोषि। सो ऽब्रवीत्। भद्रे। ममास्ति परमसुहृद् रक्तमुखो नाम वानरः। स प्रीतिपूर्वम् इमानि फलानि प्रयच्छति। अथ तयाभिहितम्। यः सदैवेदृशान्य् अमृतफलानि भक्षयति। तस्य हृदयम् अमृतमयं भवि-

ष्यति । तद् यदि मया भार्यया प्रयोजनम् । तत् तस्य हृदयं मे प्रयच्छ । येन तद् भक्षयित्वा जरादिरहिता त्वया सह क्रीडामि । सो ऽब्रवीत् । भद्रे । एकं तावत् प्रतिपन्नभ्राता सो ऽस्माकम् । अपरं फलदाता । ततो व्यापादयितुं न शक्यते । तत् त्यजामुं मिथ्याग्रहम् । उक्तं च ।

एका प्रसूयते माता । द्वितीया वाक् प्रसूयते ।
वाग्जातम् अधिकं प्रोचुः । सोदर्याद् अपि बान्धवात् ॥ ६ ॥

साब्रवीत् । त्वया मद्वचनं कदाचिन् नान्यथा कृतम् । तन् नूनम् एषा वानरी भविष्यति । तदनुरागतस् त्वं सकलम् अपि दिनं तत्र गमयसि । ततो मे वाञ्छितं न प्रयच्छसि । अतः कारणान् मया सह संगमे प्राप्ते रात्रौ प्रायो हुतवहज्वालासमं प्रोच्छ्वसिषि । कण्ठाश्लेषे चुम्बने च मयि शिथिलताम् आलम्बसे । तन् नूनं तव हृदये काचिद् अपरा महिला स्थिता । अथासौ स्वपत्न्याः पुरतः सुदीनम् उवाच ।

मयि त्वत्पादपतिते । किंकरत्वम् उपागते ।
त्वं प्राणवल्लभे कस्मात् । कोपने कोपम् एष्यसि ॥ ७ ॥

सापि तद्वचनम् आकर्ण्याश्रुप्लुतमुखी तम् उवाच ।

सार्धं मनोरथशतैस् तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकम् अस्ति न च किंचिद् इहावकाशस्
तस्मात् कृतं चरणपातविडम्बनाभिः ॥ ८ ॥

अपरम् । यदि ते न वल्लभा सा । तत् किं मया प्रोक्तो ऽपि न व्यापादयसि । अथ स मर्कटः । तत् कस् तेन सह तव स्नेहः । तत् किं बहुना । यदि तस्य हृदयं न भक्षयामि । तदा तवोपरि प्रायोपवेशनं कृत्वा प्राणांस् त्यक्ष्यामि ।

एवं तस्या निश्चयं ज्ञात्वा चिन्ताकुलितचित्तः स प्राह । अहो । साध्व् इदम् उच्यते ।

वज्रलेपस्य मूर्खस्य । नारीणां कर्कटस्य च ।
एको ग्रहस् तु मीनानां । नीलीमद्यपयोस् तथा ॥ ९ ॥

तत् किं करोमि । कथम् असौ मे वध्यः स्यात् । इति विचिन्त्य वानरपार्श्वम् अगमत् । वानरो ऽपि तं चिरायातं सोद्वेगम् इवालोक्य प्राह । भो मित्र । किम् अद्य चिरवेलया समायातो ऽसि । कथं साह्लादं नालपसि । न च सुभाषितानि पठसि । सो ऽब्रवीत् । मित्र । अद्याहं तव भ्रातृजायया निष्ठुरगिराभिहितः । यथा । भोः कृतघ्न । मा मे त्वं स्वमुखं दर्शय । यतस् त्वं प्रतिदिनं मित्रम् उपजीवसि । न च तस्य स्वगृहद्वारदर्शनेनापि प्रत्युपकारं करोषि । तत् ते प्रायश्चित्तम् अपि नास्ति । उक्तं च ।

ब्रह्मघ्ने च सुरापे च । चौरे भग्नव्रते तथा ।
निष्कृतिर् विहिता सद्भिः । कृतघ्ने नास्ति निष्कृतिः ॥ १० ॥

तत् त्वं मम देवरं प्रत्युपकारार्थं गृहम् आनय । नो चेत् । त्वया सह मे परलोके दर्शनम् ।

तद् अहं तया प्रोक्तस् तव सकाशम् आगतः। तेन मे तया सह त्वदर्थे कलहायमानस्यैयती वेला बभूव। तद् आगच्छ मे गृहम्। तव भ्रातृजाया रचितचतुष्का प्रगुणितवस्त्रमणिमाणिक्योचितसत्कारद्वारदेशबद्धवन्दनमालिका सोत्कण्ठा तिष्ठति। मर्कट आह। भो मित्र। उचितम् अभिहितं मे भ्रातृपत्न्या। उक्तं च। यतः।

ददाति प्रतिगृह्णाति। गुह्यम् आख्याति पृच्छति।
भुङ्क्ते भोजयते चैव। षड्विधं प्रीतिलक्षणम्॥ ११॥

परं वनचरा वयम्। युष्मदीयं च जलान्तर् गृहम्। तत् कथं तत्र गन्तुं शक्यते। तस्मात् ताम् अपि भ्रातृपत्नीम् अत्रानय। येन प्रणम्य तस्या आशीर्वादं गृह्णामि। सो ऽब्रवीत्। मित्र। अस्ति समुद्रान्तः सुरम्ये पुलिनप्रदेशे ऽस्मद्गृहम्। तन् मम पृष्ठम् आरूढः सुखेनाकुतोभयो गच्छ। सो ऽपि तच् छ्रुत्वा सानन्दम् आह। भद्र। यद्य् एवम्। तर्हि। त्वर्यताम्। किं विलम्बितेन। एषो ऽहं तव पृष्ठम् आरूढः। तथानुष्ठिते ऽगाधे जलधौ गच्छन्तम् आलोक्य भयत्रस्तमना वानरः प्रोवाच। भ्रातः। शनैर् गम्यताम्। प्लाव्यते जलकल्लोलैर् मे शरीरम्। तच् छ्रुत्वा मकरश् चिन्तयाम् आस। एष तावन् मत्पृष्ठच्युतो ऽगाधसलिलत्वात् तिलमात्रम् अपि गन्तुं न शक्तः। इति मम वशीभूतः। तत् कथयाम्य् अस्य स्वाभिप्रायम्। येनाभीष्टदेवताम् अनुस्मरति। उक्तवांश् च। भद्र। मया त्वं भार्यावाक्येन विश्वास्य वधार्थम् आनीतः। तत् स्मर्यताम् अभीष्टदेवता। सो ऽब्रवीत्। भ्रातः। किं मयापकृतं तस्या भवतो वा। येन वधोपायश् चिन्तितः। मकर आह। भोः। तस्यास् तावद् अमृतरसफलास्वादनसुस्वादितस् तव हृदयस्य भक्षणे दौहृदः संजातः। तेनैतद् अनुष्ठितम्। ततः प्रत्युत्पन्नमतिर् वानरः प्राह। भद्र। यद्य् एवम्। किं त्वया *तत्रैव मम न कथितम्। येन जम्बूकोटरान्तरस्थापितं सुस्वादु हृदयं सहैव समानेष्यम्। तद् वृथाहं स्वादुहृदयेन विना शून्यहृदयो ऽत्रानीतः। तच् छ्रुत्वा मकरः सानन्दम् आह। भद्र। यद्य् एवम्। तद् अर्पय मे तद् एव हृदयम्। येन सा दुष्टपत्नी तद् भक्षयित्वा त्व् अनशनान् निवर्तते। अहं च त्वां च तम् एव जम्बूपादपं प्रापयामि।

एवम् उक्त्वा निवृत्य तद् एव जम्बूतरुतलम् अगमत्। वानरो ऽपि जल्पितविविधदेवतोपयाचितशतः कथम् अपि जलधितीरम् आसाद्य दीर्घदीर्घतरक्रमचङ्क्रमणेन तम् एव जम्बूपादपम् आरूढश् चिन्तयाम् आस। अहो। मया लब्धाः प्राणाः। अथवा साध्व् इदम् उच्यते।

न विश्वसेद् अविश्वस्ते। विश्वस्ते ऽपि न विश्वसेत्।
विश्वासाद् भयम् उत्पन्नं। मूलाद् अपि निकृन्तति॥ १२॥

तन् ममैतद् अद्य पुनर्जन्मदिनम् इव संजातम्। मकर आह। भो मित्र। अर्पय मे हृदयम्। येन ते भ्रातृपत्नी तद् भक्षयित्वानशनाद् उत्तिष्ठति। अथ विहस्य निर्भर्त्समानो मर्कट आह। धिग् मूर्ख। विश्वासघातक। किं कस्यचिद् धृदयं द्वितीयं भवति। तद् गम्यतां स्वस्थानम्। अस्य जम्बूवृक्षस्याधस्तान् न पुनर् आगन्तव्यम्। इति। उक्तं च।

सकृद् दुष्टं च यो मित्रं ' पुनः संधातुम् इच्छति ।
स मृत्युम् उपगृह्णाति ' गर्भम् अश्वतरी यथा ॥१३॥

तच् छ्रुत्वा सविलक्षो मकरश् चिन्तितवान् । अहो । किं मूढेनास्य स्वाभिप्रायो निवेदितः । तद् यदि कथंचित् पुनर् अपि विश्वासं गच्छति । तद् भूयो ऽपि विश्वासयामि । इति विचिन्त्य प्रोवाच । मित्र । *अस्या न किंचिद् धृदयेन प्रयोजनम् । मया तव हृदयाभिप्रायपरीक्षणार्थं हास्येनेदम् अभिहितम् । तद् आगच्छ प्राघुणकन्यायेनास्मदावासम् । त्वद्भ्रातृपत्नी त्वां प्रत्य् उत्कण्ठोत्कण्ठा तिष्ठति । वानर आह । भो दुष्ट । गम्यताम् अधुना । नाहम् आगमिष्यामि । यतः ।

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे प्रियदर्शनस्य
न गङ्गदत्तः पुनर् एति कूपम् ॥१४॥ upa

मकर आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा १ ॥

अस्ति कुत्रापि कूपे गङ्गदत्तो नाम मण्डूकराजः । स कदाचिद् दायादैर् उद्वेजितो ऽरघट्टघटीमालाम् आरुह्य कूपात् क्रमेण निष्क्रान्तः । अथ तेन चिन्तितम् । कथं तेषां दायादानां मया प्रत्यपकरणीयम् । उक्तं च ।

आपदि येनोपकृतं ' येन च हसितं दशासु विषमासु ।
उपकृत्य तयोर् उभयोः ' पुनर् अपि जातं नरं मन्ये ॥१५॥

इति । एवं चिन्तयन् स बिले प्रविशन्तं प्रियदर्शनाभिधं कृष्णसर्पम् अपश्यत् । तं दृष्ट्वा भूयो ऽप्य् अचिन्तयत् । एनं कृष्णसर्पं तत्र कूपे नीत्वा सकलदायादानाम् उच्छेदं करोमि । उक्तं च ' यतः ।

शत्रुम् उत्पाटयेत् प्राज्ञस् ' तीक्ष्णं तीक्ष्णेन शत्रुणा ।
*व्यथाकरं सुखार्थाय ' कण्टकेनेव कण्टकम् ॥१६॥

एवं संपरिभाव्य बिलद्वारं गत्वा तम् आहूतवान् । एह्य् एहि '

प्रियदर्शन ' एहि ' इति । तच् छ्रुत्वा सर्पश् चिन्तयाम् आस । य एष माम् आह्वयति ' स स्वजातीयो न भवति । नैषा च सर्पवाणी । अन्येन केनापि सह मम मर्त्यलोके संधानं नास्ति । तद् अत्रैव स्थितस् तावद् वेद्मि ' को ऽयं भविष्यति । उक्तं च ' यतः ।

यस्य न ज्ञायते शीलं ' न कुलं न पराक्रमः ।
न तेन संगतिं कुर्याद् ' इत्य् उवाच बृहस्पतिः ॥१७॥

कदाचित् को ऽपि मन्त्रवाद्य् औषधिचतुरो वा माम् आहूय बन्धने क्षिपति । अथवा कश्चित् पुरुषो वैरम् अनुस्मृत्य कस्यचित् पाक्षिकस्यार्थे आह्वयति । आह च । को भवान् । स आह । अहं गङ्गदत्तो नाम मण्डूकाधिपतिस् त्वत्सकाशं मैत्र्यर्थम् अभ्यागतः । तच् छ्रुत्वा सर्प आह । भोः ' अश्रद्धेयम् एतत् ' तृणानां वह्निना सह प्रेमबन्धः ; उक्तं च ।

यो यस्य जायते वध्यः ' स स्वप्ने ऽपि कथंचन ।
न तत्समीपम् अभ्येति ' तत् किम् एतत् प्रजल्पसि ॥१८॥

गङ्गदत्त आह । भोः ' सत्यम् इदम् । स्वभाववैरी भवान् अस्माकम् । परं परिभवाद् अहं त्वत्सकाशं प्राप्तः । उक्तं च ' यतः ।

सर्वस्वनाशे संजाते ' प्राणानाम् अपि संशये ।
अपि शत्रुं प्रणम्योच्चै ' रक्षेत् प्राणान् धनानि च ॥१९॥

सर्प आह । अथ कस्मात् ते परिभवः । स आह । दायादेभ्यः । सर्पो ऽब्रवीत् । तत् क्व त आश्रयः ' ह्रदे ' कूपे ' वाप्याम् ' तडागे वा । स आह । कूपे ममाश्रयः । सर्प आह । तन् नास्ति तत्र मे प्रवेशः । प्रविष्टस्य स्थानं नास्ति ' यत्र स्थितस् तव दायादान् व्यापादयामि । तद् गम्यताम् ' इति । उक्तं च ।

यच् छक्यं ग्रसितुं ग्रासं, ग्रस्तं परिणमेच् च यत् ।
हितं च परिणामे यत्, तद् भक्ष्यं भूतिम् इच्छता ॥२०॥

गङ्गदत्त आह । भोः, समागच्छ त्वम् । अहं सुखोपायेन तव तत्र प्रवेशं करिष्यामि । तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरम् अस्ति । तत्र स्थितस् त्वं लीलया तान् दायादान् साधयिष्यसि । तच् छ्रुत्वा सर्पो व्यचिन्तयत् । अहं तावद् वृद्धः । कदाचित् कथंचिन् मूषकम् एकं प्राप्नोमि, न वा । अथवा साध्व् इदम् उच्यते ।

यो हि प्राणपरिक्षीणः, सहायैः परिवर्जितः ।
सो ऽपि सर्वसुखोपायां, वृत्तिम् आरभते बुधः ॥२१॥

एवं विचिन्त्य तम् आह । भो गङ्गदत्त, यद्य् एवम्, तद् अग्रे भव, येन तत्र गच्छावः । गङ्गदत्त आह । भोः प्रियदर्शन, अहं त्वां सुखोपायेन तत्र नयामि स्थानं च दर्शयिष्यामि । परं त्वयास्मत्परिजनो रक्षणीयः । केवलं यान् अहं दर्शयामि, त एव भक्षणीयाः, इति । सर्प आह । भद्र, सांप्रतं त्वं मे मित्रत्वम् उपागतः । तन् न भेतव्यम् । यद् एव तवाभिरुचितम्, तद् एवाचरिष्यामि, इति । एवम् उक्त्वा बिलान् निष्क्रम्य तम् आलिङ्ग्य च तेनैव सह प्रस्थितः । अथ कूपान्तम् आसाद्यारघट्टघटिकामार्गेण सर्पस् तेन सह तस्यालयं गतः । ततश् च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास् ते दायादाः । तेन च ते सर्वे शनैः शनैर् भक्षिताः । तदभावे केचित् तदीया अपि साशङ्कं विश्वास्य निःशेषिताः । अथ सर्पेणाभिहितम् । भद्र, निःशेषितास् ते रिपवः । तत् प्रयच्छ मे किंचिद् भोजनम्, यतो ऽहं त्वयानीतः । गङ्गदत्त आह । भद्र, कृतं त्वया मित्रकृत्यम् ।

तत् सांप्रतम् अनेनैव घटिकामार्गेण गम्यताम् ' इति । सर्प आह । भो गङ्गदत्त ' न सम्यग् अभिहितं भवता । कथम् अहं तत्र गच्छामि । मदीयबिलदुर्गम् अन्यै रुद्धं भविष्यति । अत्र स्थितस्य मे मण्डूकम् एकैकं स्ववर्गीयम् अपि प्रयच्छ । नो चेत् ' सर्वान् अपि भक्षयिष्यामि । तच् छ्रुत्वा गङ्गदत्तो व्याकुलितमना व्यचिन्तयत् । अहो ' किम् एतन् मया कृतम् एनम् आनीय । तद् यदि निषेधयिष्यामि ' तत् सर्वान् अपि भक्षयिष्यति । अथवा साध्व् इदम् उच्यते ।

यो ऽमित्रं कुरुते मित्रं ' वीर्याभ्यधिकम् आत्मनः ।
स करोति न संदिग्धम् ' आत्मना विषभक्षणम् ॥२२॥

तत् प्रयच्छाम्य् अस्यैकैकं दिनं प्रति सुहृदम् अपि । उक्तं च ।

सर्वस्वहरणे शक्तं ' शत्रुं बुद्धियुता नराः ।
तोषयन्त्य् अल्पदानेन ' वाडवं सागरो यथा ॥२३॥

तथा च ।

सर्वनाशे समुत्पन्ने ' अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं ' सर्वनाशो हि दुःसहः ॥२४॥

तथा च ।

न स स्वल्पकृते भूरि ' नाशयेन् मतिमान् नरः ।
एतद् एव हि पाण्डित्यं ' यत् स्वल्पाद् भूरिरक्षणम् ॥२५॥

एवं निश्चित्यैकैकं मण्डूकं नित्यम् एवादिशत् । सो ऽपि तं भक्षयित्वान्यम् अपि तस्य परोक्षं भक्षयति । अथवा साध्व् इदम् उच्यते ।

यथा हि मलिनैर् वस्त्रैर् ' यत्र तत्रोपविश्यते ।
एवं चलितवृत्तस् तु ' वृत्तशेषं न रक्षति ॥२६॥

अथान्यस्मिन् अहनि तेन मण्डूकान् भक्षयता गङ्गदत्तसुतः सुनदत्तो नाम मण्डूको भक्षितः । तं दृष्ट्वा गङ्गदत्तः सुतारस्वरेण विललाप । ततः स्वपत्न्याभिहितम् ।

किं क्रन्दसि निराक्रन्द ' स्वपक्षक्षयकारक ।
स्वपक्षस्य क्षये जाते ' परित्रां कः करिष्यति ॥२७॥

तद् अद्यापि चिन्त्यताम् आत्मनो निष्क्रमणम् ' अस्य वधोपायो वा । अथ गच्छता कालेन समस्ता अपि निःशेषितास् ते मण्डूकाः । केवलं गङ्गदत्तस् तिष्ठति । ततश् च प्रियदर्शनेनोक्तम् । भद्र गङ्गदत्त ' बुभुक्षितो ऽहम् । निःशेषिताः सर्वे मण्डूकाः । तद् दीयतां किंचिद् भोजनं मे ' यतो ऽहं त्वयानीतः । स आह । भो मित्र ' न त्वयात्र विषये मयि विद्यमाने चिन्ता कार्या । तद् यदि मां प्रेषयसि ' तद् अन्येषाम् अपि कूपानां विश्वास्य सर्वान् मण्डूकान् अत्रानयामि । सो ऽब्रवीत् । मम तावत् त्वम् अभक्ष्यो भ्रातृस्थाने । तद् यद्य् एवं करोषि ' तत् सांप्रतं पितृस्थाने भवसि । तद् एवं कृतोपायचित्तस् तस्मात् कूपान् निष्क्रान्तः । प्रियदर्शनो ऽपि तदागमनकाङ्क्षया तत्रस्थः *प्रतीक्षमाणस् तिष्ठति । अथ चिरात् प्रियदर्शनस् तस्मिन्न् एव कूपे ऽन्यकोटरवासिनीं गोधाम् उवाच । भद्रे ' क्रियतां मे स्तोकं साहाय्यम् ' यतश् चिरपरिचितस् ते गङ्गदत्तः । तद् गत्वा तत्सकाशं कुत्रचिज् जलाशये मम संदेशं कथय ' यद् आगम्यतां द्रुततरम् एकाकिनापि भवता ' यद्य् अन्ये मण्डूका नागच्छन्ति । नाहं त्वया विनात्र वस्तुं शक्नोमि । तथाहं यदि त्वां प्रति विरुद्धम् आचरामि ' तत् मदीयं जन्मसुकृतं तव ' इति । गोधा च तस्य वचनाद् द्रुततरम् अन्विष्य गङ्गदत्तम् आह । भद्र ' तव सुहृत् प्रियदर्शनस् तव मार्गं *समीक्षमाणस् तिष्ठति ।

ततः शीघ्रम् आगम्यताम् । अपरं च । तेन त्वां प्रति विरूपाचरणार्थे जन्मसुकृतम् अन्तरे धृतम् । तन् निःशङ्केन मनसा समागम्यताम् । इति । तच् छ्रुत्वा गङ्गदत्त आह ।

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे प्रियदर्शनस्य
न गङ्गदत्तः पुनर् एति कूपम् ॥२८॥ upa

एवम् उक्त्वा तां विसर्जयाम् आस ॥

तत् । भो दुष्ट जलचर । अहम् अपि गङ्गदत्त इव त्वद्गृहे न कथंचिद् अप्य् आयास्यामि । तच् छ्रुत्वा मकर आह । भो मित्र । नैतद् युज्यति कर्तुम् । सर्वथैव मे कृतघ्नतादोषम् अपनय गृहागमनेन । अन्यथा तवोपरि प्रायोपवेशनं करिष्यामि । वानर आह । मूढ । किम् अहं लम्बकर्णो नाम *दृष्टापायो ऽपि स्वयम् एव तत्रैव गत्वात्मानं व्यापादयिष्यामि । मकर आह । को ऽसौ लम्बकर्णो नाम । कथं *दृष्टापायो मृतः । तन् मे निवेद्यताम् । इति । वानर आह ।

॥ कथा २ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे करालकेसरो नाम सिंहः । तस्य च धूसरको नाम शृगालः सदानुयायी परिचारको ऽस्ति । अथ कदाचित् सिंहस्य हस्तिना सह युध्यमानस्य शरीरे गुरुतरप्रहाराः संजाताः । तैः पदम् अपि चलितुं न शक्नोति । तस्य *चाचलनाद् धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतो ऽन्यस्मिन्न् अहनि तम् अवोचत् । स्वामिन् । बुभुक्षया पीडितो ऽहं पदात् पदम् अपि चलितुं न शक्नोमि । तत् कथं ते शुश्रूषां करोमि । सिंह आह । भो धूसरक । अन्वेषय किंचित् सत्त्वम् । येनेमाम् अवस्थां गतो ऽपि व्यापादयामि । तच् छ्रुत्वा शृगालो ऽन्वेषणं कुर्वन् किंचित्

समीपवर्तिनं ग्रामम् आसाद्य लम्बकर्णनामानं रासभं तडागोपान्ते प्रविरलदूर्वाङ्कुराणि कृच्छ्राद् आस्वादयन्तं दृष्टवान् । ततश् च तेन समीपवर्तिना भूत्वाभिहितः । माम ! मदीयो ऽयं नमस्कारः संभाव्यताम् । चिराद् दृष्टः । कथम् एवं दुर्बलतां गतः । लम्बकर्ण आह । भो भगिनीसुत ! किं करोमि । रजको ऽतिनिर्दयो माम् अतिभारेण पीडयति ! घासमुष्टिम् अपि न प्रयच्छति । केवलं ममात्र धूलिमिश्रितानि दूर्वाङ्कुराणि भक्षयतो नास्ति शरीरपुष्टिः ! इति । शृगाल आह । माम ! यद्य् एवम् ! तद् अस्ति *मरकतसदृशशष्पप्रायो नदीसनाथो रमणीयप्रदेशः । तत्रागत्य मया सह सुभाषितगोष्ठीसुखम् अनुभवंस् तिष्ठ । लम्बकर्ण आह । भो भगिनीसुत ! युक्तम् उक्तं भवता । परं ग्राम्याः पशवो ऽरण्यचराणां वध्याः । तत् किं तेन भव्यप्रदेशेन । शृगाल आह । मा मैवं वद । मद्भुजपञ्जररक्षितः प्रदेशो ऽसौ । तन् नास्ति कस्यचिद् अपरस्य तत्र प्रवेशः । परम् अनेनैव भवदीयविधिना रजककदर्थितास् तिस्रो रासभ्यो ऽनाथाः सन्ति । ताश् च पुष्टिम् आपन्ना यौवनोत्कटा माम् इदम् आहुः । भो मातुलक ! त्वं कम् अपि ग्रामं गत्वास्मदुचितं पतिम् आनय । तदर्थं च त्वाम् अहम् आनेतुम् आयातः । अथ शृगालवचनं श्रुत्वा कामपीडिताङ्गो लम्बकर्णस् तम् उवाच । भद्र ! यद्य् एवम् ! तद् अग्रे भव । त्वरितं तत्र गच्छावः । युक्तं चैतत् ।

नामृतं न विषं किंचिद् ! एकां मुक्त्वा नितम्बिनीम् ।
जीव्यते सङ्गतो यस्या ! म्रियते च वियोगतः ॥२९॥

शृगालेन सहासौ सिंहान्तिकम् उपगतः । सिंहो ऽप्य् अतिमूर्खतया क्रमान्तिकप्राप्तम् अपि खरं दृष्ट्वातिहर्षाद् उत्प्लुत्य तदुपरि

दूरं गत्वा पपात । गर्दभो ऽपि तं वज्रपातम् इव मन्यमानः, किं किम् इदम्, इति विचिन्तयन्न् अक्षततनुर् एव दैवात् कथम् अपि तस्माद् अपेतः । यावच् च पश्चाद् अवलोकयति, तावत् क्रूरं रक्तान्तनयनम् अतिभयानकम् अदृष्टपूर्वं सत्त्वं दृष्ट्वा भयार्तस् त्वरितपदं तद् एव नगरं जगाम, इति ।

अथ गोमायुना सिंहो ऽभिहितः । भोः, किम् एतत् । दृष्टस् ते विक्रमो मया । अथ सिंहः सविस्मयम् आह । भोः, मया न क्रमः सज्जित आसीत् । तत् किम् अहं करोमि । किं मत्क्रमाक्रान्तो गजो ऽपि गच्छेत् । शृगालः प्राह । संप्रत्य् अपि त्वया सज्जितक्रमेण स्थातव्यम्, यतः पुनर् अप्य् अहम् एनं त्वदन्तिकम्, आनेष्यामि । सिंहः प्राह । भद्र, यो मां प्रत्यक्षं दृष्ट्वा गतः, स कथं पुनर् अत्र समेष्यति । तद् अन्यत् किंचित् सत्त्वम् आनय । शृगालः प्राह । किं तवानया चिन्तया । अत्रार्थे ऽहम् एव जागरूकस् तिष्ठामि । इत्य् उक्त्वा शृगालो रासभमार्गेण यावद् गच्छति, तावत् तत्रैव स्थाने चरंस् तिष्ठति । अथ शृगालं दृष्ट्वा रासभः प्राह । भो भागिनेय, भव्यस्थाने त्वयाहं नीतः, यद् दैवान् मृत्युवशं न गतः । तत् कथय, किं तत् सत्त्वम् अतिरौद्रम्, यस्य वज्रोपमप्रहाराद् अहं मुक्तः । तच् छ्रुत्वा शृगालः प्रहसन्न् आह । माम, सा रासभी विहिताद्भुतशृङ्गारा त्वाम् अवलोक्य सानुरागालिङ्गितुम् उत्थिता, त्वं च कातरतया नष्टः । तया पुनर् नश्यतो भवतो ऽवलम्बनार्थं हस्तः प्रसारितः, न चान्यद् अत्र कारणम् । तद् आगच्छ । सा त्वत्कृते प्रायोपवेशनकृतमतिर् एतद् वदति । यदि मे लम्बकर्णो भर्ता न भवति, तद् अहम् अग्निं जलं *वा प्रविशामि, विषं वा

भक्षयामि । तथापि तद्वियोगं सोढुं न शक्नोमि । तत् प्रसादं कृत्वा तत्रागच्छ । नो चेत् । स्त्रीहत्या ते भविष्यति । मन्मथश् च कोपं करिष्यति । उक्तं च ।

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसंपादनीम्
एनां ये प्रविहाय यान्ति कुधियः स्वर्गापवर्गेच्छया ।
तद्दोषैर् विनिहत्य ते द्रुततरं नग्नीकृता मुण्डिताः Śardū
केचिद् रक्तपटीकृताश् च जटिलाः कापालिकाश् चापरे ॥३०॥

तथासौ तद्वचनप्रत्ययितो भूयो ऽपि तेन सह प्रस्थितः । साध्व् इदम् उच्यते ।

जानन्न् अपि नरो दैवात् । प्रकरोति विगर्हितम् ।
कस्मैचित् कर्म किं लोके । गर्हितं रोचते कृतम् ॥३१॥

अत्रान्तरे धूर्तवचनशतविप्रतारितो रासभः पुनर् अप्य् उपान्तिकम् आगतः प्राक्सज्जितक्रमेण सिंहेन तत्कालं व्यापादितः । ततश् च तं हत्वा शृगालं रक्षपालं विधाय स्वयं स्नानार्थं नद्यां गते सिंहे शृगालेनातिलौल्यात् खरस्य कर्णहृदयं भक्षितम् । स्नात्वा च कृतयथोचितविधिः सिंहो यावद् आगच्छति । तावत् कर्णहृदयरहितं खरं दृष्ट्वा कोपपरीतात्मा शृगालम् आह । आः पाप । किम् इदम् अनुचितम् अनुष्ठितम् । यत् कर्णहृदयभक्षणेनायम् उच्छिष्टतां नीतः । शृगालः सविनयम् आह । स्वामिन् । मा मैवं वद । कर्णहृदयरहित एवायम् आसीत् । कथम् अन्यथेहागत्य स्वयं त्वाम् अवलोक्य भयाद् गत्वा भूयो ऽप्य् आगतः । अत एवोच्यते ।

आगतश् च गतश् चैव । दृष्ट्वासौ त्वां भयानकम् ।
अकर्णहृदयो मूर्खो । गत्वा यः पुनर् आगतः ॥३२॥

अथ शृगालवचनेन जातप्रत्ययः सिंहस् तेनैव सह संविभज्याशङ्कितमनास् तं भक्षितवान् ॥

अतो ऽहं ब्रवीमि । नाहम् अपि लम्बकर्णो रासभः । इति । तत् । मूर्ख । कपटं कृतं त्वया । परं युधिष्ठिरेणेव सत्यवचनेन विनाशितम् । साध्व् इदम् उच्यते ।

स्वार्थम् उत्सृज्य यो दम्भी । सत्यं ब्रूते स मन्दधीः ।
स स्वार्थाद् भ्रश्यते नूनं । युधिष्ठिर इवापरः ॥ ३३ ॥

मकर आह । कथम् एतत् । वानरः कथयति ।

## ॥ कथा ३ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने को ऽपि कुम्भकारः । स कदाचित् प्रमत्तस् तीक्ष्णाग्रस्य भग्नभाण्डकर्परस्योपरि महता वेगेन धावमानः पपात । ततश् च कर्परकोट्या पाटितललाटतटो रुधिराप्लुतशरीरः कथंचिद् उत्थितः । ततश् चापथ्यसेवनात् कर्परप्रहारः करालतां गतः । अथ कदाचिद् दुर्भिक्षपीडिते देशे क्षुत्क्षामो ऽसौ कैश्चिद् राजसेवकैः सह देशान्तरं गत्वा राजसेवको बभूव । स च राजा तस्य ललाटे ऽतिकरालाकारं कर्परप्रहारं दृष्ट्वा चिन्तयाम् आस । नूनं वीरपुरुषो ऽयं कश्चित् । तेन ललाटे ऽस्य संमुखः प्रहारः । इति विचिन्त्य मानदानादिभिः सर्वेषाम् अधिकं सप्रसादं तं पश्यति । ते ऽपि राजपुत्रास् तस्य प्रसादातिशयं पश्यन्तः परम् ईर्ष्याधर्मं वहन्तो ऽपि राजभयान् न किंचिद् ऊचुः । अथान्यस्मिन्न् अहनि क्रियमाणायां वीरसंभावनायां *प्रकल्प्यमानेषु गजेषु संनह्यमानेषु वाजिषु विलोक्यमानेषु योद्धृषु भूभुजा स कुम्भकारः प्रस्तावे पृष्टः । भो राजपुत्र । किं ते नाम । का च जातिः । कस्मिन् संग्रामे प्रहारो ऽयं ते ललाटे

लग्नः । सो ऽब्रवीत् । देव । युधिष्ठिराभिधः कुलालो ऽहं जात्या । न चायं शस्त्रप्रहारः । किं तु अनेककर्परसंकुले प्राङ्गणप्रदेशे मद्यपानविकलः प्रधावन् कर्परोपरि पतितः । ततः कर्परप्रहारो ऽयं करालतां गतः । ततो राजा व्यचिन्तयत् । अहो । वञ्चितो ऽहम् अनेन राजपुत्रानुकारिणा कुलालेन । तद् दीयताम् अस्यार्धचन्द्रः । तथानुष्ठिते कुम्भकारः प्राह । देव । मैवं कुरु । पश्य मे समरे हस्तलाघवम् । राजा प्राह । भोः । सर्वगुणनिधिर् भवान् । तद् अपि गम्यताम् । उक्तं च । यतः ।

शूरो ऽसि कृतविद्यो ऽसि । दर्शनीयो ऽसि पुत्रक ।
कुले यस्मिंस् त्वम् उत्पन्नो । गजस् तत्र न हन्यते ॥३४॥

कुलाल आह । कथम् एतत् । राजा कथयति ।

॥ कथा ४ ॥

अस्ति कस्मिंश्चिद् वनोद्देशे सिंहमिथुनम् । अथ कदाचित् सिंही पुत्रद्वयं जनयाम् आस । सिंहो ऽपि नित्यं मृगादीन् व्यापाद्य सिंह्या ददाति । अथ कदाचित् तेन वने परिभ्रमता न किंचिद् आसादितम् । भगवान् आदित्यो ऽस्तशिखरम् उपेतः । अथ तेन स्वगृहम् आगच्छता मार्गे शृगालशिशुः प्राप्तः । स च । बालको ऽयम् । इति कृतानुकम्पेन दंष्ट्रामध्ये विधृत्य यत्नेन जीवन्न् आनीय सिंह्याः समर्पितः । ततश् च सिंह्याभिहितम् । भोः कान्त । आनीतं किंचिद् भोजनं त्वया । सिंह आह । प्रिये । अद्यैनं शृगालशिशुं विना न किंचिद् आसादितम् । अयम् अपि च । स्वजातीयो बालकश् च । इति मत्वा मया न हतः । उक्तं च । यतः ।

स्त्रीविप्रलिङ्गिबालेषु ' प्रहर्तव्यं न कर्हिचित् ।
प्राणात्यये ऽपि संजाते ' विश्वस्तेषु विशेषतः ॥३५॥

इदानीं त्वम् एनं भक्षयित्वा पथ्यं कुरु । प्रातर् *अन्यत् किंचिद् आनेष्यामि । साब्रवीत् । कान्त ' त्वयायम् ' बालको ऽयम् ' इति विचिन्त्य न व्यापादितः । तत् कथम् अहम् एनं स्वोदरार्थे विनाशयामि । उक्तं च ।

अकृत्यं नैव कृत्यं स्यात् ' प्राणत्यागे ऽप्य् उपस्थिते ।
न च कृत्यं परित्याज्यम् ' एष धर्मः सनातनः ॥३६॥

तस्मान् ममायं तृतीयः पुत्रो भविष्यति ' इति । एवम् उक्त्वा स्वस्तनक्षीरेण तं परां पुष्टिम् उपानयत् । एवं ते त्रयो ऽपि शिशवः परस्परम् अज्ञातजातिविशेषा एकाचारविहारा बालकालं निर्वाहयां चक्रुः । अथ कदाचित् तत्र वने भ्रमन् अरण्यगजः समायातः । तं दृष्ट्वा तौ सिंहसुतौ प्रकुपितौ हन्तुकामौ तं प्रति प्रचलितौ । ततस् तेन शृगालसुतेनाभिहितम् । अहो ' गजो ऽयं युष्मत्कुलशत्रुः । तत् तत्र न गन्तव्यम् । एवम् उक्त्वा स्वगृहं प्रति प्रधावितः । ताव् अपि ज्येष्ठबान्धवभङ्गान् निरुत्साहतां गतौ । साधु चेदम् उच्यते ।

एकेनापि सुधीरेण ' सोत्साहेन रणं प्रति ।
सोत्साहं जायते सैन्यं ' भग्ने भङ्गम् अवाप्नुयात् ॥३७॥

तथा च ।

अत एव हि वाञ्छन्ति ' भूपा योधान् महाबलान् ।
शूरान् धीरान् कृतोत्साहान् ' वर्जयन्ति च कातरान् ॥३८॥

अथ द्वाव् अपि भ्रातरौ गृहं प्राप्य विहसन्तौ पितृभ्यां ज्येष्ठभ्रातृचेष्टितम् ऊचतुः ' यत् किलायं गजं दृष्ट्वा दूरतो ऽपि प्रनष्टः '

इति। सो ऽपि तद् आकर्ण्य कोपाविष्टमनाः प्रस्फुरिताधरपल्लवस् ताम्रलोचनस् त्रिशिखां भृकुटिं कृत्वा तौ निर्भर्त्सयमानः परुषम् उवाच। अथ सिंह्यैकान्ते नीत्वा प्रबोधितो ऽसौ। वत्स ' कदाचिद् अपि मैवं वादीः। भवदीयभ्रातराव् एतौ। अथासौ सान्त्ववचनेन प्रभूततरकोपाविष्टस् ताम् अप्य् उवाच। किम् अहम् एताभ्यां शौर्येण रूपेण विद्याभ्यासकौशलेन वा हीनः ' येनैतौ माम् उपहसतः। तन् मयावश्यम् एतौ व्यापादनीयौ। तच् छ्रुत्वा तस्य जीवितम् इच्छन्ती सिंह्य् अन्तर् विहस्य प्राह।

शूरो ऽसि कृतविद्यो ऽसि ' दर्शनीयो ऽसि पुत्रक।
कुले यस्मिंस् त्वम् उत्पन्नो ' गजस् तत्र न हन्यते ॥३९॥

तत् सम्यक् शृणु ' वत्स। त्वं शृगालीसुतो मया' कृपापरया स्वस्तनक्षीरेण पुष्टिं नीतः। तद् यावद् एतौ मत्पुत्रौ शिशुत्वात् त्वां शृगालं न जानीतः ' तावद् द्रुततरं गत्वा स्वजातीयानां मध्ये भव। नो चेत् ' एताभ्यां निहतो मृत्युपथम् एष्यसि। सो ऽपि तच् छ्रुत्वा भीतभीतमनाः शनैः शनैर् अपसृत्य स्वजातीयानां मिलितः॥

तस्मात् त्वम् अपि यावद् एते सुभटास् त्वां कुलालं न जानन्ति ' तावद् द्रुततरम् अपसर। नो चेत् ' विडम्बनां प्राप्य मरिष्यसि ' इति। कुलालो ऽपि तद् आकर्ण्य सत्वरं प्रनष्टः॥

अतो ऽहं ब्रवीमि। स्वार्थम् उत्सृज्य यो दम्भी। इत्यादि। धिग् मूर्ख। यत् त्वया स्त्रियो ऽर्थ एतत् कार्यम् अनुष्ठातुम् आरब्धम्। न हि स्त्रीणां कथंचिद् विश्वासम् उपगच्छेत्। सुष्ठु खल्व् इदम् आख्यानकम् आख्यायते।

यदर्थे स्वकुलं त्यक्तं। जीवितार्धं च हारितम्।
सा मां त्यजति निःस्नेहा। कः स्त्रीणां विश्वसेन् नरः॥४०॥

मकर आह। कथम् एतत्। वानरः कथयति।

## ॥ कथा ५ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने को ऽपि ब्राह्मणः । तस्य च प्रियातिप्राणप्रिया । सापि कुटुम्बेन सह प्रतिदिनं कलहं कुर्वाणा न विश्राम्यति । सो ऽपि ब्राह्मणः कलहम् असहमानो भार्यावाल्लभ्यात् *स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह विप्रकृष्टं देशान्तरं गतः । अथ महाटवीमध्ये ब्राह्मण्याभिहितम् । आर्यपुत्र ' तृष्णा मां बाधते । तद् उदकं क्वाप्य् अन्वेषय । अथासौ तद्वचनानन्तरं यावद् उदकं गृहीत्वा समागच्छति ' तावत् तां मृताम् अपश्यत् । अतिवल्लभतया विषादं कुर्वन् यावद् विलपति ' तावद् आकाशे वाचं शृणोति ' तथा हि । यदि ' ब्राह्मण ' त्वं स्वकीयजीवितस्यार्धं ददासि ' ततस् ते जीवति ब्राह्मणी । तच् छ्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर् वाचाभिः स्वजीवितार्धं दत्तम् । *वाक्समम् एव च जीविता सा ब्राह्मणी । अथ तौ जलं पीत्वा वनफलानि च भक्षयित्वा गन्तुम् आरब्धौ । ततः क्रमेण कस्यचिन् नगरस्य प्रवेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्याम् अभिहितवान् । भद्रे ' यावद् अहं भोजनं गृहीत्वा समागच्छामि ' तावत् त्वयात्र स्थातव्यम् । इत्य् अभिधाय प्रायासीत् । अथ तस्यां पुष्पवाटिकायां पङ्गुर् अरघट्टं खेटयमानो दिव्यगिरा गीतम् उद्गिरति । तच् च श्रुत्वा कुसुमेषुणाभिहतया तत्सकाशं गत्वाभिहितम् । भद्र ' यदि मां न कामयसे ' तन् मम सक्ता ब्रह्महत्या तव । पङ्गुर् अब्रवीत् । किं व्याधिग्रस्तेन मया करिष्यसि । साब्रवीत् । किम् अनेनोक्तेन । अवश्यं त्वया सह संगमः कार्यः । तच् छ्रुत्वा तथा कृतवान् । सुरतानन्तरं साब्रवीत् । इतः प्रभृति यावज्जीवं मयात्मा

भवतो दत्तः । इति ज्ञात्वा भवान् अप्य् अस्माभिः सहागच्छतु । सो ऽब्रवीत् । एवम् अस्तु ।

अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुम् आरब्धः । साब्रवीत् । एष पङ्गुर् बुभुक्षितः । तद् एतस्यापि कियन्तम् अपि ग्रासं देहि, इति । तथैवानुष्ठिते ब्राह्मण्याभिहितम् । ब्राह्मण, सहायहीनस् त्वं यदा ग्रामान्तरं गच्छसि, तदा मम वचनसहायो ऽपि नास्ति । तत एनं पङ्गुं गृहीत्वा गच्छावः । सो ऽब्रवीत् । न शक्नोम्य् आत्मानम् अप्य् आत्मना वोढुम्, किं पुनर् इमं पङ्गुम् । साब्रवीत् । पेटाभ्यन्तरस्थम् अहं नेष्यामि । अथ तत्कृतकवचनव्यामोहितचित्तेन तेन प्रतिपन्नम् । तथानुष्ठिते चान्यस्मिन् दिने कूपोपकण्ठविश्रान्तो ब्राह्मणस् तया पङ्गुपुरुषासक्तया संप्रेर्य कूपान्तः पातितः । सापि पङ्गुं गृहीत्वा कस्मिंश्चिन् नगरे प्रविष्टा । तत्र च [1]शुल्कचौर्यरक्षानिमित्तं राजपुरुषैर् इतस् ततो भ्रमद्भिस् तन्मस्तकस्था पेटा दृष्टा । बलाद् आच्छिद्य राजाग्रे नीता । राजा च यावत् ताम् उद्घाटयति, तावत् पङ्गुं ददर्श । ततः सा ब्राह्मणी विलापं कुर्वती राजपुरुषानुपदम् एव तत्रागता राज्ञा पृष्टा । को वृत्तान्तः, इति । साब्रवीत् । ममैष भर्ता व्याधिबाधितो दायादसमूहैर् उद्वेजितो मया स्नेहव्याकुलितमानसया शिरसि कृत्वा त्वत्सकाशम् आनीतः । तच् छ्रुत्वा राजाब्रवीत् । मम त्वं भगिनी । ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान् भुञ्जाना सुखेन तिष्ठ ।

अथ स ब्राह्मणो दैववशात् केनापि साधुना कूपाद् उत्तारितः परिभ्रमंस् तद् एव नगरम् आयातः, तया दुष्टभार्यया दृष्टः, राज्ञे निवेदितश् च । राजन्, अयं मम भर्तुर् वैरी समा-

यातः । राज्ञापि वधादिष्टः सो ऽब्रवीत् । देव ! अनया मम सक्तं किंचिद् गृहीतम् अस्ति । यदि त्वं धर्मवत्सलः ' तदा दापय । राजाब्रवीत् । भद्रे ' यत् त्वयास्य सक्तं किंचिद् गृहीतम् अस्ति ' तत् समर्पय । सा प्राह । देव ' मया न किंचिद् गृहीतम् । ब्राह्मण आह । यन् मया चिवाचिकं स्वजीवितार्धं तव दत्तम् ' तद् देहि । अथ सा राजभयात् तथैव चिवाचिकम् एव ' जीवितं मया दत्तम् ' इति जल्पन्ती प्राणैर् विमुक्ता । ततः सविस्मयं राजाब्रवीत् । किम् एतत् ' इति । ब्राह्मणेनापि पूर्ववृत्तान्तः सकलो ऽपि तस्मै निवेदितः ॥

अतो ऽहं ब्रवीमि । यदर्थे स्वकुलं त्यक्तम् । इत्यादि । वानरः पुनर् अप्य् आह । साधु चेदम् उपाख्यानकं श्रूयते ।

न किं दद्यान् न किं कुर्यात् । स्त्रीभिर् अभ्यर्थितो नरः ।
अनश्वा यत्र हेषन्ते । शिरो ऽपर्वणि मुण्डितम् ॥ ४१ ॥

मकरः प्राह । कथम् एतत् । वानरः कथयति ।

॥ कथा ६ ॥

अस्ति प्रख्यातबलपौरुषो ऽनेकनरेन्द्रवृन्दमुकुटमरीचिजालजटिलीकृतपादपीठः शरच्छशाङ्ककिरणनिर्मलयशाः समुद्रपर्यन्तायाः पृथिव्या भर्ता नन्दो नाम राजा । तस्य सर्वशास्त्राधिगतसमस्ततत्त्वः सचिवो वररुचिर् नाम । तस्य च प्रणयकलहेन जाया कुपिता । सा चातीववल्लभानेकप्रकारं परितोष्यमाणापि न प्रसीदति । ब्रवीति च भर्ता । भद्रे ' येन प्रकारेण तुष्यसि ' तं वद । निश्चितं करोमि । ततः कथंचित् तयोक्तम् । यदि शिरो मुण्डयित्वा मम पादयोर् निपतसि ' तदा प्रसादाभिमुखी भवामि । तथा चानुष्ठिते प्रसन्नासौ ।

अथ नन्दस्य भार्या तथैव रुष्टा प्रसाद्यमानापि न तुष्यति । तेनोक्तम् । भद्रे ' त्वया विना मुहूर्तम् अपि न जीवामि । पादयोः पतित्वा त्वां प्रसादयामि । साब्रवीत् । यदि खलीनं मुखे प्रक्षिप्याहं तव पृष्ठे समारुह्य त्वां धावयामि ' धावितस् तु यद्य् अश्ववद् ध्रेषसे ' तदा प्रसन्ना भवामि । तथैवानुष्ठितम् ।

अथ प्रभातसमये सभोपविष्टस्य राज्ञो वररुचिर् आयातः । तं च दृष्ट्वा *राजा पप्रच्छ । भो वररुचे ' किम् अपर्वणि मुण्डितं शिरस् ते । सो ऽब्रवीत् । न किं दद्यान् न किं कुर्यात् ' इति ॥

तत् । मूढ । त्वम् अपि नन्दवररुचिवत् स्त्रीवश्यः । ततस् तन्नियोगेन त्वया मां प्रति वधोपायप्रयासः प्रारब्धः । परं स्ववाग्दोषेणैव प्रकटितः । अथवा साध्व् इदम् उच्यते ।

आत्मनो मुखदोषेण । बध्यन्ते शुकसारिकाः ।
बकास् तत्र न बध्यन्ते । मौनं सर्वार्थसाधनम् ॥ ४२ ॥

तथा च । सुगुप्तं रक्ष्यमाणो ऽपि । दर्शयन् दारुणं वपुः ।
व्याघ्रचर्मप्रतिच्छन्नो । वाक्कृते रासभो हतः ॥ ४३ ॥

मकर आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा ७ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने शुद्धपटो नाम रजकः । तस्य च *गर्दभ एको ऽस्ति । सो ऽपि घासाभावाद् अतिदुर्बलतां गतः । तेन च रजकेनाटव्यां भ्रमता मृतव्याघ्रो दृष्टः ' चिन्तितं च । अहो ' शोभनम् आपतितम् । अनेन व्याघ्रचर्मणा प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषूत्सृजामि । ते च क्षेत्रपाला व्याघ्रं मत्वा न निष्कासयिष्यन्ति । तथानुष्ठिते रासभो यथेच्छं यवभक्षणं करोति । प्रत्यूषे रजको भूयो ऽपि स्वाश्रयं नयति । एवं च

गच्छति काले स पीनतनुः संजातः । कृच्छ्राद् बन्धनस्थानम् अपि नीयते ।

अथान्यस्मिन् अहनि रासभो दूरस्थरासभीशब्दम् अशृणोत् । तच्छ्रवणमात्रेणैव स्वयं शब्दायितुम् आरब्धः । अथ तैः क्षेत्रपैः ' रासभो ऽयं प्रतिच्छन्नः ' इति ज्ञात्वा लगुडपाषाणशरप्रहारैर् व्यापादितः ॥

अतो ऽहं ब्रवीमि । सुगुप्तं रक्ष्यमाणो ऽपि । इति । अथैतत् तेन सह वदतो जलचरेणैकेनागत्याभिहितम् । भो मकर । त्वदीया भार्यानशन उपविष्टा मृता । सो ऽपि तच् छ्रुत्वा व्याकुलितमनाः प्रालपत् । भोः । किम् इदं संजातं मे मन्दभाग्यस्य । उक्तं च ।

माता यस्य गृहे नास्ति । भार्या च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं । यथारण्यं तथा गृहम् ॥४४॥

तत् । मित्र । गम्यताम् । यत् किंचिन् मयापराद्धम् । अहं तद्वियोगाद् वैश्वानरप्रवेशं करिष्यामि । तच् छ्रुत्वा वानरः प्रहसन् प्रोवाच । भोः । ज्ञातस् त्वं मया प्रथमम् एव । *आसीर् यत् स्त्रीवश्यः स्त्रीजितश् च । सांप्रतं च प्रत्ययः संजातः । तत् । मूढ । आनन्दे ऽपि जाते त्वं विषादं गतः । तादृग्भार्यायां मृतायाम् उत्सवः कर्तुं युज्यते । उक्तं च । यतः ।

या भार्या दुष्टचरिता । सततं कलहप्रिया ।
भार्यारूपेण सा ज्ञेया । विदग्धैर् दारुणा जरा ॥४५॥
तस्मात् सर्वप्रयत्नेन । नामापि परिवर्जयेत् ।
स्त्रीणाम् इह हि सर्वासां । य इच्छेत् सुखम् आत्मनः ॥४६॥
यद् अन्तस् तन् न जिह्वायां । यज् जिह्वायां न तद् बहिः ।
यद् बहिस् तन् न कुर्वन्ति । विचित्रचरिताः स्त्रियः ॥४७॥
आस्तां तावत् किम् अन्येन । *दौरात्म्येनेह योषिताम् ।
विधृतं स्वोदरेणापि । घ्नन्ति पुत्रम् अपि स्वकम् ॥४८॥
रूक्षायां स्नेहसद्भावं । कठोरायां च मार्दवम् ।
नीरसायां रसं बालो । बालिकायां विकल्पते ॥४९॥

मकर आह । भोः । अस्त्य् एतत् । परं किं करोमि । ममानर्थद्वयम् एव संजातम् । एकं तावद् गृहभङ्गः । अपरं मित्रेण सहासंतोषश् च । अथवा भवत्य् एवं दैवोपहतानाम् । उक्तं च । यतः ।

यादृशं मम पाण्डित्यं । तादृशं द्विगुणं तव ।
नाभूज् जारो न भर्ता च । किं *नु पश्यसि नग्निके ॥५०॥

वानर आह । कथम् एतत् । सो ऽब्रवीत् ।

॥ कथा ८ ॥

कस्मिंश्चिद् अधिष्ठाने हालिकदम्पती प्रतिवसतः स्म । सा च हालिकभार्या पत्युर् वृद्धभावात् सदैवान्यचित्ता न कथंचिद् गृहे स्थैर्यम् आलम्बते । केवलं परपुरुषरता सा । अथ केनचित् परवित्तापहारकेण धूर्तेनोपलक्ष्य प्रोक्ता सा । सुभगे । मृतभार्यो ऽहं त्वद्दर्शनेन स्मरपीडितश् च । तद् दीयतां मे रतिसर्वस्वदक्षिणा । ततस् तयाभिहितम् । भोः सुभग । यद्य् एवम् । तद् अस्ति मे पत्युः प्रभूतधनम् । स च वृद्धत्वात् प्रचलितुम् अप्य् असमर्थः । तत् तद् आदायागच्छामि । यथा त्वया सहान्यत्र गत्वा रतिसुखम् अनुभवामि । सो ऽब्रवीत् । रोचते मह्यम् अप्य् एतत् । प्रत्यूषे ऽत्र स्थाने शीघ्रं समागन्तव्यम् । येन सुन्दरं किंचिन् नगरं गत्वा त्वया सह जीवलोकः सफलीक्रियते । सापि । तथा । इति प्रतिज्ञाय प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्तरि सर्वं वित्तम् आदाय प्रत्यूषसमये कथितस्थानम् उपागमत् । धूर्तो ऽपि ताम् अग्रे विधाय दक्षिणां दिशम् आश्रित्य प्रस्थितः । एवं च सप्रमोदं तया सह वार्त्तासुखम् अनुभवन् योजनद्वये व्यतीते ऽग्रे नदीं दृष्ट्वा धूर्तश् चिन्तयाम् आस । किम् अहम् अनयार्धजरत्या करिष्यामि । किं च । कदाचिद् अस्याः पृष्ठतः को ऽपि समेष्यति । तन् मे महानर्थः स्यात् । केवलम् अस्या वित्तम् आदाय गच्छामि ।

इति संचिन्त्य ताम् उवाच । प्रिये । दुस्तरेयं महानदी । तद् अहं द्रव्यमात्रां पारे धृत्वा समागच्छामि । यथा त्वाम् एकाकिनीं स्वपृष्ठम् आरोप्य सुखेनोत्तारयामि । सा प्राह । सुभग । एवं

क्रियताम् । इत्य् उक्त्वाशेषं वित्तम् आदाय पुनर् अप्य् आह । भद्रे ' परिधानाच्छादनवस्त्रम् अपि समर्पय ' येन जलमध्ये निःशङ्का व्रजसि । तथानुष्ठिते धूर्तो वित्तं वस्त्रयुगलं चादाय यथाचिन्तितविषयं गतः ।

सापि कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीतीरे यावद् उपविष्टा तिष्ठति ' तावत् काचिच् छृगालिका गृहीतमांसपिण्डिका तत्राजगाम । आगत्य च यावत् पश्यति ' तावन् नदीतीरे महान् मत्स्यः सलिलान् निष्क्रम्य बहिः स्थित आस्ते । तं च दृष्ट्वा सा मांसपिण्डम् उत्सृज्य तं मत्स्यम् अभिययौ । अत्रान्तर आकाशात् को ऽपि गृध्रस् तं मांसपिण्डम् आदायोत्पपात । मत्स्यो ऽपि शृगालिकां दृष्ट्वा नद्यां प्रविवेश । अथ सा शृगालिका व्यर्थश्रमा गृध्रम् अवलोकयन्ती नग्निकया सस्मितम् अभिहिता ।

गृध्रेणापहृतं मांसं ' मत्स्यो ऽपि सलिलं गतः ।
मत्स्यमांसपरिभ्रष्टे ' किं *नु पश्यसि जम्बुकि ॥५१॥

तच् छ्रुत्वा शृगालिका ताम् अपि पतिधनजारपरिभ्रष्टां दृष्ट्वा सोपहासम् आह ।

यादृशं मम पाण्डित्यं ' तादृशं द्विगुणं तव ।
नाभूज् जारो न भर्ता च ' जले तिष्ठसि नग्निके ॥५२॥

एवं तस्य कथयतः पुनर् अन्येन जलचरेणागत्य निवेदितम् । यद् अहो । त्वदीयगृहम् अप्य् अपरेण महामकरेण संगृहीतम् । तच् छ्रुत्वासाव् अतिदुःखितमनास् तं गृहान् निःसारयितुम् उपायं चिन्तयति स्म । अहो । पश्यत मे *दैवहतकत्वम् । यत् किल

मित्रं चामित्रतां यातम् । अपरं मे प्रिया मृता ।
गृहम् अन्येन च व्याप्तं । किम् अद्यापि भविष्यति ॥५३॥

अथवा युक्तम् इदम् उच्यते ।

छिद्रेष्व् अनर्था बहुलीभवन्ति ॥

इति । तत् किं करोम्य् अनेन सह युद्धम् । किं वा साम्नैव संबोध्य गृहान् निःसारयामि । किं वा भेदं दानं वा करोमि । अथवामुम् एव वानरमित्रं पृच्छामि । उक्तं च ।

यः पृष्ट्वा कुरुते कार्यं । प्रष्टव्यान् स्वहितान् गुरून् ।
न तस्य जायते विघ्नः । कस्मिंश्चिद् अपि कर्मणि ॥ ५४ ॥

इति विचिन्त्य भूयो ऽपि तं जम्बूवृक्षम् आरूढं कपिम् अपृच्छत् । भो मित्र । पश्य मे मन्दभाग्यताम् । यत् संप्रति गृहम् अपि मे बलवन्मकरेण रुद्धम् । तद् अहं त्वां पृच्छामि । कथय । किं करोमि । सामादीनाम् उपायानां मध्ये कस्यात्र विषयः । स आह । भोः कृतघ्न । मया निषिद्धो ऽपि किं भूयो माम् अनुसरसि । नाहं तव मूर्खस्योपदेशम् अपि ददामि । उक्तं च । यतः ।

उपदेशो न दातव्यो । यादृशे तादृशे नरे ।
पश्य वानरमूर्खेण । सुगृहा निर्गृहीकृता ॥ ५५ ॥

मकर आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा ९ ॥

कस्मिंश्चिद् अरण्ये वृक्षशाखाकृतकुलायौ पक्षिदम्पती प्रतिवसतः स्म । अथ कदाचिन् माघे मास्य् अकालकरकावृष्टिसमाहतः सौम्यवातकम्पिततनुः कश्चिद् वानरस् तद् एव वृक्षमूलम् उपागतः । सो ऽपि दन्तवीणां वादयन्न् अतिदीनः संकुचितकरचरणश् *चटिकया सानुकम्पम् अभिहितः । यथा ।

हस्तपादसमायुक्तो । दृश्यसे पुरुषाकृतिः ।
शीतवाताहतो मूढ । कथं न कुरुषे गृहम् ॥ ५६ ॥

सो ऽपि तद् आकर्ण्य व्यचिन्तयत् । अहो । आत्मसंतुष्टो जीवलोकः । यद् एषापि *क्षुद्रचटिकात्मानं बहुमन्यते । युक्तं चैतत् ।

स्वचित्तकल्पितो गर्वः । कस्य नाम न विद्यते ।
उत्क्षिप्य टिट्टिभः पादौ । शेते भङ्गभयाद् दिवः ॥ ५७ ॥

एवं विचिन्त्य ताम् आह ।

सूचीमुखि दुराचारे । रण्डे पण्डितमानिनि ।
तूष्णीं भव करिष्यामि । नो चेत् त्वां निर्गृहाम् अहम् ॥५८॥

एवं तेन सा निषिद्धापि यदा पुनः पुनर् आश्रयकरणोपदेशेन तम् उद्वेजयति । तदासौ तं वृक्षम् आरुह्य तस्याः कुलायं खण्डशः कृत्वा बभञ्ज ॥

अतो ऽहं ब्रवीमि । उपदेशो न दातव्यः । इति । तच् छ्रुत्वा मकरः प्राह । भो मित्र । सापराधस्यापि मे पूर्वस्नेहम् अनुस्मृत्य हितोपदेशं देहि । वानर आह । नाहं ते कथयिष्यामि । यद् भार्यावाक्येन भवताहं समुद्रे प्रक्षेपितुं नीतः । यद्य् अप्य् अतीव-वल्लभा भार्या । तद् अपि तद्वाक्येन मित्रबान्धवादयः समुद्रे किं प्रक्षिप्यन्ते । तच् छ्रुत्वा मकरः प्राह । भद्र । यद्य् एवम् । तथापि । सख्यं साप्तपदीनम् । इति विचिन्त्य किंचिन् मे हितं समुपदिश । उक्तं च । यतः ।

उपदेशप्रदातॄणां । नराणां हितम् इच्छताम् ।
परस्मिन्न् इहलोके च । व्यसनं नोपपद्यते ॥५९॥

तत् सर्वथा कृतागसो ऽपि मे कुरु प्रसादम् उपदेशदानेन । उक्तं च ।

उपकारिषु यः साधुः । साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः । स साधुः सद्भिर् इष्यते ॥६०॥

तद् आकर्ण्य वानरः प्राह । भद्र । यद्य् एवम् । तर्हि तत्र गत्वा तेन सह युद्धं कुरु । उक्तं च । यतः ।

उत्तमं प्रणिपातेन । शूरं भेदेन योजयेत् ।
नीचम् अल्पप्रदानेन । समशक्तिं पराक्रमैः ॥६१॥

मकर आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा १० ॥

अस्ति कस्मिंश्चिद् वनोद्देशे महाचतुरको नाम शृगालः । तेन कदाचिद् अरण्ये स्वयं मृतो गजः समासादितः । परं तस्य समन्तात् परिभ्रमति । कठिनां त्वचं भेत्तुं न शक्नोति ।

अथात्रावसर इतश् चेतश् च परिभ्रमन् कश्चित् सिंहस् तत्रैव

प्रदेशे समाययौ । अथ तम् आगतं दृष्ट्वा स क्षितितलमिलन्मौलिमण्डलः संयोजितकरकमलः सविनयम् उवाच । स्वामिन्, त्वदीयो ऽहं लागुडिकः । त्वदर्थं गजम् इमं रक्षामि । तद् एनं भक्षयतु स्वामी । अथ सिंहः प्राह । भोः, नाहम् अन्यहतं कदाचिद् अपि भक्षयामि । तत् तवैव गजो ऽयं मया प्रसादीकृतः । तच् छ्रुत्वा शृगालः सानन्दम् आह । युक्तम् इदं स्वामिनो निजभृत्येषु ।

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ । तम् अपि दृष्ट्वा सो ऽचिन्तयत् । एकस् तावद् दुरात्मा प्रणिपातेनापवाहितः । तत् कथम् इदानीम् एनम् अपवाहयिष्यामि । नूनं शूरो ऽयम्, न खलु भेदं विना साध्यो भवति । उक्तं च ।

न यत्र शक्यते कर्तुं, साम दानम् अथापि वा ।
भेदस् तत्र प्रकर्तव्यो, यतो ऽसौ वशकारकः ॥६२॥

किं च । सर्वो ऽपि भेदेन बध्यते । उक्तं च ।

*अन्तःस्थेनाविरुद्धेन, सुवृत्तेनातिचारुणा ।
अन्तर्भेदेन संप्राप्तं, मौक्तिकेनापि बन्धनम् ॥६३॥

एवं संप्रधार्य तदभिमुखो गत्वैषदुन्नतकन्धरः ससंभ्रमम् उवाच । माम, कथम् अत्र भवान् मृत्युमुखे प्रविष्टः । येनैष सिंहेन गजो व्यापादितः । स च माम् एतद्रक्षणे नियुज्य स्वयं स्नानार्थं गतः । तेन गच्छता समादिष्टम् । यदि कश्चिद् इह व्याघ्रः समेति, तत् त्वया सुगुप्तं ममावेदनीयम्, येन वनम् इदं मया निर्व्याघ्रं कर्तव्यम् । यतः पूर्वं व्याघ्रेणैकेन मद्व्यापादितो गजः *शून्य उच्छिष्टतां नीतः । तद्दिनाद् आरभ्य व्याघ्रान् प्रति प्रकुपितो ऽस्मि । अथ तच् छ्रुत्वा व्याघ्रः संत्रस्तस् तम् आह । भो भागिनेय, देहि

मे प्राणदक्षिणाम् । यतस् त्वया तस्यात्र चिरायातस्यापि मदीया क्वापि वार्त्ता नाख्येया ' इति । एवम् अभिधाय सत्वरं पलायां चक्रे ।

अथ गते व्याघ्रे तत्र कश्चिद् द्वीपी प्राप । तम् अपि दृष्ट्वासौ व्यचिन्तयत् । दृढदंष्ट्रो ऽयं चित्रकः । तद् अस्माद् एवास्य गजचर्मभेदं कारयामि । इति निश्चित्य तम् उवाच । भो भगिनीसुत ' किम् इति चिराद् दृष्टो ऽसि ' कथं च बुभुक्षित इव लक्ष्यसे । तद् अतिथिर् असि मे । उक्तं च ।

समयाभ्यागतो ऽतिथिः ॥

तद् एष गजः सिंहेन हतस् तिष्ठति । अहं चास्य तदादिष्टो रक्षपालः । परं तथापि यावद् असौ न समायाति ' तावद् अस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुतं व्रज । स आह । माम ' यद्य् एवम् ' तन् न कार्यं मे ऽस्य मांसेन ' यतः ।

जीवन् नरो भद्रशतानि पश्यति ॥

तत् सर्वथा तद् एव भुज्यते ' यद् एव परिणमति । तद् अहम् इतो ऽपयास्यामि । मृगाल आह । भो *अधीर ' विश्रब्धो भूत्वा भक्षय । तस्यागमनं दूरतो ऽपि तवाहम् आवेदयिष्यामि । अथ द्वीपिना तथानुष्ठिते भिन्नां त्वचं विज्ञायाभिहितं जम्बुकेन । भो भगिनीसुत ' गम्यतां गम्यताम् ' एष सिंहः समायाति । तच् छ्रुत्वा चित्रको ऽपि दूरं प्रनष्टः ।

अथ यावद् असौ तद्भेदकृतद्वारेण मांसं भक्षयति ' तावद् अतिसंक्रुद्धो ऽपरः मृगालः समाययौ । अथ तम् आत्मतुल्यं ज्ञातपराक्रमं दृष्ट्वा ' उत्तमं प्रणिपातेन ' इत्यादिश्लोकं पठंस्

तद्भिमुखकृतप्रयाणः स्वदंष्ट्राभिस् तं विदार्य दिगन्तभाजं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे ॥

एवं त्वम् अपि तं निजरिपुं सजातीयं युद्धेन परिभूय दिगन्तगतं कुरु । नो चेत् । पश्चाद् बद्धमूलाद् अस्मात् त्वम् अपि विनाशम् अवाप्स्यसि । उक्तं च । यतः ।

संभाव्यं गोषु संपन्नं । संभाव्यं ब्राह्मणे तपः ।
संभाव्यं स्त्रीषु चापल्यं । संभाव्यं ज्ञातितो भयम् ॥ ६४ ॥

श्रूयते च । यतः ।

सुभिक्षाणि विचित्राणि । शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य । स्वजातिर् यद् विरुध्यति ॥ ६५ ॥

मकर आह । कथम् एतत् । वानरो ऽब्रवीत् ।

## ॥ कथा ११ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने चित्राङ्गो नाम सारमेयः । तत्र च चिरकालदुर्भिक्षं पतितम् । अन्नाभावाच् च सारमेयादयो निष्कुलतां गन्तुम् आरब्धाः । अथ चित्राङ्गः क्षुत्क्षामकण्ठस् तद्भयाद् अन्यदेशान्तरं गतः । तत्र च कस्मिंश्चित् पुरे कस्यचद् गृहमेधिनो गृहिण्याः प्रमादेन प्रतिदिनं गृहे प्रविश्य विविधान्नादि भक्षयन् परां तृप्तिं गच्छति । परं तद्गृहाद् बहिर् निष्क्रामन्न् अन्यैर् मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर् विदार्यते । ततस् तेन विचिन्तितम् । वरं स्वदेशः । यत्र दुर्भिक्षेणापि सुखेन स्थीयते । न च को ऽपि युद्धं करोति । तद् वरं तद् एव स्वनगरं व्रजामि । इत्य् अवधार्य स्वस्थानं प्रति जगाम ।

अथासौ देशान्तरायातः स्वजनैः पृष्टः । भोः । कथय । कीदृग् देशः । किंचेष्टो लोकः । क आहारः । कश् च व्यवहारस् तत्र । इति । स आह । किं कथ्यते देशस्य तु । सुभिक्षाणि विचित्राणि । इत्यादि ॥

सो ऽपि तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरम् अनुज्ञाप्य प्राप्य च निजाश्रयं तेन स्वगृहप्रविष्टेनाततायिना सह विग्रहं कृत्वा दृढसत्त्वावष्टम्भाच् च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालम् अतिष्ठत् ॥

साध्व् इदम् उच्यते ।

अकृत्वा पौरुषं या श्रीः । किं तयालसभाग्यया ।
कुरङ्गो ऽपि समश्नाति । दैवाद् उपगतं तृणम् ॥ ६६ ॥

समाप्तं चेदं लब्धप्रणाशं नाम चतुर्थं तन्त्रम् । यस्यायम् आद्यश्लोकः ।

प्राप्तम् अर्थं तु यो मोहात् । सान्त्वनैः प्रतिमुञ्चति ।
स एव वञ्च्यते मूढो । मकरः कपिना यथा ॥ ४ ॥



## ॥ अर्हम् ॥

अथेदम् आरभ्यते ऽपरीक्षितकारित्वं नाम पञ्चमं तन्त्रम् । यस्यायम् आद्यश्लोकः ।

कुदृष्टं कुपरिज्ञातं । कुकृतं कुनिरीक्षितम् ।
तन् नरेण न कर्तव्यं । नापितेनेह यत् कृतम् ॥ १ ॥

राजपुत्राः पृच्छन्ति । कथम् एतत् । विष्णुशर्मा कथयति ।

अस्ति दाक्षिणात्ये जनपदे पाटलीपुत्रं नाम नगरम् । तत्र च माणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य धर्मार्थकाममोक्षाणि कुर्वतो विधिवशाद् धनक्षयः संजातः । ततश् च विभवक्षयाद् अपमानपरंपरया परं विषादम् उपगतो रात्रौ चिन्तितवान् । अहो धिग् इयं दरिद्रता । उक्तं च । यतः ।

शीलं शौचं क्षान्तिर् । दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे । वित्तविहीनस्य पुरुषस्य ॥ २ ॥

मानो वा दर्पो वा । विज्ञानं विभ्रमः सुबुद्धिर् वा ।
सर्वं नश्यति सहसा । विभवविहीनो यदा पुरुषः ॥ ३ ॥

प्रतिदिनम् उपैति विलयं । वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर् बुद्धिमताम् अपि । कुटम्बभरचिन्तया सततम् ॥ ४ ॥

विपुलमतेर् अपि नश्यति । बुद्धिः पुरुषस्य विभवहीनस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥

न विभाव्यन्ते लघवो । वित्तविहीनाः पुरो ऽपि निवसन्तः ।
सततं जातविनष्टाः । पयसाम् इव बुद्बुदाः पयसि ॥ ६ ॥

विरस इति हसति न जनः । कामं गर्जन्तम् अपि पतिं पयसाम् ।
सर्वम् अलज्जाकरम् इह । यद् यत् कुर्वन्ति परिपूर्णाः ॥ ७ ॥

इति । एवं संप्रधार्य भूयो ऽपि व्यचिन्तयत् । तद् अहम् अनशनं कृत्वा प्राणान् उज्झामि । किम् अनेन व्यर्थजीवितव्यसनेन । एवं निश्चयं कृत्वा प्रसुप्तः ।

अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपी संदर्शनं गत्वा प्रोवाच । भोः श्रेष्ठिन् । मा त्वं वैराग्यं गच्छ । अहं पद्मनिधिस् तव पूर्वपुरुषोपार्जितः । तद् अनेनैव रूपेण

प्रातस् तव गृहं समागमिष्यामि । तत् त्वयाहं शिरसि लगुडप्रहारेण हन्तव्यः । येन कनकमयो ऽक्षयो भवामि । इति ।

अथ प्रातः संप्रबुद्धः स तं स्वप्नं चिन्तयंस् तिष्ठति । अहो । स्वप्नो ऽयं सत्यो ऽसत्यो वा भविष्यति । इति न ज्ञायते । नूनं मिथ्यानेन भाव्यम् । यत्कारणात् । अहम् अहर्निशम् एव वित्तम् एव केवलं चिन्तयामि । उक्तं च । यतः ।

व्याधितेन सशोकेन । चिन्ताग्रस्तेन जन्तुना ।
कामार्तेनाथ मत्तेन । दृष्टः स्वप्नः फलोज्झितः ॥ ८ ॥

एतस्मिन्न् अन्तरे तद्भार्यायाः कश्चिन् नापितो नखप्रक्षालनार्थं समायातः । ततश् चासौ यावन् नखप्रक्षालनकर्म समाचरति । तावत् क्षपणकः सहसा प्रादुर्भूतः । अथ माणिभद्रस् तं समालोक्य प्रहृष्टमना आसन्नकाष्ठदण्डेन शिरस्य् अताडयत् । सो ऽपि सुवर्णमयो भूत्वा तत्क्षणाद् एव भूमौ निपपात ।

अथ स वणिक् तं गृहमध्ये संस्थाप्य नापितं संतोष्य प्रोवाच । भद्र । न कस्यचिद् आख्येयो ऽयम् अस्मद्गृहवृत्तान्तः । नापितो ऽपि तद्वचनम् अङ्गीकृत्य गृहं गत्वा व्यचिन्तयत् । नूनं सर्वे ऽप्य् एते नग्नकाः शिरसि काष्ठदण्डहताः काञ्चनमया भवन्ति । तद् अहम् अपि प्रातस् तान् प्रभूतान् आमन्त्र्य लगुडैर् हन्मि । येन प्रभूतं हाटकं भवति । इति । एवं तस्य चिन्तयतस् तद् दिनं निशा च कथम् अपि व्यतिचक्राम ।

अथ प्रभाते समुत्थाय क्षपणकविहारं गत्वोत्तरासङ्गं विधाय जिनस्य प्रदक्षिणात्रयं दत्त्वा जानुभ्याम् अवनीं गत्वा वक्त्रद्वारविन्यस्तोत्तरीयपल्लवः कृताञ्जलिस् तारस्वरेणेमं श्लोकम् अपठत् ।

ते जयन्ति जिना येषां । केवलज्ञानशालिनाम् ।
मनो भवाभिधे बीजे । मानसेनोषरायितम् ॥ ९ ॥

अन्यच् च । सा जिह्वा या जिनं स्तौति । तच् चित्तं यत् तदर्पितम् ।
ताव् एव केवली श्लाघ्यौ । यौ तत्पूजाकरौ करौ ॥ १० ॥

इति । एवम् अन्यद् अपि बहुधा संस्तुत्य ततः प्रधानक्षपणकम् आसाद्य क्षितितलनिहितजानुचरणः । नमो ऽस्तु । वन्दे । इत्य् उक्त्वा लब्धधर्मवृद्ध्याशीर्वादः सुकुमारिकाभिग्रहलब्धव्रतादेशः सप्रश्रयम् इदम् आह । भगवन् । अद्य विहरणक्रिया समस्तमुनिसहितेनास्मद्गृहे कर्तव्या । इति । स आह । भोः श्रावक । धर्मज्ञो ऽपि किम् एवं वदसि । किं वयं ब्राह्मणाः । यद् आमन्त्रणं करोषि । यतो वयं सदैव तत्कालचर्यया भ्रमन्तो भक्तिभाजं श्रावकम् अवलोक्य तस्य गृहे गच्छामः । तद् गम्यताम् । न भूयो ऽप्य् एवं वाच्यम् । तच् छ्रुत्वा नापितः प्राह । भगवन् । वेद्म्य् अहम् । एतत् करिष्यामि । परं भवतः प्रभूतश्रावका अर्हणां कुर्वन्ति । अस्माभिस् तु पुनः पुस्तकाच्छादनयोग्यपटिकर्पटानि प्रगुणीकृतानि सन्ति । पुस्तकानां च लेखनाय लेखकानां च वित्तं प्रदत्तम् आस्ते । तत् सर्वथा कालोचितं कर्तव्यम् । इति । एवम् उक्त्वा स्वगृहं प्रति प्रस्थितः ।

तत्र गत्वा खदिरमयांल् लगुडान् सज्जीकृत्य कपाटकोणैकदेशे संस्थाप्य सार्धप्रहरोद्देशे भूयो ऽपि विहारद्वारम् आश्रित्य स्थितः । ततश् च सर्वान् क्रमेण निर्गच्छतो गुरुप्रार्थनया स्वगृहम् अनयत् । ते ऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तान् अपि परिचितश्रावकान् परित्यज्य प्रहृष्टास् तस्य पृष्ठतो जग्मुः । अथवा साध्व् इदम् उच्यते ।

एकाकी गृहसंत्यक्तः । पाणिपात्रो दिगम्बरः ।
सो ऽपि संबाध्यते लोके । तृष्णया पश्य कौतुकम् ॥ ११ ॥

ततो नापितो ऽपि गृहमध्ये तान् प्रवेश्य लगुडप्रहारैर् अताडयत् । ते ऽपि ताड्यमाना एके पञ्चत्वम् उपगताः । अन्ये भिन्नमस्तकाः *फूत्कर्तुम् आरेभिरे । अत्रान्तरे तदाक्रन्दशब्दम् आकर्ण्य पुरकोटपालपुरुषैर् अभिहितम् । भोः । किम् एष नगरमध्ये महान् कोलाहलः । तद् गम्यतां गम्यताम् । इति वदन्तस् ते सर्वे यावद् वेगाद् गत्वा पश्यन्ति । तावत् क्षपणका रुधिराप्लावितशरीरा नापितगृहात् पलायमाना दृष्टाः पृष्टाश् च । भोः । किम् एतत् । ते प्रोचुर् यथावस्थितं नापितवृत्तान्तम् । तैर् अपि नापितो दृढबन्धनबद्धो हतशेषक्षपणकैः सह धर्माधिष्ठानं नीतः कारणिकैः पृष्टश् च । भोः । किम् एतद् भवता कुकृत्यम् अनुष्ठितम् । सो ऽब्रवीत् । भोः । किं करोमि । एतद् अभिधाय तेषां माणिभद्रवृत्तान्तम् अकथयत् ।

तैश् च माणिभद्राकारणाय कश्चित् प्रेषितः । तेन च गत्वा माणिभद्रः समानीतः । तैः पृष्टः । भोः श्रेष्ठिन् । किं त्वया कश्चित् क्षपणको व्यापादितः । ततस् तेनापि सर्वक्षपणकवृत्तान्तः कथितः । अथ तैर् अभिहितम् । अहो । शूलायाम् आरोप्यताम् असौ कुपरीक्षितकारी दुरात्मा नापितः ।

तथानुष्ठिते तैर् अभिहितम् ।

कुदृष्टं कुपरिज्ञातं । कुश्रुतं कुपरीक्षितम् ।
तन् नरेण न कर्तव्यं । नापितेनात्र यत् कृतम् ॥ १२ ॥

अथवा साध्व् इदम् उच्यते ।

अपरीक्षितं न कर्तव्यं । कर्तव्यं सुपरीक्षितम् ।
पश्चाद् भवति संतापो । ब्राह्मणीनकुलं यथा ॥ १३ ॥

माणिभद्रः प्राह । कथम् एतत् । ते प्रोचुः ।

## ॥ कथा १ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने देवशर्मा नाम ब्राह्मणः । तस्य भार्या पुत्रम् एकं नकुलं च सुषुवे । अथ सा सुतवत्सला सुतवन्

नकुलम् अपि स्तन्यदानाभ्यङ्गमज्जनादिभिः पुपोष । परम् ' एष दुष्टजातित्वात् कदाचित् सुतस्य विरुद्धम् आचरिष्यति ' इति न नकुलस्य विश्वसिति । अथवा साध्व् इदम् उच्यते ।

कुपुत्रो ऽपि भवेत् पुंसां ' हृदयानन्दकारकः ।
दुर्विनीतः कुरूपो ऽपि ' मूर्खो ऽपि व्यसनी खलः ॥१४॥

अथ सा कदाचित् पुत्रं शय्यायां सुस्थितं विधाय जलकुम्भं चादाय पतिम् उवाच । भो उपाध्याय ' जलार्थम् अहं यास्यामि । पुत्रो ऽयं भवता नकुलाद् रक्षणीयः । अथ गतायां तस्यां ब्राह्मणो ऽपि गृहं शून्यीकृत्य स्वयम् अपि क्वचिद् भिक्षार्थं निर्ययौ ।

अत्रान्तरे कृष्णसर्पो बिलान् निष्क्रम्य दैववशात् तस्य बालकस्य पर्यङ्कान्तिकम् आगमत् । अथ नकुलस् तं स्वभाववैरिणं मत्वा स्वभ्रातृवधशङ्कयान्तराले संनिपत्य दुष्टसर्पेण सह संग्रामं विधाय तं खण्डशः कृत्वा दूरतश् चिक्षेप । ततो निजशौर्यप्रमुदितो रुधिराप्लुतमुखः स्वव्यापारप्रकाशनाय मातुः संमुखम् आजगाम । मातापि रुधिरक्लिन्नमुखम् अतिसंरब्धं तम् आगच्छन्तम् अवलोक्य ' नूनं भक्षितो ऽनेन दुरात्मना मम दारकः ' इति शङ्कितचित्ता कोपाद् अविमृश्य तस्योपरि जलकुम्भं चिक्षेप । कुम्भपातमात्रगतजीवितं तं नकुलं तत्रैवावगणय्य यावत् स्वगृहम् आगच्छति ' तावद् बालकस् तथैवास्ते ' पर्यङ्कान्तिके च महान्तं कृष्णसर्पं खण्डशः कृतं ददर्श । अथ सोपकारकपुत्रस्यानालोचितकृतवधशोकेनार्तहृदयात्मशिरोवक्षःस्थलादिताडनम् अकरोत् । एतस्मिन्न् अवसरे ब्राह्मणो ऽपि कुतश्चिद् गृहीतनिस्रावकः परिभ्रम्य यावद् आगतः ' तावत् पश्यति '

पुत्रशोकाभिभूता ब्राह्मणी विलपति । भो भोः ' लोभाभिभूतेन भवता यन् न कृतं मम वचः ' तद् अनुभव सांप्रतं निजदुष्कृतवृक्षस्य पुत्रमृत्युदुःखफलम् । अथवा भवत्य् एवैतद् अतिलोभान्धानाम् । उक्तं च ' यथा ।

अतिलोभो न कर्तव्यो ' लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतस्य ' चक्रं भ्रमति मस्तके ॥१५॥

ब्राह्मण आह । कथम् एतत् । ब्राह्मणी कथयति ।

॥ कथा २ ॥

इह कस्मिंश्चिद् अधिष्ठाने चत्वारो ब्राह्मणाः परस्परं दृढसौहृदाः प्रतिवसन्ति स्म । ते चातिशयदारिद्र्योपहता मन्त्रयां चक्रिरे । अहो धिग् अयं दरिद्रभावः । उक्तं च ।

स्वामी द्वेष्टि सुसेवितो ऽपि सहसा प्रोज्झन्ति सद्बान्धवा
द्योतन्ते न गुणास् त्यजन्ति तनुजाः स्फारीभवन्त्य् आपदः ।
भार्या नोत्तमवंशजापि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमान् अपि नरान् येषां न हि स्याद् धनम्
॥१६॥ śārdū

किं च ।

शूरः सुरूपः सुभगश् च वाग्मी
शास्त्राणि सर्वाणि विदां करोतु ।
अर्थं विना नैव कलाकलापं
प्राप्नोति मर्त्यो ऽत्र मनुष्यलोके ॥१७॥ indra

तद् वरं मरणम् ' न च निर्धनत्वम् । उक्तं च ।

उत्तिष्ठ क्षणम् एकम् उद्वह सखे दारिद्र्यभारं मम
श्रान्तस् तावद् अहं चिरान् मरणजं सेवे त्वदीयं सुखम् ।
इत्य् उक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान् मरणं परं सुखम् इति ज्ञात्वेव तूष्णीं स्थितः ॥१८॥ śārdū

तत् सर्वथार्थार्जन एव यतितव्यम् । उक्तं च ।

न हि तद् विद्यते किंचिद् ' यद् अर्थेन न सिध्यति ।
यत्नेन मतिमांस् तस्माद् ' अर्थम् एकं प्रसाधयेत् ॥१९॥

स चार्थः पुरुषाणां षड्भिर् उपायैर् भवति ' तद् यथा । भिक्षया ' नृपसेवया ' कृषिकर्मणा ' विद्यार्जनेन ' व्यवहारेण वणिक्कर्मणा च । परं सर्वेषाम् अप्य् एतेषां मध्ये वणिक्कर्मणा निरर्गलो ऽर्थलाभः । उक्तं च ।

हता भिक्षा ध्वाङ्क्षैर् विचलति नृपाणाम् अपि मनः
कृषिः क्लिष्टा विद्या गुरुविनयवृत्त्यातिविषमा ।
कुसीदं दारिद्र्यं परकरगतार्थात्मकरणं
न मन्ये वाणिज्यात् किम् अपि च शुभं वर्तनम् अहो ॥२०॥ śikha

तच् च वाणिज्यं सप्तधा वित्तागमाय स्यात् ' तद् यथा । कूटतुलामानम् ' मिथ्याक्रयकथनम् ' निक्षेपप्रवेशः ' परिचितग्राहकागमः ' गोष्ठिककर्म ' गान्धिकव्यवहारो देशान्तरभाण्डनयनं च ' इति । उक्तं च ।

पूर्णापूर्णे माने ' परिचितजनवञ्चनं तथा नित्यम् ।
मिथ्याक्रयस्य कथनं ' स्वभावरूपं किराटानाम् ॥२१॥ ār

अन्यच् च ।

निक्षेपे गृहपतिते ' श्रेष्ठी संस्तौति देवतां नित्यम् ।
निक्षेपेशो म्रियतां ' दास्याम्य् उपयाचितं तुभ्यम् ॥२२॥ ār

तथा ।

गोष्ठिककर्मनियुक्तः । श्रेष्ठी चिन्तयति चेतसा हृष्टः ।
वसुधा वसुसंपूर्णा । प्राप्ता हि मया किम् अन्येन ॥२३॥ Ār

अपरम् ।

पण्यानां गान्धिकं पण्यं । किम् अन्यैः काञ्चनादिकैः ।
गृह्यते हि यद् एकेन । तत् सहस्रेण दीयते ॥२४॥

देशान्तरभाण्डानयनं वित्तवताम् एवार्हति । उक्तं च ।

येषां स्याद् विपुलं वित्तं । श्रूयन्ते ये ऽपि दूरतः ।
ते ऽर्थैर् अर्थान् निबध्नन्ति । गजैर् इव महागजान् ॥२५॥
द्विगुणं त्रिगुणं वित्तं । क्रयविक्रयकोविदाः ।
प्राप्नुवन्त्य् उद्यमाल् लोके । दूरदेशान्तरं गताः ॥२६॥

किं च ।

सुभीताः परदेशेभ्यो । बह्वालस्याः प्रमादिनः ।
स्वदेशे निधनं यान्ति । काकाः कापुरुषा मृगाः ॥२७॥

इति । एवं संप्रधार्य देशान्तरगमनं च निश्चित्य गृहं सुहृज्जनं च परित्यज्य चत्वारो ऽपि प्रस्थिताः । अथवा साध्व् इदम् उच्यते ।

सत्यं परित्यजति मुञ्चति बन्धुवर्गं
शीघ्रं विहाय जननीम् अपि जन्मभूमिम् ।
संत्यज्य गच्छति विदेशम् अनिष्टलोकं
वित्ताकुलीकृतमतिः पुरुषः किम् अन्यत् ॥२८॥ vasa

एवं च क्रमेणावन्तिविषयं प्राप्ताः । तत्र च सिप्राजले स्नात्वा श्रीमहाकालदेवं च प्रणम्य यावद् अग्रतो गच्छन्ति । तावद् भैरवानन्दो नाम योगीन्द्रः संमुखो बभूव । तं च ब्राह्मणोचितविधिना संभाष्य ते सर्वे तेनैव सह तदीयं मठायतनं जग्मुः । अथ

ते योगिना पृष्टाः । कुतो भवन्तः । क्व वा यास्यथ । किं प्रयोजनम् । ततस् तैर् अभिहितम् । वयं सिद्धयात्रिकाः । तत्र यास्यामः ' यत्र धनतृप्तिर् मृत्युर् वा भविष्यति ' इति । एष निश्चयः । उक्तं च ।

पतति कदाचिन् नभसः ' खाते पातालतो ऽपि जलम् एति ।
दैवम् अचिन्त्यं बलवद् ' बलवान् ननु पुरुषकारो ऽपि ॥२९॥ ār

तथा ।

अभिमतसिद्धिर् अशेषा ' भवति हि पुरुषस्य पुरुषकारेण ।
दैवम् इति यद् अपि कथयसि ' पुरुषगुणः सो ऽप्य् अदृष्टाख्यः ॥३०॥ ār

क्लेशस्याङ्गम् अदत्त्वा ' सुखम् एव सुखानि नेह लभ्यन्ते ।
मधुभिन् *मथनायस्तैर् ' आश्लिष्यति बाहुभिर् लक्ष्मीम् ॥३१॥ ār

तत् कथ्यताम् अस्माकं कश्चिद् द्रव्योपायः ' विवरप्रवेशः ' शाकिनीसाधनम् ' श्मशानसेवा ' महामांसविक्रयप्रभृतिर् वा । त्वं *चाद्भुतसिद्धिः श्रूयसे ' वयं चातिसाहसिकाः । उक्तं च ' यतः ।

महान्त एव महताम् ' अर्थं साधयितुं क्षमाः ।
ऋते समुद्राद् अन्यः को ' बिभर्ति वडवानलम् ॥३२॥

सो ऽपि तेषां शिष्याणां योग्यतां विज्ञाय सिद्धवर्तिचतुष्टयं कृत्वा प्रत्येकम् अर्पयाम् आस । आह च । गम्यतां हिमाचलोत्तरदिग्भागे । यत्र यस्य वर्तिः पतति ' तत्र तेनासंदिग्धं निधिर् अवाप्यः ।

ततस् तथैव तेषां गच्छताम् अग्रेतनस्य वर्तिः क्षितौ पतिता । अथासौ यावत् तं प्रदेशं खनति ' तावत् ताम्रमयी भूमिः । ततस् तेनाभिहितम् । अहो ' गृह्यतां यथेच्छं ताम्रम् इदम् । अथान्ये प्राहुः । भो मूढ ' किम् अनेन ' यत् प्रभूतम् अपि दारिद्र्यं न

नाशयति । तद् उत्तिष्ठ । अग्रतो गच्छामः ' इति । सो ऽब्रवीत् । यान्तु भवन्तः । नाहम् अग्रतः समेष्यामि । एवम् अभिधाय ताम्रम् आदाय प्रथमो निवृत्तः ।

शेषास् त्रयो ऽप्य् अग्रतः प्रस्थिताः । अथ किंचिन्मात्रं गतस्याग्रेसरस्य वर्तिर् निपपात । सो ऽपि यावत् खनति ' तावद् रूप्यमयी भूमिः । ततः प्रहर्षितः प्राह । भोः ' गृह्यतां यथेच्छं रूप्यम् । नाग्रे गन्तव्यम् । ताव् ऊचतुः । भो मूर्ख ' पृष्ठतस् ताम्रमयी भूमिः ' अग्रे रूप्यमयी भूमिः । तन् नूनम् अग्रे सुवर्णमयी भविष्यति । तद् अनेन प्रभूतेनापि न तथा दारिद्र्यनाशो भवति । ततः स प्राह । यातां भवन्तौ । नाहम् आगमिष्यामि । एवम् अभिधाय रूप्यं गृहीत्वा पश्चान् निवृत्तः ।

अथ तयोर् अपि गच्छतोर् एकस्य वर्तिर् निपपात । सो ऽपि यावत् खनति ' तावत् सुवर्णमयी भूमिः । तां दृष्ट्वा प्रहृष्टो द्वितीयम् आह । भोः ' गृह्यतां यथेच्छं सुवर्णम् । नातः परं किंचिद् उत्तमम् अस्ति । सो ऽब्रवीत् । मूढ ' किं न वेत्सि । प्राक् ताम्रम् ' ततो रूप्यम् ' ततश् च सुवर्णं प्राप्तम् । तन् नूनम् अतः परं रत्नानि भविष्यन्ति । तद् उत्तिष्ठ ' अग्रतो गच्छावः । किम् अनेनापि प्रभूतेन भारभूतेन । सो ऽब्रवीत् । गच्छतु भवान् । अहम् अत्र स्थितस् त्वां प्रतिपालयिष्यामि ।

ततः सो ऽपि गच्छन् एकाकी ग्रीष्मार्ककिरणसंतप्तगात्रः पिपासाकुलितचित्तः सिद्धभूमिमार्गान् इतश् चेतश् च बभ्राम । अथ स भ्रमन् स्थलोपरि मस्तकोपरि परिभ्रमच् चक्रं रुधिरक्लिन्नकलेवरं पुरुषम् एकम् अपश्यत् । ततो द्रुततरं गत्वा तम् अवोचत् । भोः '

भवान् किम् एवं शिरसि भ्रमता चक्रेण तिष्ठति । तत् कथय मे ' यदि कुत्रचित् पानीयम् अस्ति ' यतस् तृष्णार्तो ऽस्मि ' इति ।

एवं तस्य वदतस् तच् चक्रं तत्क्षणाद् एव तन्मस्तकाद् ब्राह्मणशिरसि समारुरोह । सो ऽब्रवीत् । भद्र ' किम् एतत् । स आह । ममापीत्थम् एवैतच् छिरस्य् आरूढम् । स आह । तत् कथय ' कदैतद् अवतरिष्यति । महती मे वेदना । स आह । यदा त्वम् इव कश्चिद् धृतसिद्धवर्तिहस्तः समागत्यैवम् आलापयिष्यति ' तदा तस्य मस्तके समारोक्ष्यति । सो ऽब्रवीत् । कियान् कालस् तवैवं स्थितस्य । सो ऽब्रवीत् । सांप्रतं को राजा धरणीतले । चक्रधर आह । वीणावत्सराजः । पुरुष आह । रामो राजा यदासीत् ' तदाहं दारिद्र्योपहतः सिद्धवर्तिम् आदाय त्वम् इव समागमम् । ततो मयान्यः पुमान् धृतचक्रमस्तको दृष्टः पृष्टश् च । ततस् तवैव पृच्छत एव ममापि शिरसि तन्मस्तकाच् चक्रम् आरुरोह । परं कालसंख्यां न वेद्मि । चक्रधरः प्राह । भद्र ' कथम् ' तर्हि ' तवैवं स्थितस्य भोजनप्राप्तिर् आसीत् । पुरुष आह । भद्र ' धनदेन निधानहरणभयात् सिद्धानाम् एतद् भयं दर्शितम् ' येन कश्चिद् अपि नागच्छति । अथ कथम् अपि कश्चिद् आयाति ' स क्षुत्पिपासारहितो जरामरणवर्जितः केवलम् इत्थं वेदनाम् अनुभवति । तद् इदानीम् आज्ञापय माम् । मोचितो ऽस्मि त्वया *पुष्टाद् अनर्थात् । तत् सांप्रतं स्वस्थानं यास्यामि । इत्य् उक्त्वा गतः ।

अथ तस्मिन् गते ' कथं मे सहचरश् चिरयति ' इति तदन्वेषणपरस् तत्पदपङ्क्त्यनुसारेण स स्वर्णसिद्धः प्रस्थितो यावत् किंचिन्मार्गान्तरं गच्छति ' तावत् स रुधिरप्लावितशरीरं तीक्ष्ण-

क्रेण मस्तकोपरि भ्रमता वेदनार्तं स्वसहचरं नरं ददर्श । ततश् समीपवर्तिना भूत्वा सबाष्पं पृष्टः । भद्र ' किम् एतत् । सोऽब्रवीत् । विधिविलसितम् । स आह । तत् कथय ' किं तत् । सो ऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तं तम् अकथयत् । तच् छ्रुत्वासौ तं विगर्हमाणः प्राह । भोः ' मया पुनः पुनर् निषिद्धः ' परं बुद्धिहीनत्वान् मद्वाक्यं न कृतवान् । अथवा साध्व् इदम् उच्यते ।

वरं बुद्धिर् न सा विद्या ' विद्यातो बुद्धिर् उत्तमा ।
बुद्धिहीना विनश्यन्ति ' यथा ते सिंहकारकाः ॥३३॥

चक्रधरः पृच्छति । कथम् एतत् । सुवर्णसिद्धः कथयति ।

## ॥ कथा ३ ॥

कस्मिंश्चिद् अधिष्ठाने चत्वारो ब्राह्मणा मैत्रीभावम् उपागता निवसन्ति स्म । तेषां त्रयः सर्वशास्त्रपारगाः ' परं बुद्धिरहिताः ' एकस् तु शास्त्रपराङ्मुखः ' केवलं बुद्धिमान् । अथ कदाचित् तैर् मिलित्वा मन्त्रितम् । को गुणो विद्यायाः ' यदि देशान्तरं गत्वा भूपतीन् परितोष्यार्थोपार्जना न क्रियते । तत् सर्वथा सर्वे देशान्तरं गच्छामः ' इति । अथ किंचिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह । अस्माकम् एकश् चतुर्थो मूढः ' केवलं बुद्धिमान् । न च विद्यां विना राज्ञां प्रतिग्रहः केवलबुद्ध्या लभ्यते । तद् अस्मै स्वोपार्जनाविभागं न दास्यामः । तद् एष निवृत्य स्वगृहं गच्छतु । अथ द्वितीयेनाभिहितम् । अहो सुबुद्धे ' विद्याहीनस् त्वम् । तद् गच्छ गृहम् । ततस् तृतीयेनाभिहितम् । अहो ' न युज्यते कर्तुम् एवम् ' यतो वयं बालकालात् प्रभृत्य् एकत्र क्रीडिताः । तद्

आगच्छतु महानुभावः । अस्मदुपार्जितस्य वित्तस्य संविभागी भवतु ।

तथानुष्ठिते तैर् मार्गम् अतिक्रामद्भिर् अटव्यां मृतसिंहास्थीनि दृष्टानि । ततश् चैकेनाभिहितम् । अहो, पूर्वाधीतविद्यायाः प्रत्ययः क्रियते । किंचिद् एतन् मृतसत्त्वं तिष्ठति । तत् सदभ्यस्तविद्याप्रभावेण प्रत्युज्जीवयामः । ततश् चैकेनाभिहितम् । अहम् अस्थिसंचयं कर्तुं जानामि । द्वितीयेनाभिहितम् । चर्ममांसरुधिरं प्रयच्छामि । तृतीयेनाभिहितम् । अहं सजीवनं करोमि । तत एकेनास्थिसंचयः कृतः, द्वितीयेन चर्ममांसरुधिरैः संयोजितः । तृतीयो यावज् जीवितव्यं योजयति लग्नः, तावत् स बुद्धिमता निषिद्धः, उक्तश् च । एष सिंहः । यद्य् एनं सजीवं करिष्यसि, तत् सर्वान् अप्य् अस्मान् व्यापादयिष्यति, इति । ततस् तेनाभिहितम् । धिग् मूर्ख, नाहं विद्यां विफलतां नेष्यामि । ततश् च तेनाभिहितम् । तर्हि, क्षणं प्रतीक्षस्व, यावद् अहम् एनं समीपतरुम् आरोहामि । तथानुष्ठिते यावत् सजीवः कृतः, तावत् त्रयो ऽपि ते तेनोत्थाय व्यापादिताः । स च बुद्धिमान् सिंहे स्थानान्तरगते वृक्षाद् अवतीर्य गृहं गतः ॥

अतो ऽहं ब्रवीमि । वरं बुद्धिर् न सा विद्या, इति । तच् छ्रुत्वा चक्रधरः प्राह । अहो, अकारणम् एतत्, यतो दैवहता बहुबुद्धयो ऽपि विनश्यन्ति, स्वल्पधियो ऽपि विधिरक्षिता अभिनन्दन्ति । उक्तं च ।

शतबुद्धिः शिरःस्थो ऽयं, लम्बते च सहस्रधीः ।
एकबुद्धिर् अहं भद्रे, क्रीडामि विमले जले ॥३४॥

सुवर्णसिद्ध आह । कथम् एतत् । चक्रधरः कथयति ।

## ॥ कथा ४ ॥

कस्मिंश्चिज् जलाशये शतबुद्धिसहस्रबुद्धिनामानौ द्वौ मत्स्यौ प्रतिवसतः स्म । तयोर् एकबुद्धिर् नाम मण्डूको मित्रताम् आजगाम । एवं ते त्रयो ऽपि जलतीरे कियन्तम् अपि कालं सुभाषितगोष्ठीसुखम् अनुभूय पुनर् जलं प्रविशन्ति । अथ तेषां कदाचिद् गोष्ठीगतानां जालहस्ता धीवरा अस्तमयवेलायां समायाताः । तं च जलाशयं दृष्ट्वा ते मिथः प्रोचुः । अहो ' बहुमत्स्यो ऽयं ह्रदो दृश्यते स्वल्पसलिलश् च । तत् प्रभात आगमिष्यामः । इत्य् उक्त्वा स्वगृहं गताः । ते च तद् वज्रपातसदृशं वचः श्रुत्वा परस्परं मन्त्रं चक्रुः । तत्र मण्डूको ऽब्रवीत् । भो भद्रौ शतबुद्धिसहस्रबुद्धी ' किम् अत्र * कर्तुं युज्यते ' पलायनम् अवष्टम्भो वा । तच् छ्रुत्वा सहस्रबुद्धिर् विहस्योवाच । भो मित्र ' मा भैषीर् वचनश्रवणमात्रेणापि । आगमनम् अपि तावत् तेषां न संभाव्यते । अथ भविष्यति ' तदा स्वबुद्धिप्रभावेण त्वाम् आत्मानं च रक्षिष्यामि ' यतो ऽहम् अनेकजलगतीर् जानामि । तच् छ्रुत्वा शतबुद्धिर् आह । भोः ' युक्तम् उक्तं सहस्रबुद्धिना ' यतः ।

न यत्रास्ति गतिर् वायो ' रश्मीनां च विवस्वतः ।
तत्रापि हि विशत्य् आशु ' बुद्धिर् बुद्धिमतां सदा ॥३५॥

तद् वचनमात्रश्रवणाज् जन्मस्थानं *पितृपर्यायागतं त्यक्तुं न *शक्यते । इति क्वचिद् अपि न गन्तव्यम् । अहं त्वां स्वबुद्धिप्रभावेण रक्षिष्यामि । मण्डूक आह । मम तावद् एकैव बुद्धिः पलायनविषया । तद् अहम् अन्यं कंचिज् जलाशयं सभार्यो ऽद्यैव यास्यामि ।

एवम् उक्त्वा मण्डूको रात्रिम् आसाद्यान्यं जलाशयं गतः। अथान्येद्युस् तैर् यमकिंकराभैर् मत्स्यबन्धिभिः प्रभात आगत्य जालैर् आच्छादितो ह्रदः। सर्वे ऽपि मत्स्यकूर्ममण्डूककर्कटादयो जलचरा जालैर् निबध्य गृहीताः। तौ च शतबुद्धिसहस्रबुद्धी आत्मानं गतिविशेषैर् अपि रक्षन्तौ जाले पतितौ व्यापादितौ च। अथापराह्णसमये हृष्टास् ते धीवरा गृहं प्रति प्रस्थिताः। शतबुद्धिर् गुरुत्वाद् एकेन शिरसि कृतः। अपरेण रज्जुबद्धः सहस्रबुद्धिर् नीयते। ततश् च वापीकण्ठस्थितेन मण्डूकेनाभिहितं पुरः स्वपत्न्याः। पश्य पश्य प्रिये।

शतबुद्धिः शिरःस्थो ऽयं, लम्बते च सहस्रधीः।
एकबुद्धिर् अहं भद्रे, क्रीडामि विमले जले ॥३६॥

अतो ऽहं ब्रवीमि। नैकान्तेन बुद्धिर् अपि प्रमाणम्, इति। सुवर्णसिद्ध आह। यद्य् अप्य् एतद् अस्ति, तथापि मित्रवचनम् अनुल्लङ्घनीयम्। परं किं क्रियते। मया निवारितो ऽपि न स्थितो ऽतिलौल्याद् विद्याहंकाराच् च। अथवा साध्व् इदम् उच्यते।

साधु मातुल गीतेन, वारितो न मया स्थितः।
अपूर्वो ऽयं मणिर् बद्धः, संप्राप्तं गीतलक्षणम् ॥३७॥

चक्रधर आह। कथम् एतत्। सो ऽब्रवीत्।

॥ कथा ५ ॥

अस्ति कस्मिंश्चिद् अधिष्ठान उद्धतो नाम गर्दभः। स च दिवा रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्यटति। अथान्यदा

तस्य रात्रौ क्षेत्रेषु पर्यटतः कदाचिच् छृगालेन सार्धं मैत्री बभूव। तौ च *वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रेषु प्रविश्य तत्फलभक्षणं स्वेच्छया कृत्वा प्रत्यूषे स्वस्थानं व्रजतः। अथ कदाचित् क्षेत्रमध्यस्थितेन मदोद्धतरासभेन शृगालो ऽभिहितः। भो भगिनीसुत, पश्य। अतीवनिर्मला रजनी। तद् अहं गीतं करिष्यामि। तत् कतमेन रागेण करोमि। स आह। माम, किम् अनेनानर्थप्रचालनेन। यतश् चौर्यकर्मप्रवृत्ता वयम्। चौरजारैर् निभृतैर् एव स्थातव्यम्, इति। उक्तं च।

कासी विवर्जयेच् चौर्यं, निद्रालुश् चर्मचौरिकाम्।
जिह्वालौल्यं च रोगाढ्यो, जीवितुं यो ऽत्र वाञ्छति ॥३८॥

*तथा त्वदीयगीतं शङ्खनादानुवादि न मधुरम्। इति दूराद् अपि श्रुत्वोत्थाय क्षेत्ररक्षापुरुषा बन्धं वधं च विधास्यन्ति। तद् भक्षय तावन् निभृतः। तच् छ्रुत्वा रासभ आह। भोः, वनाश्रयत्वात् त्वं गीतरसं न वेत्सि। तेनैतद् ब्रवीषि। उक्तं च।

शरज्ज्योत्स्नाहते दूरं, तमसि प्रियसंनिधौ।
धन्यानां विशति श्रोत्रे, गीतझंकारजा सुधा ॥३९॥

शृगाल आह। माम, अस्त्य् एतत्। परं कठोरम् उन्नदसि। तत् किं तेन स्वार्थभ्रंशिना। रासभ आह। धिग् धिग् मूर्ख, किम् अहं गीतं न जानामि। तच् छ्रूयताम्। तस्य भेदाः, तद् यथा।

सप्त स्वरास् त्रयो ग्रामा, मूर्छनास् त्व् *एकविंशतिः।
ताना एकोनपञ्चाशत्, तिस्रो मात्रा लयास् त्रयः ॥४०॥
स्थानत्रयं यतीनां च, षड् आस्यानि रसा नव।
वर्णाः षट्त्रिंशतिर् भाषाश्, चत्वारिंशत् ततः स्मृताः ॥४१॥

पञ्चाशीत्यधिकं ह्य् एतद् ' गीतानां च शतं स्मृतम् ।
सुवर्णरचितं शुद्धं ' गीताङ्गैः सकलैर् वृतम् ॥४२॥
नान्यद् *गीताद् वरं लोके ' देवानाम् अपि दृश्यते ।
शुष्कस्नायुरवैर् ईशं ' ररञ्ज रावणः पुरा ॥४३॥

[त]त् कथं त्वं माम् अनभिज्ञं वदसि निवारयसि च । शृगाल [आ]ह । माम ' यद्य् एवम् ' तद् अहं वृतिद्वारदेशस्थः क्षेत्रपालम् [अ]वलोकयामि ' त्वं पुनः स्वेच्छया गीतं कुरु ।

तथानुष्ठिते गर्दभ उत्कन्धरो भूत्वा शब्दायितुम् आरब्धः । ततः [क्षे]त्रपाला रासभशब्दितं समाकर्ण्य क्रोधाद् दन्तान् दन्तैर् निपी[ड]यन्तो लगुडम् उद्यम्य प्रधाविताः । समेत्य च तावत् प्रता[डि]तः ' यावद् भूमिपृष्ठे पतितः । ततश् च *सच्छिद्रोदूखलं गले बद्ध्वा क्षेत्रपालाः सुप्ताः । रासभो ऽपि स्वजातिस्वभावगतवेदनः क्षणेनाभ्युत्थितः । उक्तं च ।

सारमेयखराश्वस्य ' गर्दभस्य विशेषतः ।
मुहूर्तात् परतो न स्यात् ' प्रहारजनिता व्यथा ॥४४॥

ततश् च तम् *एवोदूखलम् आदाय वृतिं चूर्णयित्वा पलायितुम् आरब्धः । एतस्मिन्न् अन्तरे शृगालो दूराद् एव तं दृष्ट्वा सस्मितम् इदम् आह ।

साधु मातुल गीतेन ' वारितो न मया स्थितः ।
अपूर्वो ऽयं मणिर् बद्धः ' संप्राप्तं गीतलक्षणम् ॥४५॥

इति ॥

तद् भवान् अपि निवार्यमाणो ऽपि मया न स्थितः । तच् छ्रुत्वा चक्रधर आह । भो मित्र ' सत्यम् एतत् । अथवा साध्व् इदम् उच्यते ।

यस्य नास्ति स्वयं प्रज्ञा, मित्राणां न करोति यः ।
स एव निधनं याति, यथा मन्थरकौलिकः ॥४६॥

स्वर्णसिद्ध आह । कथम् एतत् । चक्रधरः कथयति ।

॥ कथा ६ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने मन्थरको नाम कौलिकः । तस्य कदाचित् सर्वाणि पटकर्मकाष्ठानि भग्नानि । ततः स कुठारम् आदाय काष्ठार्थं परिभ्रमन् समुद्रतटं प्राप । तत्र च महान्तं शिंशपापादपं दृष्ट्वा चिन्तितवान् । महान् अयं वृक्षो दृश्यते । तद् अनेन *कर्तितेन प्रभूतानि पटकर्मोपकरणानि भविष्यन्ति । इत्य् अवधार्य तस्योपरि कुठारम् उद्यतवान् । अथ तत्र वृक्षे कश्चिद् व्यन्तर आसीत् । तेनाभिहितम् । भोः, ममाश्रयो ऽयं पादपः । तत् सर्वथा रक्षणीयः, यतो ऽहम् इह समुद्रकल्लोलसंस्पर्शशीतलानिलस्पृश्यमानशरीरः परमसुखेन तिष्ठामि । कौलिक आह । भोः, तद् अहं किं करोमि । दारुसामग्रीं विना बुभुक्षया पीड्यते मम कुटम्बम्, इति । तस्माद् अन्यत्र शीघ्रं गम्यताम् । अहम् एनं कर्तिष्यामि । व्यन्तरो ऽब्रवीत् । भोः, तुष्टस् तवाहम् । प्रार्थ्यतां किंचिद् अभीष्टम् । रक्षैनं पादपम्, इति । कौलिक आह । यद्य् एवम्, तर्हि, अहं गृहं गत्वा स्वमित्रं पत्नीं च पृष्ट्वा समागच्छामि । अथ, तथा, इति व्यन्तरेण प्रतिपन्ने कौलिकः स्वगृहं प्रति निवृत्तो यावद् अधिष्ठाने प्रविशति, तावन् निजसुहृदं नापितम् अपश्यत्, आह च । अहो मित्र, मम कश्चिद् व्यन्तरः सिद्धः । तत् कथय, किं प्रार्थये । नापित आह । भद्र, यद्य् एवम्, तद् राज्यं प्रार्थयस्व, येन त्वं राजा, अहं मन्त्री,

द्वाव् अपीहलोकसुखम् अनुभूय परलोकसुखम् अनुभवावः । कौलिक आह । भो मित्र ' भवत्व् एवम् । परं पत्नीम् अपि पृच्छामि । नापित आह । न हि स्त्रीभिः सह मन्त्रयितुं युज्यते । उक्तं च ।

भोजनाच्छादनं दद्याद् ' ऋतुकालं विशेषतः ।
भूषणाद्यं च नारीणां ' न ताभिर् मन्त्रयेत् सुधीः ॥४७॥

तथा च ।

यत्र स्त्री यत्र कितवो ' बालो यत्र प्रशासिता ।
तद् गृहं क्षयम् आयाति ' भार्गवो हीदम् अब्रवीत् ॥४८॥

किं च ।

तावद् एव प्रधानं स्यात् ' तावद् गुरुजने रतः ।
पुरुषो योषितां यावन् ' न शृणोति रहो वचः ॥४९॥
एताः स्वार्थपरा नार्यः ' केवलं स्वसुखे रताः ।
न तासां वल्लभो यस्मात् ' स्वसुतोऽपि सुखं विना ॥५०॥

कौलिक आह । यद्य् अप्य् एवम् ' तथापि सा पतिव्रता प्रष्टव्या ।

एवं तम् अभिधाय सत्वरं गत्वा पत्नीम् उवाच । भद्रे ' अद्यास्माकं कश्चिद् व्यन्तरः सिद्धः । स वाञ्छितं प्रयच्छति । तद् अहं त्वां प्रष्टुम् आगतः । तत् कथय ' किम् अर्थये । एष तावन् मम सुहृन् नापितः ' राज्यं प्रार्थ्यताम् ' इति वदति । साब्रवीत् । आर्यपुत्र ' का मतिर् नापितानाम् । तन् न कार्यं तद्वचः । उक्तं च ।

चारणैर् वन्दिभिर् नीचैर् ' नापितैर् बालकैर् अपि ।
न मन्त्रो यतिभिः कार्यः ' सार्धं भिक्षुभिर् एव च ॥५१॥

अपरम् अतिक्लेशपरंपरैषा राज्यस्थितिः संधिविग्रहयानासनसंश्रयद्वैधीभावादिचिन्ता पुरुषस्य कदाचिद् अपि न सुखं प्रयच्छति। तथा।

यदर्थे भ्रातरः पुत्रा ' अपि वाञ्छन्ति ये निजाः।
वधं राज्यकृते राज्ञां ' तद् राज्यं दूरतस् त्यजेत्॥५२॥

कौलिक आह। सत्यम् उक्तं भवत्या। तत् कथय ' किं याचे। साब्रवीत्। त्वं तावद् एकं पटं नित्यम् एव निष्पादयसि। तेन सर्वव्ययशुद्धिः संपद्यते। इदानीम् आत्मनो ऽन्यद् बाहुयुगलं शिरश् च याचस्व ' येन पुरतः पृष्ठतश् चैकैकं पटं संपादयसि। तत्रैकस्य मूल्येन गृहव्ययः शुध्यति ' द्वितीयस्य मूल्येन विशेषकृत्यानि कुर्वाणस्य जातिमध्ये श्लाघ्यमानस्य कालो गच्छति। सो ऽपि तच् छ्रुत्वा प्रहृष्टः प्राह। साधु ' पतिव्रते ' साधूक्तं भवत्या। एवं करिष्यामि ' इति निश्चयः। अथ कौलिको गत्वा व्यन्तरं प्रार्थयां चक्रे। भोः ' यदि वाञ्छितं प्रयच्छसि ' तद् देहि मे द्वितीयं बाहुयुगलं शिरश् च। एवम् अभिहिते तत्क्षणाद् एव द्विशिराश् चतुर्बाहुः संजातः। ततश् च प्रहृष्टमना यावद् गृहम् आगच्छति ' तावल् लोकैः ' राक्षसो ऽयम् ' इति मन्यमानैर् लगुडपाषाणादिभिस् ताडितो मृतश् च॥

अतो ऽहं ब्रवीमि। यस्य नास्ति स्वयं प्रज्ञा ' इति। चक्रधरः पुनर् एवाह। सर्वो ऽपि जनो ऽश्रद्धेयकदाशापिशाचिकायस्तो हास्यपदवीं याति। अथ साध्व् इदम् उच्यते।

अनागतवतीं चिन्ताम् ' असंभाव्यां करोति यः।
स एव पाण्डुरः शेते ' सोमशर्मपिता यथा॥५३॥

स्वर्णसिद्ध आह। कथम् एतत्। सो ऽब्रवीत्।

॥ कथा ७ ॥

अस्ति कस्मिंश्चिद् अधिष्ठाने स्वभावकृपणो नाम ब्राह्मणः । तेन भिक्षार्जितैः सक्तुभिर् भुक्तोद्वरितैः कलशः संपूरितः । तं च कलशं नागदन्ते ऽवलम्ब्य तस्याधस्तात् खट्वां निधाय सततम् एकदृष्ट्यावलोकयन् रात्रौ चिन्तयाम् आस । सक्तुभिः परिपूर्णो ऽयं तावद् घटो वर्तते । तद् यदि दुर्भिक्षं भविष्यति ' तदा रूपकाणां शतम् अस्मिन् उत्पत्स्यते । ततश् च तेनाजाद्वयम् अहं *ग्रहीष्ये । ततः षण्मासे षण्मासे प्रसववशाद् अजायूथं भविष्यति ' ततो ऽजाभिर् गावः । गवां प्रसवात् तदपत्यविक्रयं करिष्यामि । ततो गोभिर् महिष्यः ' महिषीभिर् वडवाः ' वडवाप्रसवतो मम प्रभूता अश्वा भविष्यन्ति । तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति । सुवर्णेन चतुःशालं गृहं संपत्स्यते । ततश् च कश्चिन् मम गृहम् अभ्येत्य प्राप्तवरां रूपाढ्यां कन्यां प्रदास्यति । तस्याः पुत्रो भविष्यति । तस्याहं सोमशर्मा ' इति नाम करिष्यामि । ततस् तस्मिञ् जानुचलनयोग्ये संजाते ऽहं पुस्तकं गृहीत्वाश्वचलस्यापृष्ठदेशे समुपविश्यावधारयिष्यामि । एतस्मिन्न् अन्तरे सोमशर्मा मां दृष्ट्वा जनन्या उत्सङ्गाज् जानुप्रचलनपरो ऽश्वानां समीपवर्ती गमिष्यति । ततो ऽहं ब्राह्मणीं कोपाद् अभिधास्यामि । गृह्यतां गृह्यतां बालकः । सापि गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति । ततो ऽहं समुत्थाय पादप्रहारेण तां ताडयिष्यामि । एवं तेन तद्ध्यानावस्थितेन पादप्रहारस् तथा मुक्तः ' यथा घटो भग्नः । घटान्तर्वर्तिभिः सक्तुभिश् च पाण्डुरतां गतः ॥

अतो ऽहं ब्रवीमि । अनागतवतीं चिन्ताम् ' इति । सुवर्णसिद्ध आह । एवम् एवैतत् ' यतः ।

यो लौल्यात् कुरुते कर्म ' नैवानर्थम् अपेक्षते ।
विडम्बनाम् अवाप्नोति ' स यथा चन्द्रभूपतिः ॥५४॥

चक्रधर आह । कथम् एतत् । सो ऽब्रवीत् ।

## ॥ कथा ८ ॥

अस्ति कस्मिंश्चिन् नगरे चन्द्रो नाम भूपतिः । तत्पुत्रक्रीडार्थं वानरयूथं तिष्ठति । तन् नित्यम् एवानेकभोजनभक्ष्यादिभिः पुष्टिं नीयते । तस्यैव कुमारस्य क्रीडार्थं मेषयूथम् अस्ति । तन्मध्याद् एको जिह्वालौल्याद् अहर्निशं महानसे प्रविश्य यत् किंचित् पश्यति ' तत् सर्वं भक्षयति । तं च सूपकारा यत् किंचित् काष्ठादिकम् अग्रे पश्यन्ति ' तेन ताडयन्ति । सो ऽपि वानरयूथपस् *तद् दृष्ट्वा व्यचिन्तयत् । अहो ' मेषसूपकारयोः कलहो ऽयं वानराणां क्षयाय भविष्यति ' यतः स्वादलम्पटो ऽयं मेषः ' महाकोपाश् च सूपकारा यथास्थानासन्नेन वस्तुना प्रहरन्ति । तद् यदि वस्त्वन्तराभावात् कदाचिद् उल्मुकेन ताडयिष्यन्ति ' तद् ऊर्णाप्रस्तरो ऽयं मेषः स्वल्पेनापि प्रज्वलिष्यति । तद् दह्यमानः पुनर् अश्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति ' सापि तृणप्राचुर्याज् ज्वलिष्यति ' इति । ततो ऽश्वा *वह्निदाहम् अवाप्स्यन्ति । शालिहोत्रे पुनर् एतद् उक्तम् ' यद् वानरवसयाश्वानां वह्निदाहदोषः प्रशाम्यति । तन् नूनम् अस्माकम् उपस्थितो मृत्युः ' इति । एवं निश्चित्य सर्वान् वानरान् आहूय प्रोवाच ।

मेषेण सूपकाराणां ' कलहो यो ऽत्र वर्तते ।
स भविष्यत्य् असंदिग्धं ' वानराणां क्षयावहः ॥५५॥
तस्मात् स्यात् कलहो यत्र ' गृहे नित्यम् अकारणः ।
तद् गृहं जीवितं वाञ्छन् ' दूरतः परिवर्जयेत् ॥५६॥

तथा च ।

*कलहान्तानि हर्म्याणि ' कुवाक्यान्तं च सौहृदम् ।
कुराजान्तानि राष्ट्राणि ' कुकर्मान्तं यशो नृणाम् ॥५७॥

तन् न यावत् सर्वेषां क्षयो भवति ' तावद् गृहं परित्यज्य वनं *गच्छामः ।

अथ तस्य तद् वचनं श्रुत्वा ते *मदोद्धता विहस्य तम् *ऊचुः । भोः ' वृद्धभावाद् भवतो वैकल्यं बुद्धेः संजातम् ' येनैतद् ब्रवीषि । न वयं राजपुत्रैः स्वहस्तप्रदत्तान् अमृतकल्पान् भक्ष्यविशेषान् परित्यज्य तत्राटव्यां कषायकटुतिक्तक्षाराणि वृक्षफलानि भक्षयिष्यामः । तच् छ्रुत्वा कलुषां दृष्टिं कृत्वा यूथपः प्रोवाच । रे रे ' मूर्खा यूयम् । नैतस्य सुखस्य परिणामं जानीथ । यस्माद् आपातमात्रमधुरम् एतत् सुखं परिणामे विषवद् भविष्यति । तद् अहं कुलक्षयं स्वयं नावलोकयिष्यामि । सांप्रतं तद् एव वनं यास्यामि । उक्तं च ।

परहस्तगतां भार्यां ' मित्रं च विषमस्थितम् ।
धन्यास् तात न पश्यन्ति ' देशभङ्गं कुलक्षयम् ॥५८॥

इति । एवम् अभिधाय सर्वान् परित्यज्य स यूथपो ऽटव्यां गतः ।

अथ तस्मिन् गते ऽन्यतमे ऽहनि स मेषो महानसे प्रविष्टः । यावत् सूपकारेण किंचिद् अपि नासादितम् ' तावद् अर्धदग्धज्वलितकाष्ठम् आदाय स ताडितः । सो ऽपि तेन ताडितः सन्

अर्धज्वलच्छरीरः शब्दायमानः प्रत्यासन्नवर्तिन्याम् अश्वकुट्यां, प्रविष्टः । तत्र च लुठतस् तृणप्राचुर्यात् सर्वतो ऽपि वह्निज्वालाः समुत्थिताः, कुट्यां च निबद्धा घोटकाः केचित् स्फुटितनयनाः पञ्चत्वं गताः । केचिच् च बन्धनानि त्रोटयित्वार्धदग्धशरीरा हेषायमाणाः सर्वम् अपि जनं व्याकुलीचक्रुः । एतस्मिन्न् अन्तरे राजा सविषादः शालिहोत्रज्ञाञ् चिकित्सकान् आहूय प्रोवाच । प्रोच्यताम् अश्वानाम् एतेषां कश्चिद् दाहोपशमोपायः । ते ऽपि शास्त्राणि संचिन्त्य प्रोचुः । देव, प्रोक्तम् अत्र विषये भगवता शालिहोत्रेण ।

कपीनां वसयाश्वानां, वह्निदाहसमुद्भवा ।
व्यथा विनाशम् अभ्येति, तमः सूर्योदये यथा ॥५९॥

तत् क्रियताम् एतच् चिकित्सितम्, यावद् रोगेण ते न विनश्यन्ति । सो ऽपि तच् छ्रुत्वा वानरवधम् आदिष्टवान् । किं बहुना, सर्वे ते व्यापादिताः, इति । यूथपतिस् तु न तां कुलधर्षणां साक्षाद् ददर्श । श्रुतिपरंपरया तु श्रुत्वा न सेहे । उक्तं च, यतः ।

धर्षणां मर्षयेद् यो ऽत्र, वंशजां परनिर्मिताम् ।
भयाद् वा यदि वा लोभात्, स ज्ञेयः पुरुषाधमः ॥६०॥

अथ तेन वृद्धवानरेण कुत्रचित् पिपासाकुलेन भ्रमता पद्मिनीखण्डमण्डितं सरः समासादितम् । तत्र च यावन् निपुणतयावलोकयति, तावत् प्रविशद् एव पदं पश्यति, न च निर्गच्छत्, इति । ततश् चिन्तयाम् आस । नूनम् अत्रान्तर्जले दुष्टग्राहेण भाव्यम् । तत् पद्मिनीनालम् आदाय दूरस्थो ऽपि जलपानं करोमि । तथानुष्ठिते तन्मध्याद् रत्नमालालंकृतकण्ठो

राक्षसो निष्क्रम्य तम् उवाच । भोः ' यो ऽत्र सलिले प्रविशति ' तं भक्षयामि ' इति । तन् नास्ति धूर्ततरस् त्वद् अन्यः । यो ऽनेन विधिना पानीयं पिबति । तत् तुष्टो ऽहम् । प्रार्थयस्व हृदयवाञ्छितम् । कपिर् आह । भोः ' कियती भक्षणशक्तिस् ते । स आह । शतसहस्रायुतलक्षाण्य् अपि जलप्रविष्टानि भक्षयामि । बाह्यतः शृगालो ऽपि मां धर्षयति । वानरः प्राह । अस्ति मे भूपतिना सहात्यन्तं वैरम् । यद्य् एनां रत्नमालां मे प्रयच्छसि ' तत् सपरिवारम् अपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि प्रवेशयामि । अथ राक्षसस् तस्मै रत्नमालां समर्पयाम् आस ।

वानरो ऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमञ् जनैर् दृष्टः पृष्टश् च । भो यूथप ' क्व भवान् इयन्तं कालं गत्वा स्थितः । क्व भवतेदृग् रत्नमाला लब्धा ' या दीप्त्या सूर्यम् अपि तिरस्कुरुते । वानरः प्राह । अस्ति कुत्रचिद् अरण्ये धनदविनिर्मितं सुगुप्ततरं सरः । तत्रार्धोदिते सूर्ये सूर्यवारेण यः कश्चिन् निमज्जति ' स धनदप्रसादाद् ईदृग्रत्नमालाविभूषितकण्ठो निष्क्रामति । अथ भूभुजा जनात् तद् आकर्ण्य स वानरः समाहूय पृष्टः । भो यूथपते ' सत्यम् एतत् । कपिर् आह । स्वामिन् ' एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया प्रत्ययस् ते । यदि तवापि तया प्रयोजनम् ' तन् मया सह कम् अपि प्रेषय ' येन दर्शयामि । तच् छ्रुत्वा नृपतिः प्राह । यद्य् एवम् ' तद् अहं सपरिजनः स्वयम् एष्यामि ' यथा प्रभूता रत्नमालाः संपद्यन्ते । वानर आह । स्वामिन् ' एतद् एव चारु ।

अथ भूपतिः सपरिजनो रत्नमालालोभात् प्रस्थितः । वा-

नरो ऽपि राज्ञा दोलारूढेन स्वोत्सङ्गम् आरोपितः प्रतिपत्तिपूर्वं, गच्छति । अथवा साध्व् इदम् उच्यते ।

लोभाद् एव नरा मूढा, धनविद्यान्विता अपि ।
अकृत्येषु नियोज्यन्ते, *भ्राम्यन्ते दुर्गमेष्व् अपि ॥६१॥

तथा च ।

इच्छति शती सहस्रं, सहस्री लक्षम् ईहते ।
लक्षाधिपस् ततो राज्यं, राज्याच् च स्वर्गम् ईहते ॥६२॥
जीर्यन्ति जीर्यतः केशा, दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतश् चक्षुषी श्रोत्रे, तृष्णैका तु न जीर्यति ॥६३॥

अथ प्रत्यूषे तत् सरः समासाद्य वानरो राजानम् उवाच । देव, अत्रार्धोदिते सूर्ये प्रविष्टानां सिद्धिर् भवति, इति । तत् सर्वो ऽपि परिजनो वाच्यः, येनैकहेलया प्रविशति । त्वया पुनर् मया सह प्रवेष्टव्यम्, येन पूर्वदृष्टस्थानम् आसाद्य प्रभूतास् ते रत्नमाला दर्शयामि'। अथ प्रविष्टास् ते सर्वे लोकाः, भक्षिताश् च तेन राक्षसेन, इति ।

अथ चिरायमाणेषु तेषु राजा वानरम् उवाच । भो यूथाधिप, किम् इति चिरयति मे परिजनः । तच् छ्रुत्वा वानरः सत्वरं वृक्षम् आरुह्य राजानम् उवाच । भो दुष्टनरपते, राक्षसेनान्तःसलिलस्थेन भक्षितस् ते परिजनः । 'साधितं कुलक्षयकारणोत्थं भवता सह वैरम् । तद् गम्यताम् । मया त्वं स्वामी मत्वा नात्र प्रवेशितः । उक्तं च, यतः ।

कृते प्रतिकृतं कुर्याद्, हिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि, यो दुष्टे दुष्टम् आचरेत् ॥६४॥

तत् त्वया मम कुलक्षयो निर्मितः, मया तव, इति ।

एतद् आकर्ण्य राजा शोकाविष्टस् त्वरितपदं *यथायातं प्रतिनिवृत्तः ' इति । अथ तस्मिन् भूपतौ गते राक्षसः सुतृप्तो जलान् निष्क्रम्य सानन्दम् इदम् आह ।

हतः शत्रुः कृतं मित्रं ' रत्नमाला न हारिता ।
नालेन पिबता तोयं ' भवता साधु वानर ॥६५॥

अतो ऽहं ब्रवीमि । यो लौल्यात् कुरुते कर्म ' इति । सुवर्णसिद्धः पुनर् अप्य् आह । भोः ' प्रेषय माम् । स्वगृहं गच्छामि । चक्रधरः प्राह । कथं माम् एतदवस्थं मुक्त्वा यास्यसि । उक्तं च ।

यस् त्यक्त्वा सापदं मित्रं ' याति निष्ठुरतां वहन् ।
कृतघ्नस् तेन पापेन ' नरके गच्छति ध्रुवम् ॥६६॥

सुवर्णसिद्धः प्राह । भोः ' सत्यम् एतत् ' यदि गम्यस्थाने शक्तियुक्तस् त्यजति । एतच् च मनुष्याणाम् अगम्यस्थानम् ' नास्ति च कदाचिद् अपि शक्तिर् उन्मोचयितुम् । अपरम् ' यथा यथा तव चक्रभ्रमणवेदनया मुखविकारं पश्यामि ' तथा तथा जानामि ' *यद् द्राग् इतः स्थानाद् गच्छामि ' मा कथंचिद् अप्य् अस्माकम् अप्य् अनर्थो ऽयं भविष्यति ' इति । अथ साध्व् इदम् उच्यते ।

यादृशी वदनच्छाया ' दृश्यते तव वानर ।
गृहीतो ऽसि विकालेन ' यः परैति स जीवति ॥६७॥

चक्रधर आह । कथम् एतत् । सो ऽब्रवीत् ।

॥ कथा ९ ॥

अस्ति कस्मिंश्चित् पुरे भद्रसेनो नाम राजा । तस्य सर्वलक्षणसंपूर्णा रत्नवती नाम कन्यास्ति । तां च कश्चिद् राक्षसो हर्तुम् इच्छति । रात्राव् आगत्य नित्यम् एवोपभुङ्क्ते ' परं कृताङ्गरक्षपरिवेषां तां हर्तुं न शक्नोति । सा च तत्सुरतसमये राक्षससांनिध्यजाम् अवस्थां कम्पज्वरादिभिर् अनुभवति । एवम् अतिक्रामति काले राक्षसो गृहकोणे स्थितो राजदुहितुर् आत्मानम् अदर्शयत् । ततः सा सखीम् उवाच । सखि ' पश्य ' विकालसमये राक्षसो ऽयं नित्यम् एवागत्य मां कदर्थयति । तद् अस्ति किंचिद् अस्य दुरात्मनः प्रतिषेधविधानम् । तच् छ्रुत्वा राक्षसो व्यचिन्तयत् । नूनं यथाहम् ' तथान्यः कश्चिद् विकालनामास्या हरणाय नित्यम् एवागच्छति । परं सो ऽपि हर्तुं न शक्नोति । तत् तावद् अहम् अश्वरूपं कृत्वाश्वमध्यस्थो निरीक्षे ' किंरूपः किंप्रभावश् च सः ' इति ।

तथानुष्ठिते निशीथसमये राज्ञो गृहे कश्चिद् अश्वापहारकः प्रविष्टः । स च सर्वान् अश्वान् अवलोक्य तं राक्षसाश्वं शुभतरं दृष्ट्वा खलीनं तन्मुखे निधाय समारूढः । एतस्मिन्न् अन्तरे राक्षसश् चिन्तयाम् आस । नूनं स एष विकालनामा मां दुष्टं मत्वा कोपान् निहन्तुम् अभ्यागतः । तत् किं करोमि । एवं चिन्तयन् सो ऽश्वापहारकेण कशाघातेन ताडितः । अथ भयत्रस्तमनाः प्रधावितुम् आरब्धः । चौरो ऽपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरीकर्तुम् आरेभे । तद् यदि वाजी भवति ' तदा खलीनं गणयति । स तु केवलं *वेगाद् वेगं गच्छति । अथ तं

तथावगणितखलीनाकर्षणम् अवलोक्य चौरश् चिन्तयाम् आस। अहो ' नैवंविधा वाजिनो भवन्ति । तन् नूनम् एतेनाश्वरूपेण राक्षसेन भाव्यम् । तद् यदि पांसुलं भूतलम् अवलोकयामि ' तत्रात्मानं पातयामि । नान्यथा मे जीवितव्यम् अस्ति ' इति । एवं चिन्तयत इष्टदेवताम् अनुस्मरतो ऽश्वापहारकस्य सो ऽश्वरूपराक्षसो वटवृक्षतले गतः ' चौरो ऽपि वटप्ररोहम् आसाद्य तत्रैव विलग्नः । ततश् च द्वाव् अपि पृथग्भूतौ लब्धजीविताशौ परमानन्दनिर्भरौ बभूवतुः ।

अथ तत्र वटे राक्षससुहृत् कश्चिद् वानर आसीत् । तेन नश्यन्तं राक्षसम् अवलोक्य व्याहृतम् । भोः ' किम् एवम् अलीकभयेन प्रणश्यसि । *भक्ष्यो ऽयं ते मानुषः । तद् भक्ष्यताम् । स तस्य वचनं श्रुत्वा स्वरूपम् आधाय शङ्कितमनाः स्खलितमतिर् वृत्तः । अथ चौरस् तं वानराहूतं ज्ञात्वा कोपाद् उपर्य् उपविष्टवानरस्य लम्बमानलाङ्गूलं मुखे निधाय गाढतरं चर्वितुम् आरब्धवान् । वानरो ऽपि राक्षसाभ्यधिकं मन्यमानो भयान् न किंचिद् अप्य् उक्तवान् । केवलं व्यथार्तो नितरां निमीलितनयनो दन्तैर् दन्तान् निष्पीडयंस् तिष्ठति । राक्षसो ऽपि तं तथाभूतम् अवलोक्य श्लोकम् एनम् अपठत् ।

यादृशी वदनच्छाया ' दृश्यते तव वानर ।
गृहीतो ऽसि विकालेन ' यः परैति स जीवति ॥६८॥

सुवर्णसिद्धः पुनर् अप्य् आह । प्रेषय माम् । स्वगृहम् अनुगच्छामि । त्वं पुनर् अत्र स्थितो दुर्विनयवृक्षफलम् अनुभुङ्क्ष्व । चक्रधर आह । भोः ' अकारणम् एतत् ' नयो ऽनयो वा ' यतो दैववशाच् छुभाशुभं नृणाम् उपतिष्ठते । उक्तं च ।

अन्धकः कुब्जकश् चैव । राजकन्या च त्रिस्तनी ।
अनयो ऽपि नयं याति । यावच् छीर् भजते नरम् ॥६९॥

सुवर्णसिद्ध आह । कथम् एतत् । चक्रधरः कथयति ।

## ॥ कथा १० ॥

अस्त्य् उत्तरापथे मधुपुरं नाम नगरम् । तत्र मधुसेनो नाम राजा । तस्य कदाचित् त्रिस्तनी कन्या जज्ञे । अथ तां त्रिस्तनीं जातां श्रुत्वा राजा कञ्चुकिनम् आहूय प्रोवाच । भोः । त्यज्यताम् इयम् अरण्ये । यथा न कश्चिद् एव जानाति । तच् छ्रुत्वा कञ्चुकी प्राह । महाराज । ज्ञायत एतत् । यद् अनिष्टकारिणी त्रिस्तनी कन्या भवति । तद् अपि ब्राह्मणा आहूय प्रष्टव्याः । येन लोकद्वये ऽपि विरुद्धता न भवति । उक्तं च । यतः ।

पृच्छकेन सदा भाव्यं । पुरुषेण विजानता ।
राक्षसेन्द्रगृहीतो ऽपि । प्रश्नान् मुक्तो द्विजः पुरा ॥७०॥

राजाह । कथम् एतत् । कञ्चुकी कथयति ।

## ॥ कथा ११ ॥

अस्ति कुत्रचिद् अरण्ये चण्डकर्मा नाम राक्षसः । एकदा तेन भ्रमता कश्चिद् ब्राह्मणः समासादितः । ततस् तस्य स्कन्धम् आरुह्य प्रोवाच । भोः । अग्रे गम्यताम् । ब्राह्मणो ऽपि भयत्रस्तमनास् तम् आदाय प्रस्थितः । अथ तस्य कमलोदरसोदरौ पादौ दृष्ट्वा तम् अपृच्छत् । भोः । कथम् एवंविधौ भवतः कोमलौ पादौ । राक्षस आह । नाहम् अनुद्धानः पद्भ्यां कदाचिद् अपि भूमिं स्पृशामि । इति मे व्रतम् अस्ति । ब्राह्मणो ऽप्य् आत्मनो मोक्षो-

पायं चिन्तयन् सरः प्राप्तः । ततो राक्षसेनाभिहितः । भोः ' यावद् अहं स्नानं कृत्वा देवार्चनं विधाय सरसो निःसरामि ' तावत् त्वया नातः स्थानात् क्वापि गन्तव्यम् । तथानुष्ठिते ब्राह्मणश् चिन्तयाम् आस । नूनं देवतार्चनविधेर् ऊर्ध्वं माम् एष भक्षयिष्यति । तद् द्रुततरं गच्छामि ' यतो नायम् अनुद्धानपादो मे पृष्ठतः समेष्यति ' इति । तथानुष्ठिते राक्षसो व्रतभङ्गभयात् तत्पृष्ठतो न गतः ॥

अतो ऽहं ब्रवीमि । पृच्छकेन सदा भाव्यम् ' इति । अथ तस्य वचनं श्रुत्वा राजा ब्राह्मणान् आहूय प्रोवाच । भो ब्राह्मणाः ' त्रिस्तनी मे कन्या जाता । तत् किम् एतस्याः प्रतिविधानम् अस्ति ' न वा । ते प्रोचुः । देव ' श्रूयताम् ।

हीनाङ्गी वाधिकाङ्गी वा ' भवेद् या कन्यकात्र सा ।
भर्तुश् च स्याद् विनाशाय ' स्वशीलनिधनाय च ॥७१॥
या पुनस् त्रिस्तनी कन्या ' याति लोचनगोचरम् ।
पितरं नाशयत्य् एव ' सा द्रुतं नात्र संशयः ॥७२॥

तस्माद् एतद्दर्शनं परिहरतु देवः । यदि कश्चिद् एनाम् उद्वाहयति ' तत् तस्मै दत्त्वा देशत्यागेन नियोजयितव्यः ' इति । एवं कृते लोकद्वयाविरुद्धता कृता भवति ' इति । तेषां तद् वचनम् आकर्ण्य राजा सर्वत्र पटहघोषणाम् आज्ञापयाम् आस ' यथा । अहो ' त्रिस्तनीं राजकन्यां यः परिणयति ' तस्य राजा सुवर्णलक्षं दत्त्वा देशत्यागं कारयति । एवम् आघोषणायां क्रियमाणायां प्रभूतकालो व्यतीतः । न च कश्चित् तां परिणयति । सापि गुप्तस्थानसंस्थिता यौवनाभिमुखी संजज्ञे ।

अथ तत्रैव नगरे कश्चिद् अन्धो ऽस्ति । तस्य च मन्थरक-

नामा यष्टिग्राही कुब्जः सहायो ऽस्ति । ततस् तौ पटहम् आकर्ण्य मिथो मन्त्रयेते । स्पृश्यते ऽसौ पटहो यदि ' कन्यका सुवर्णं च लभ्यते । सुवर्णप्राप्त्या सुखेन कालो व्रजति । अथ कन्यकादोषेण मृत्युर् भवति ' तद् अस्य दारिद्र्योत्थक्लेशस्य पर्यन्तो भवति । उक्तं च ' यतः ।

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः
प्राणातङ्कः पवनसमता दुःखहानिर् विलासः ।
धर्मः शास्त्रं सुरगुरुमतिः शौचम् आचारचिन्ता
पूर्णे सर्वे जठरपिठरे प्राणिनां संभवन्ति ॥७३॥ mandā

एवं मन्त्रयित्वान्धेन गत्वा पटहः स्पृष्टः । आह च । अहं तां कन्यां परिणेष्यामि । ततस् तै राजपुरुषैर् गत्वा राज्ञे निवेदितम् । देव ' केनचिद् अन्धेन पटहः स्पृष्टः । तद् अत्र विषये देवः प्रमाणम् । राजा प्राह । भोः ।

अन्धो वा बधिरो वाथ ' *कुष्ठी वाप्य् अन्त्यजो ऽपि वा ।
परिगृह्णातु तां कन्यां ' सलक्षां स्याद् विदेशगः ॥७४॥

अथ राजादेशानन्तरम् एव तै राजपुरुषैर् नदीतीरे नीत्वा सुवर्णलक्षं दत्त्वा त्रिस्तनी तेनान्धेन सह विवाहिता । ततो यानपात्रम् आरोप्य कैवर्ताः प्रोक्ताः । भोः ' देशान्तरं नीत्वा क्वचिद् अधिष्ठाने सकुब्जपत्नीको ऽयम् अन्धो धारणीयः । तथानुष्ठिते विदेशम् आसाद्य क्वचिद् अधिष्ठाने त्रयो ऽपि ते मूल्येन गृहम् आदाय सुखेन कालं नयन्ति स्म । केवलम् अन्धः पर्यङ्के सदा सुप्तस् तिष्ठति । गृहव्यापारं कुब्जः करोति ।

एवं गच्छति काले त्रिस्तनी कुब्जेन सह विनष्टा ' आह च । भोः सुभग ' यद्य् अयम् अन्धः कथम् अपि व्यापाद्यते ' तदावां

सुखेन कालं नयावः । तद् अन्विष्यतां क्वापि विषम् ' येन तद् दत्त्वामुं व्यापाद्य सुखिनी भवामि । अथान्येद्युः कुब्जेन मृतः कृष्णसर्पः कुत्राप्य् आसादितः । तं गृहीत्वा प्रहृष्टमनाः स्वगृहम् अभ्येत्य ताम् आह । सुभगे ' लब्धो ऽयं कृष्णसर्पः । तद् एनं खण्डशः कृत्वा चारुवस्तुभिः संस्कृत्यामुष्मै विगतनयनाय ' मत्स्यामिषम् ' इति कथयित्वा संप्रयच्छ ' येन द्राग् विपद्यते ' इति । एवम् उक्त्वा भूयो ऽपि मन्थरको हट्टमार्गं प्रति प्रस्थितः । सापि कृष्णसर्पं खण्डीकृत्य सतक्रस्थाल्यां निधाय चुल्लीमस्तकम् आरोप्य स्वयं गृहव्यापारव्याकुलतया तम् अन्धं सप्रश्रयम् इदम् आह । आर्यपुत्र ' अहम् अद्य तवाभीष्टतमान् मत्स्यान् समानीय पचन्ती तिष्ठामि । तद् यावद् अहं गृहव्यापारान्तरं करोमि ' तावत् त्वं दर्वीं गृहीत्वा तान् प्रचालय । सो ऽपि तच् छ्रुत्वा प्रहृष्टमनाः सृक्किणी परिलिहन् सत्वरम् उत्थाय दर्वीम् आदाय तान् प्रचालयितुम् आरभत । अथ तान् प्रचालयतो विषगर्भबाष्पेण संस्पृष्टं दृष्टिपटलं शनैः शनैर् *अगलत् । सो ऽपि तम् एव गुणं मन्यमानो विशेषेण बाष्पग्रहणम् अकरोत् । ततः स्पष्टदृष्टिर् यावत् पश्यति ' तावत् स्थालीमध्ये कृष्णसर्पशकलानि केवलानि । ततो व्यचिन्तयत् । अहो ' किम् एतत् । ममाग्रे मत्स्यामिषं कथितम् आसीत् ' एतानि पुनः कृष्णसर्पशकलानि । तत् तावज् जानामि सम्यक् ' किं त्रिस्तन्याश् चेष्टितम् इदम् ' किं वा मद्वधायैष उपक्रमो मन्थरकस्य ' उतान्यस्य वा कस्यचित् । एवं स चिन्तयन् आकारं निगूहयन् अन्धवत् कर्म करोति । अत्रान्तरे मन्थरकः समागत्य निःशङ्कम् आलिङ्गनचुम्बनादिभिस् त्रिस्तनीम् उपभोक्तुम् उपचक्रमे । अन्धो ऽपि सर्वम् आलोकयन्न्

अपि किंचिच् छस्त्रम् अपश्यन् क्रोधान्धः पूर्ववत् समीपं गत्वा मन्थरकं चरणाभ्याम् आदाय शरीरबलसामर्थ्यान् मस्तकोपरि *परिभ्राम्य तं त्रिस्तनीहृदये व्यताडयत् । अथ कुब्जकशरीरप्रहारेण तस्यास् तृतीयस्तनो ऽन्तः प्रविष्टः । पृष्ठप्रदेशस्तनस्पर्शात् कुब्जकः प्राञ्जलतां गतः ॥

अतो ऽहं ब्रवीमि । अन्धकः कुब्जकश् च । इति । सुवर्णसिद्धः प्राह । भोः । सत्यम् एतद् अभिहितं त्वया । दैवानुकूलतया सर्वत्र कल्याणं संपद्यते । परं तथापि पुरुषेण दैवम् अङ्गीकृत्य नयो न त्याज्यः । यथा त्वया मम वाक्यम् अकुर्वता त्यक्तः ।

एवम् उक्त्वा *सुवर्णसिद्धस् तम् अनुज्ञाप्य स्वगृहं प्रति प्रतिनिवृत्तः ॥ इति ॥

समाप्तं चेदम् अपरीक्षितकारिता नाम पञ्चमं तन्त्रम् । यस्यायम् आद्यश्लोकः ।

कुदृष्टं कुपरिज्ञातं । कुश्रुतं दुःपरीक्षितम् ।
तन् नरेण न कर्तव्यं । नापितेनेह यत् कृतम् ॥ ५ ॥

एतत्समाप्तौ समाप्तं *पञ्चतन्त्रापरनामकं पञ्चाख्यानकं नीतिशास्त्रम् ।

कथान्वितं सत्कविसूक्तयुक्तं । श्रीविष्णुशर्मा नृपनीतिशास्त्रम् ।
चकार येनेह परोपकारः । स्वर्गाय जायेत बुधा वदन्ति ॥ १ ॥ upa

श्रीसोममन्त्रिवचनेन विशीर्णवर्णम्
आलोक्य शास्त्रम् अखिलं खलु पञ्चतन्त्रम् ।
श्रीपूर्णभद्रगुरुणा गुरुणादरेण
संशोधितं नृपतिनीतिविवेचनाय ॥ २ ॥ vasa

प्रत्यक्षरं प्रतिपदं । प्रतिवाक्यं प्रतिकथं प्रतिश्लोकम् ।
श्रीपूर्णभद्रसूरिर् । विशोधयाम् आस शास्त्रम् इदम् ॥ ३ ॥ ār

यद् यत् किंचित् क्वचिद् अपि मया नेह सम्यक् प्रयुक्तं
तत् क्षन्तव्यं निपुणधिषणैः क्षान्तिमन्तो हि सन्तः ।
*श्रीश्रीचन्द्रप्रभपरिवृढः पातु मां पातकेभ्यो
यस्याद्यापि भ्रमति भुवने कीर्तिगङ्गाप्रवाहः ॥ ४ ॥ mandā

स्मार्तं वचः क्वचन यद् समयोपयोगि
प्रोक्तं *समस्तविदुषां तद् अदूषणीयम्।
सोमस्य मन्मथविलासविशेषकस्य
किं नाम लाञ्छनमृगः कुरुते न *लक्ष्मीम् ॥५॥ vasa
प्रत्यन्तरं न पुनर् अस्त्य् अमुना क्रमेण
कुत्रापि किंचन जगत्य् अपि निश्चयो मे।
किंत्व् *आद्यसत्कविपदाहतबीजमुष्टिः
*सिक्ता मया मतिजलेन जगाम वृद्धिम् ॥६॥ vasa
चत्वारीह सहस्राणि तत्परं षट् शतानि च।
ग्रन्थस्यास्य मया मानं। गणितं श्लोकसंख्यया ॥७॥
*शरबाणतरणिवर्षे। रविकरवदि फाल्गुने तृतीयायाम्।
जीर्णोद्धार इवासौ। प्रतिष्ठितो ऽधिष्ठितो विबुधैः ॥८॥ ār

# A BRIEF GLOSSARY

This is restricted to three classes of words:—

1. Words which are not given at all in the minor St. Petersburg Lexicon (=pw). These are marked by me with a dagger (†).

2. Words marked with a star (*) in pw, as being not quotable; or words used in a certain meaning (marked with a star), for which words in that meaning no occurrence was quotable. These words or these meanings are marked by me with a star.

3. Words which are given in pw as ἅπαξ εἰρημένα, or as rare words. Some grammatical irregularities have been added.

अचर, *law, 125, 23.

*अगरु, same as अगुरु, Amyris Agallocha, 46, 5.

अज्ञन, n. of a tree, 81, 3 (cp. Jataka I, 331, 20).

†अनर्थप्रचालनं, see †प्रचालनं.

†अनुद्धानः, 285, 21 not bathed? †अनुद्धानपादः, 286, 5 without having bathed my feet? *Hermann Jacobi* says that in Marāṭhī both उधान and उधाण mean spring tide, and the extraordinary flow at the equinoxes; for उद्धान, pw, Nachtrag 5, gives from Hemacandra's Pariśiṣṭaparvan I, 223 the signification 'ubergehend vor Freude (Augen)'.[1]

अपद्वार, side-door, 210, 22.

अपवरक, see †कारापवरक.

अभिग्रह, see सुकुमारिकाभिग्रह°.

अभ्युपपत्ति, †friendly reception, shelter, 164, 6.

अवज्ञायते, incorrect passive for active voice, 205, 24.

†अशोकवर्ति, an aśoka-roll, a kind of sweetmeats, 81, 14. pw has '*अशोकवर्तिका f. ein best. Gericht Gal.' *Schiefner*, Melanges asiatiques tirés du Bull. de l'Ac. Imp. des Sciences de St-Pétersbourg, tome vii, p. 720, last line, mentions a sweetmeat 'Kummerloswender', giving the Tibetan equivalent in the footnote. This would point to a Sanskrit word अशोकवर्तिन. But as sweetmeats in India are often put in the form of a वर्ति, I suppose that वर्तिन is a blunder

[1] But *Jacobi* thinks it impossible to separate our anuddhānapāda from Gujerati udhānapāyā, *unsteady, eccentric, odd* (Pariśiṣṭap. I, 223 he translates uddhānalocana with verwirrten Blickes). Moreover, he calls my attention to the popular belief prevailing among the Hindus, that bhūtas and rākṣasas have their feet turned backwards (cp. e.g. *Crooke*, Pop. Rel., p. 149; *Mary Frere*, Old Deccan Days, p. xv). But I can see no good sense in our passage with this explanation.

for **वर्ति**. My friend, Mr. *F. W. Thomas*, informs me that the beginning of the Tibetan equivalent, viz. smya (or mya). ṅan. med., is the regular equivalent of **aśoka**, and sgyur = vart.

†**अश्वचलस्था** (so also Hamb. MSS.), horses' stable? 276, 15. Cp. †**परिचा**.

**अस्**, **अस्ति**, with **सम्**, †to be indeed (pw sein, geben, existieren SARVAD. 9, 15), 133, 29; 140, 21.

†**अस्थ्यन्त** (**वैर**), going to the very bones, i. e. implacable, 280, 7.

***आपदा**, misfortune, 212, 22.

**आप्यायना**, satiety, 78, 19.

**आयुक्त**, an official, 179, 33.

†**आसुरीवृष्टि** (cp. Tantrākhyāyika, whence this word is taken), she-devil rain, i. e. excessive rain, 34, 15.

†**उचिपिटि**, mulberry tree (cp. Hertel, Wiener Zs. f. d. Kunde des Morgenl., XX, 402 f.), 101, 15.

†**उत्सङ्ग**, the roof of a house (Apte), 148, 15.

†**उद्धुषित**, horripilated, in **सततोद्धुषितगात्र** 91, 12, and **पुलकोद्धुषितशरीर** 215, 22 (pw ***उद्धुषण** n. Haarsträubung).

†**उपधारिन्**, bearing (another's form or shape), 55, 11.

†**ऋतुग्रहण**, dwelling in a house during the rainy season, 137, 2.

**कर्तृ**, the Doer, †a genius who regulates fate (properly the representative of acting man), 157, 21; 158, 13; 162, 1. 11. Cp. **विधातृ**.

**कर्मन्**, Deed, †the personified deeds which a man has performed in previous existences, 157, 24; 158, 16; 162, 3. 13.

**कल**, sweet, melodious, 181, 11.

**काकरवर्ग**, a word of unknown meaning. Tantrākhyāyika has **kākaravaḥ**. 4, 21.

†**कारापवरक**, inner room of a prison, 120, 19. Cp. Pāli **ovaraka**, above, p. xlvi f.

**किंवृत्त**, a word of unknown meaning, taken from the Tantrākhyāyika. 4, 21.

†**किंचित्** for **कंचित्**, 236, 24.

†**कूतिक** or **कूतिका**, some malignant winged creature, 190, 15.

**कृ** with **उप**, 90, 20; 231, 20. See the forthcoming English translation and the variants.

**कृकालिका**, some bird, 192, 14. 16; 193, 1; 197, 3.

**क्लृप्** with **वि**, suppose, 218, 25.

†**क्रमयोगात्** = **क्रमात्**, in course of time, gradually (pw **क्रमयोग** Reihenfolge), 122, 9.

†**क्रिया**, limb, 218, 21; 221, 16. (In the Tantrākhyāyika **असंजातक्रियै** occurs twice in the sense of **असंजातपक्ष**, whose wings had not yet grown, and as a variant of that word.)

†**खेटयते** (**अरघट्टं**), to set in motion (a Persian wheel), 244, 18. According to *Jacobi*, this seems to be a metaphorical expression. Guzerati **khedavuṃ** means to till, to cultivate; to navigate. The Persian wheel is set in motion by an ox under the superintendence of a man. The man, so to say, 'ploughs with the Persian wheel.'

†**गोष्ठिककर्म** (wrong form for **गौष्ठिक°**), work or trade for a company, 262, 18; 263, 2.

**ग्रास**, †neuter (also in Hamb. MSS.)

mouthful, food, 233, 1 (=stanza IV, 20).

*चतुर्जातक, †a sort of spice (pw eine best. Verbindung von vier Stoffen), 81, 14.

†चन्द्रमती, n. pr., prākṛtism for चन्द्रवती, 148, 4.

चर् with प्र, caus., †deceive, dupe, 80, 22. (The Tantrākhyāyika has प्रक्रामयसि, evidently in the same sense, in tale IV, ii.)

†चरणमलित, soiled by foot-steps, 140, 24 (pw मलिनित besudelt Bâlar. 153, 5).

चिर्भिटिका, 21, 4, and †चिर्भिटी, 20, 20, a sort of cucumber.

चुल्ली, fire-place, 288, 8.

†चेलक (pw चेल Gaut.), cloth, 75, 23.

†जीवितमात्रसार, see °सार.

*झुण्ट, shrub, bush, 170, 10.

तं, prākṛtism for तत्, 39, 23 (? see सूत्र); 150, 17; 235, 2.

तॄ with उद् for तॄ with अव, descend, prākṛtism (cp. e.g. *Jacobi* in his Preface to Hemacandra's Pariśiṣṭaparvan, p. 9), 93, 12; 131, 11.

त्रिंशति (षट्त्रिंशतिर्) for त्रिंशत्, 271, 23.

दाति, gift, offering, in षण्मासान्तपिच्छकदानदात्या (most MSS. °दान्या), 199, 22 (pw only हव्यदाति).

†दुर्दुर, frog, MSS., 222, 13; 223, 14. Perhaps this form belongs to the author, as u and a are confounded in some other cases (कुटम्ब, अगरु; cp. लुण्ठ), not only in our text, but also in other MSS. of North-western India.

†दुष् with परि (ex conj., MSS. परिद्रुह्यति), to become wholly bad, hostile to, 59, 3.

देवमार्ग, anus, 2, 9; 53, 10.

देवानां प्रिय, †dear to the gods, as title of a king, and, by pun, stupid (Hemacandra, Pariśiṣṭaparvan II, 374, and pw s. v. देवानांप्रिय), 104, 2.

धा with आ; वचनम्, approve, 165, 2 (or confused with अवधार्य ?); स्वरूपम्, assume (confused with आस्थाय ?), 284, 12.

नमश्रवणे, see श्रवण.

नघुष, wrong form occurring in Jain works for नहुष, 227, 20.

नश् with वि (this reading, only with a blunder: vinaṣṭāh, also in Hamb. MSS.), p. p., = शीलविनाशं (शीलविप्लवं, शीलखण्डनं) कृतवती, †destroyed her chastity, sinned (carnally), 287, 23.

नास्तिक, one who says 'there is not', †a Jain (according to a gloss in MS. bh), 55, 17.

*निस्रावक (MSS. निश्रावक), the scum of boiled rice, 260, 24.

पञ्चष, five or six, 76, 10.

†पटोला, a species of cucumber (pw *पटोली and पटोलिका), 100, 28.

†पथ्यदन, viaticum, 81, 3.

पद् with सम्, see संपन्न.

†परित्रा, shelter (r. त्रा, formed like परिखा; cp. †अश्वचलस्था), 235, 5.

†परिवर्तकम् for परिवर्तम् (Whitney, § 995 b), turning round, 68, 2.

*परिश्रय, refuge (reading of the original Pancatantra प्रतिश्रय), 66, 5.

पाक्षिक belonging to one's party, †an ally ? 232, 10.

†पुलकोद्घुषितशरीर, see †उद्घुषित.

†पुष् with अव, to diminish (v. r.)—cp. glosses in MSS. bh and ψ—82, 18.

†प्रचालन (यत् प्रचालयति तत्), stirring up (misfortune), 271, 6.

प्रतिशब्द, echo, 207, 14.

†प्रत्यादर्श, confounding example or lesson (दर्शितः in the same pāda shows that प्रत्यादर्श is not a false reading for प्रत्यादेश, as pw takes it to be), 203, 23.

†प्रत्युत्पद्, tripping gait? 141, 12.

प्रदेष्टृ, chief justice? (so pw), 180, 2.

†प्रधानपुत्रायमाण, having become (!) an excellent son, 107, 15.

प्ररोह in वटप्ररोह, †an aerial root, 284, 6.

प्रशास्तृ, an official who pays by order of the king? (pw Anweiser; Bühler, chief justice), 180, 2.

प्रिय, see देवानां प्रिय.

बाहु, *fem., arm, 99, 24.

बिल, hole, cavern, used as †masculine in address, 218, 15, whereas in the following line it has the usual gender.

†बूट (Prākrt वोड and वोडियः, Leumann, ZDMG., LVII, 665, note), cut, rent, torn (in n. pr. बूटकर्ण), 131, 26, &c.

†ब्रह्महृदय, gold, money (from the Tantrākhyāyika), 110, 12. Cf. यागेश्वर.

†भगवद्विदितम्, adv., at sight of the Holy One (pw विदितम्, mit Wissen,—von), 96, 6.

भविष्यत्, †having favourable prospects (cp. भविष्णु 3 in pw), 225, 27.

भस्माङ्ग, †having smeared his body with ashes, 24, 10.

भाषा, †same as रागिणी, a modification of a musical mode (pw *eine bestimmte Rāgiṇī), 271, 23.

भास? (pw ein best. Raubvogel Āpast.; Apte: a cock; a vulture), 180, 13.

भू, caus. with †संपरि, reflect, 231, 26.

मनुष्य, †a mortal being (elephant), 186, 8.

†मलित, see चरणमलित.

महत्तम, †same as गुरु, an elderly relative, 106, 1.

†माठपत्य (MSS. māṭhāpatya; Whitney, § 1211 a), the state or dignity of prior of a monastery, 136, 4.

†यागेश्वर, Lord of sacrifice, i. e. gold (apparently a slang expression like ब्रह्महृदय, q. v.), 25, 15.

योगिन्, †skilful, cunning (see pw s. v. योग 1 h), 154, 5.

लड्डुक, 'a round ball of sugar, wheat or rice-flour, ghee, and spices' (Apte), 81, 14.

लल् with †समुद्, jump, shake the body up, 87, 19.

लुण्ठ् with उद् (best MSS. उल्लंठितानाम्; cp. †ढुंढ्), †to search thoroughly in order to plunder (pw 7, 372 quotes Damayantīkathā 168), 120, 7.

वंशज, †referring, belonging to his family, inflicted upon his family, 279, 17.

वटप्ररोह, see †प्ररोह.

†वणिजारकसार्थ (MSS. वणिज्जारक° and वणिज्यारक°), a commercial caravan, 73, 14. वणिजारक, as *Jacobi* informs me, is an obvious Sanskritization of Guzeratī vaṇajāro, 'a travelling merchant who carries for sale goods in a caravan.'

†विक्रापयिष्यति, fut. caus. क्री with वि (pw *क्रापयति), 63, 11.

†विच् with प्र, caus., to scatter, waste (money), 3, 10.

विधातृ, same as कर्तृ, q. v., 162, 21. 22.

वैण्य, wrong but customary spelling of our MSS. for वैन्य, patron. of वेन. (King Vena or Veṇa was killed by the sages, who by rubbing the arm of the corpse produced from it King Pṛthu—our वैण्य), 227, 17.

श्याम, *the Indian cuckoo, 180, 13. (Perhaps some distinct species of this bird is intended in our passage, as the कोकिल is mentioned before in the same compound.)

श्रवण, same as श्रमण, in नग्नश्रवण, wandering Digambara ascetic, 103, 24.

†श्रवणक, id., 102, 24; 103, 4; 107, 16.

†श्वेतभिक्षु, 181, 22. *Jacobi* informs me that this word is not an equivalent of श्वेताम्बर, and that in the Samarāiccakahā a पण्डरभिक्खु is mentioned, whose principal व्रत seems to have been to avoid all the products of the cow: गोरसवज्जणाइओ नियमकिरियाकलावो.

†सङ्कृत, wrong spelling of our author for शङ्कृत (pun with असङ्कृत), 56, 12.

†सततोद्धुषितगात्र, see †उद्धुषित.

सत्ता in छिन्नरत्नसत्तासंशयः, existence, †presence, 121, 6.

संपन्न, †sweet thing, milk (cp. pw संपन्नक्षीरा, adj. f. wohlschmeckende Milch gebend), 255, 5.

संप्रहार, †a wrong Sanskritization of Prākṛt संपहार, Skt. †संप्रधार (for संप्रधारण or °णा), deliberation, 166, 2; 184, 5.

°सार, destroying, 164, 12.

†सुकुमारिकाभिग्रहलब्धव्रतादेशः, 258, 25. Perhaps having received the advice of a promise to take the vow (of chastity) in his youth. I take सुकुमारिक as a wrong formation for सौकुमारक, adj. अभिग्रह, vow, pw Nachtr. 2. But this explanation is *very* uncertain. सुकुमारिकाभिग्रह is perhaps a technical expression.

†सुहस्तिका, same as खनित्रक, a small shovel, small spade, or, small pickaxe, 140, 22; 142, 1.

सूत्र, *masc., string (or तं is Prākṛtism for तत्, q. v.), 39, 22 f.

†सौधोत्सङ्गावलम्बित, see †उत्सङ्ग.

स्थगिका (Prākṛt थइया, *Jacobi*, Ausg. Erzählungen, glossary, p. 111, 'etwa "Knappsack"'), betel-box, 69, 12.

स्रस्तर, †rug (of an elephant), 185, 12.

†हले, vocative case of a Prākṛt word, my (female) friend, 148, 8.

# ADDITIONS AND CORRECTIONS

The angle (‸) stands always *before* a sandhi-vowel, if the initial vowel of the second word is long. Wherever the initial vowel of the second word is short, the angle stands exactly *under* it.

Examples: तथाकाशे = तथा + आकाशे; तथान्यद् = तथा + अन्यद्.

Down to p. 46, the small vertical stroke which separates stems of a compound is not always set with regard to the quantity of the following initial vowel. From p. 47 on, it stands *before* a long vowel, if the initial vowel of the following stem is long, and exactly over the contracted vowel, if the initial vowel of the following stem is short. In case of consonants we have endeavoured to set the horizontal stroke as exactly as possible.

Examples: p. 185, 13 f, विद्युत् + प्रभा + पटल + संश्लिष्ट + सजल + जलद् + सदृशं; प्रावृट् + काल + प्रबल + चपल + मरीचि + विद्युन् + निवह + संघट्ट + गम्भीर + भैरव + रवं; l. 15, प्रवर + भुजग + इन्द्र + आकार + संवेष्टित + करम्.

For the benefit of beginners, we add here the cases in which, down to p. 46, the separations should be more exact. Read—

3, 5 °पूर्ण°; 7 परिखा*°; 4, 1 °च°; 34, 15 °दुर्भिक्षासुरी°; 35, 3 क्षताश्रयौ; 7 कापुरुषा; 8 सत्पुरुषा; 14 क्षुधासमम्; 36, 1 महाविषो; 12 कदाचन; 38, 1 शिलातल°; 2 परमहर्ष°; 39, 6 शिरश्छेदम्; 9 तच्छिरश्चिह्नं; 10 मिथ्यावादिन; 11 शिलातले; 21 °मुक्ताहार°; 46, 16 °दोलासंवादि°.

A few minor errata follow. Some refer to types which are broken in some copies, but good in others.

| | | |
|---|---|---|
| 7, 12 | read | उद्दीरितो |
| 34, 15 | ,, | एवासुरी° |
| 35, 14 | ,, | चापत्यसमः |
| 40, 19 | ,, | सविनयास् |
| 46, 18 | ,, | °ग्राहिणीं |
| 50, 3 f | ,, | आदायोपस्थितः |
| 70, 1 | ,, | 'चाभ्यन्तरा |
| 104, 16 | ,, | यथासौ |
| 128, 12 | ,, | यन् न |
| 129, 30 | ,, | अथवा |
| 130, 8 | ,, | दुःसाधम् |
| 130, 30 | ,, | मैत्रीं |
| 142, 4 | ,, | भो |

154 put apos. on line 25, and śikha on line 30.

| | | |
|---|---|---|
| 183, 23 | read | तच् |
| 199, 19 | ,, | षण्मासे |

200, head-line, at left, add 'Tale vii: Gold-giving birds'.

| | | |
|---|---|---|
| 217, 17 | ,, | मूर्खो |
| 218, 13 | ,, | तूष्णींभूय |

228, 13 insert half-stroke after वैश्वदेवान्ते

| | | |
|---|---|---|
| 258, 21 | read | मनोभवाभिधे, |
| 259, 1 | ,, | खदिरमयांल् |
| 266, 6 | ,, | जलकुम्भं |
| 276, 7 | ,, | उत्पत्स्यते |

# HARVARD ORIENTAL SERIES

**Harvard Oriental Series.** Edited, with the coöperation of various scholars, by CHARLES R. LANMAN, Professor of Sanskrit in Harvard University. Published by Harvard University, Cambridge, Massachusetts, U. S. A. — To be bought, in America, of GINN & COMPANY, 29 Beacon Street, Boston, Mass.; in England, of GINN & Co., 9 St. Martin's Street, Leicester Square, London, W.C; in Continental Europe, of O. Harrassowitz, Leipzig. — The price of volume 3 is $1.20; the price of each of the volumes 1, 2, 4, 5, 6, 9, and 11 is $1.50; all these, post-paid. Price of volumes 7 and 8 (not sold separately) is $5. Price of volume 10 is $6. One dollar ($1.00) = Marks 4.18 = francs or lire 5.15 = 4 shillings and 1 penny = 3 rupees. — Volume 10 is royal 4° (32 cm.); volumes 7 and 8 are super-royal 8° (28 cm.); the rest are royal 8° (26 cm.). All are now bound durably in full buckram with gilt top.

**Volume 1. Jataka-Mala,** by Arya Çūra. Edited in Sanskrit (in Nāgarī letters) by Professor H. KERN, University of Leiden, Netherlands. 1891. Pages, 270. (North Buddhistic stories. They have been translated by Speyer, London, 1895, Frowde.)

**Volume 2. Sankhya-Pravachana-Bhashya,** or Commentary on the exposition of the Sankhya philosophy, by Vijñāna-Bhikshu. Edited in Sanskrit (in Roman letters) by Professor R. GARBE, University of Tubingen, Germany. 1895. Pages, 210. (Translated by Garbe, Leipzig, 1889, Brockhaus.)

**Volume 3. Buddhism in Translations.** By the late HENRY CLARKE WARREN, of Cambridge, Mass. 1896. Fourth issue, 1906. Pages, 540. (Over 100 extracts from the sacred books of Buddhism, so arranged as to give a connected account of the legendary life of Buddha, of his monastic order, of his doctrines on karma and rebirth, and of his scheme of salvation. The work has been widely circulated and has been highly praised by competent authorities.)

**Volume 4. Karpura-Manjari.** A drama by the Indian poet Rājaçekhara (900 A.D.). Critically edited in the original Prākrit (in Nāgarī letters), with a glossarial index and an essay on the life and writings of the poet, by STEN KONOW, of the University of Christiania, Norway; and translated into English with notes by C. R. LANMAN. 1901. Pages, 318.

**Volumes 5 and 6. Brihad-Devata** (attributed to Çāunaka), a summary of the deities and myths of the Rig-Veda. Critically edited in the original Sanskrit (in Nāgarī letters), with an introduction and seven appendices (volume 5), and translated into English with critical and illustrative notes (volume 6), by Professor A. A. MACDONELL, University of Oxford. 1904. Pages, 234 + 350 = 584.

**Volumes 7 and 8. Atharva-Veda.** Translated, with a critical and exegetical commentary, by the late Professor W. D. WHITNEY, of Yale University; revised and brought nearer to completion and edited by C. R. LANMAN. 1905. Pages, 1212 (The work includes: critical notes on the text, with various readings of European

and Hindu MSS.; readings of the Cashmere version; notices of corresponding passages in the other Vedas, with report of variants; data of the scholiasts as to authorship and divinity and metre of each verse; extracts from the ancillary literature concerning ritual and exegesis; a literal translation; and an elaborate critical and historical introduction.)

**Volume 9. The Little Clay Cart** (Mṛcchakaṭika), a Hindu drama attributed to King Shūdraka. Translated from the original Sanskrit and Prākrits into English prose and verse by A. W. RYDER, Instructor in Sanskrit in Harvard University. 1905. Pages, 207.

**Volume 10. Vedic Concordance:** being an alphabetic index to every line of every stanza of the published Vedic literature, and to the liturgical formulas thereof, that is, an index (in Roman letters) to the Vedic mantras, together with an account of their variations in the different Vedic books. By Professor MAURICE BLOOMFIELD, of the Johns Hopkins University, Baltimore. 1906. Pages, 1102.

**Volume 11. The Pancha-Tantra** (a collection of ancient Hindu tales) in the recension (called Panchākhyānaka, and dated 1199 A.D.) of the Jaina monk, Pūrṇabhadra. Critically edited in the original Sanskrit (in Nāgarī letters: and, for the sake of beginners, with word-division) by Dr. JOHANNES HERTEL, Oberlehrer am Koeniglichen Real-Gymnasium, Doebeln, Saxony. 1908. Pages, 344.